# अथ श्रीमद्गर्गाचार्यसंहिता दशखण्डात्मिका-

## माहात्म्यसमेता।


कंसवध.
उग्रसेन राज्या-
भिषक.
जरासन्ध.
कृष्ण व बलराम.
युद्धप्रसंग.


दुर्योधन.
माध्विपाक.


ब्रह्मदेव.
ज्योतिष्मती तपश्चर्या करतीहै

# अथ गर्गसंहितास्थविषयाणामनुक्रमणिकाऽऽरभ्यते ।


## अथ गर्गसंहितामाहात्म्यम् ।

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| हरपार्वतीसंवादे गर्गसंहिताप्रशंसा | १ | १ | १ |
| गर्गसंहितोत्पत्तिवृत्तांतः, तत्र प्रतिवाहुकथा | २ | ” | २ |
| संहिताश्रवणविधिवर्णनम् | ३ | २ | १ |
| प्रतिबाहुराज्ञः गर्गसंहिताश्रवणात्पुत्रप्राप्तिफलं संहितायाः सर्वोत्कृष्टत्ववर्णनम् | ४ | ” | २ |

## अथ प्रथमंगोलोकखंडम् ।

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| नारदबहुलाश्वसंवादप्रारंभः, तत्रप्रथमं श्रीकृष्णमाहात्म्यवर्णनम् | १ | ४ | १ |
| श्रीगोलोकधामवर्णनम् | २ | ” | २ |
| व्रजमंडलेश्रीकृष्णस्यागमनोद्योगवर्णनम् | ३ | ६ | १ |
| सर्वेषामागमनोद्योगेप्रश्नः | ४ | ७ | १ |
| भगवदागमनोद्योगपूरणम् | ५ | ८ | २ |
| कंसस्यपूर्वजन्मवृत्तांतः–तत्रकंसबलवर्णनम् ... | ६ | ९ | २ |
| कंसस्यादिग्विजयवर्णनम् ... | ७ | ११ | १ |
| राधिकाजन्मवर्णनम् .... | ८ | १२ | १ |
| वसुदेवविवाहवर्णनम् ... | ९ | १३ | १ |
| बलभद्रजन्मवर्णनम ... | १० | ” | २ |
| श्रीकृष्णजन्मवर्णनम् ... | ११ | १४ | २ |
| नन्दमहोत्सववर्णनम् ... | १२ | १६ | २ |
| पूतनामोक्षवर्णनम् ... | १३ | १७ | २ |
| शकटासुरतृणावर्तमोक्षः ... | १४ | १८ | २ |
| यशोदायाविश्वरूपदर्शनंश्रीकृष्णनामकरणंच ... | १५ | २० | १ |
| राधिकाविवाहवर्णनम् ... | १६ | २१ | २ |
| दधिचौर्यवर्णनम् ... | १७ | २३ | २ |
| मृद्भक्षणेब्रह्मांडदर्शनम् ... | १८ | २४ | २ |
| यमलार्जुनभंजनवर्णनम् ... | १९ | २५ | १ |
| भगवज्जठरगतदुर्वासोब्रह्मांडगोलोकदर्शनं, तस्यचश्रीनंदस्तोत्रकरणम् | २० | ” | २ |

इति प्रथमंगोलोकखंडंसमाप्तम् ।

## अथ द्वितीयंवृंदावनखंडम् ।

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| नंदसनंदसंवादःतत्रकालिंद्याःव्रजमंडलेप्रत्यागमनवर्णनम् ... | १ | २८ | २ |
| गिरिराजगोवर्द्धनोत्पत्तिकथनम् | २ | २९ | २ |
| गोवर्द्धनपरिसरेकालिंदीगमनवर्णनम् | ३ | ३१ | १ |
| वत्सासुरमोक्षवर्णनम् ... | ४ | ” | २ |
| बकासुरमोक्षवर्णनम् ... | ५ | ३२ | २ |
| अघासुरमोक्षः ... | ६ | ३३ | २ |
| ब्रह्मणावत्सवत्सपालहरणवर्णनम् | ७ | ” | २ |
| कृष्णस्यवत्सपालादियथावेषरूपधारणं ब्रह्मणःश्रीकृष्णदर्शनञ्च | ८ | ३४ | २ |
| ब्रह्मस्तुतिः ... .... | ९ | ३५ | २ |
| नंदकृतंशांत्यर्थदानम् ... | १० | ३७ | २ |
| श्रीकृष्णगोचारवर्णनम् ... | ११ | ” | ” |
| धेनुकासुरमोक्षवर्णनम् ... | १२ | ३८ | १ |
| कालियदमनंदावाग्निपानंच... | १३ | ३९ | १ |
| शेषोपाख्यानम् ... ... | १४ | ४० | १ |
| कालियोपाख्यानम् .... | १५ | ४१ | १ |
| राधाकृष्णप्रेमवर्णनम् .... | १६ | ” | २ |
| तुलसीपूजनम् ... ... | १७ | ४२ | २ |
| राधाकृष्णसंगमवर्णनम् .... | १८ | ४३ | २ |
| राधायाःश्रीकृष्णचन्द्रदर्शनम् | १९ | ४४ | २ |
| रासक्रीडावर्णनम् ... | २० | ४५ | २ |
| गोवर्द्धनबहुलतालकुमुद्वनमधुवनविहारवर्णनम् ... ... | २१ | ४६ | २ |

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| रासक्रीडा–कामवनकोकिलवनाविहार-वर्णनम् ... .... | २२ | ४७ | २ |
| रासक्रीडायांराधयासहविहारः | २३ | ४८ | २ |
| लोहजंघवनविहारेशंखचूडवधः | २४ | ४९ | २ |
| आसुर्युपाख्यानम् ... | २५ | ५० | २ |
| शिवासुर्योर्गोपीत्वप्राप्त्याकृष्णसेवयाभग-वद्वरप्राप्तिवर्णनम् ... | २६ | ५१ | २ |
| शंखचूडोपाख्यानेविरजानदीसमुत्पत्ति-वर्णनम् ... ... | २७ | ५२ | २ |

इति द्वितीयंवृन्दावनखंडं समाप्तम् ।

अथ तृतीयंगिरिराजखण्डम् ।

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| गिरिराजगोवर्द्धनपूजाविधिवर्णनम् | १ | ५५ | २ |
| गिरिराजमहोत्सववर्णनम् ... | २ | ५६ | २ |
| श्रीकृष्णेनगोवर्द्धनोद्धरणम् .... | ३ | ५७ | १ |
| इंद्रकृतश्रीकृष्णाभिषेकवर्णनम् | ४ | ५८ | २ |
| नंदवृषभानुभ्यांसहगोपानांकृष्णकृतेविवाह-वर्णनम् ... ... | ५ | ” | २ |
| सर्वगोपकृतहरिवैभवपरीक्षा | ६ | ५९ | २ |
| गिरिराजगोवर्द्धनस्थसर्वतीर्थवर्णनम् | ७ | ६० | १ |
| तीर्थविशेषैर्गिरिराजस्यांगकल्पनापूर्वकवि-भूतिवर्णनम् ... | ८ | ६१ | १ |
| गिरिराजस्योत्पत्तिवृत्तांतः ... | ९ | ” | २ |
| गिरिराजमाहात्म्येविजयब्राह्मणराक्षस-योरितिहासवर्णनम् | १० | ६२ | २ |
| राक्षसत्वमोक्षानंतरंसिद्धस्यपूर्ववृत्तांतः | ११ | ६३ | २ |

इति तृतीयं गिरिराजखंडंसमाप्तम् ।

अथ चतुर्थंमाधुर्यखण्डम् ।

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| कृष्णदुर्वाससोरद्भुतप्रभावपूर्वकश्रुति-रूपवर्णनम्... ... | १ | ६५ | २ |
| ऋषिरूपोपाख्यानम् ... | २ | ६६ | २ |
| मैथिलीगोपीनामुपाख्यानम्... | ३ | ६७ | १ |
| कौशलगोपिकोपाख्यानम् ... | ४ | ” | २ |
| अयोध्यास्थगोपिकोपाख्यानम् | ५ | ६८ | १ |
| अयोध्यावासिनीनांकृष्णेनसहविवाहो-द्योगः ... ... | ६ | ” | २ |
| अयोध्यावासिनीनांकृष्णेनपरिग्र० | ७ | ६९ | १ |
| यज्ञसीतागोपिकोपाख्यानम् | ८ | ७० | १ |
| यज्ञसीतोपाख्यानेएकादशीमाहात्म्य-वर्णनम्... ... | ९ | ७१ | १ |
| पुलिंदकोपाख्यानम् ... | १० | ७२ | १ |
| रमावैकुंठश्वेतद्वीपोर्ध्ववैकुंठाजितपदश्री-लोकाचलवासिनीसखी-नामुपाख्यानम् ... | ११ | ” | ” |
| होलिकोत्सवेदिव्यात्रिगुणवृत्तिभूमिगोपी-नामुपाख्यानम् ... | १२ | ७३ | १ |
| देवजनस्त्रीणामुपाख्यानम्... | १३ | ” | २ |
| जालंधरीणामुपाख्यानम् ... | १४ | ७४ | १ |
| सौभरिमांधातृसंवादःतत्रबर्हिष्मतीपुरंध्र्य-प्सरःसुतलवासिनीनागेंद्रकन्योपा-ख्यानम्... .... | १५ | ” | २ |
| यमुनाकवचम् ... | १६ | ७५ | १ |
| यमुनास्तवराजः ... | १७ | ” | २ |
| यमुनापटलपद्धतिवर्णनम् ... | १८ | ७६ | १ |
| यमुनासहस्रनामस्तोत्रम् ... | १९ | ७८ | २ |
| प्रलंबवधवर्णनम्... ... | २० | ७९ | २ |
| दावाग्निपानंविप्रपत्नीदर्शनम् | २१ | ८० | १ |
| नन्दादीनांवैकुंठदर्शनम् .... | २२ | ” | २ |
| सुदर्शनोपाख्यानम् ... | २३ | ८१ | १ |
| व्योमासुरारिष्टासुरवधवर्णनम् | २४ | ” | २ |

इति चतुर्थमाधुर्यखण्डंसमाप्तम् ।

अथ पंचमंमथुराखण्डम् ।

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| कंसस्यश्रीकृष्णानयनेमंत्रकरणम् | १ | ८३ | २ |
| केशिदैत्यस्यवधः ... | २ | ८४ | १ |

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| वृंदावनंप्रत्यक्रूरागमनम् .. | ३ | ” | २ |
| श्रीकृष्णस्यमथुरांप्रतिप्रयाणम् | ४ | ८५ | २ |
| मथुराप्रवेशः ... ... | ५ | ८६ | २ |
| मथुरादर्शनंतत्ररजकशिरश्छेदधनुर्भगवर्णनम् ... ... | ६ | ८७ | २ |
| कुवलयापीडवधः, रंगप्रवेशः, चाणूरमुष्टिकाभ्यांसहकृष्णबलरामयोर्मल्लयुद्धवर्णनम् ... ... | ७ | ८८ | २ |
| कंसवधवर्णनम् ... ... | ८ | ९० | १ |
| कृष्णेनयदूनांपांडवानांचसौख्यक० | ९ | ९१ | १ |
| कंसरजकवायकसुदाम्नांपूर्वजन्मकर्मवर्णनम् ... ... | १० | ९२ | २ |
| सैरंध्रीकुवलयापीडयोर्वृत्तांतः | ११ | ९३ | १ |
| चाणूरादिकंसभ्रातृपंचजनपूर्वाख्यानम् | १२ | ” | २ |
| वृन्दावनंप्रत्युद्धवागमनम् ... | १३ | ९४ | २ |
| नंदराजोद्धवमेलनंकृष्णसंदेशकथनश्च | १४ | ९५ | २ |
| राधादर्शनमुद्धवकृतराधाप्रशंसाकृष्णदत्तपत्रसमर्पणश्च ... | १५ | ९६ | २ |
| राधागोप्याश्वासनम् ... | १६ | ९८ | १ |
| श्रीकृष्णस्मरणेसर्वगोपीवाक्यानि | १७ | ” | २ |
| उद्धवस्यगोप्याश्वासनपूर्वकंश्रीकृष्णंप्रत्यागमनम् ... | १८ | १०० | १ |
| श्रीकृष्णस्यनंदगोकुलंप्रतिगमनम् | १९ | ” | २ |
| राधयासहरासोत्सवेऋभुमोक्षवर्णनम् | २० | १०१ | २ |
| ऋभुचरित्रनारदस्योपाख्यानम् | २१ | १०३ | १ |
| नारदचरित्रम् ... ... | २२ | १०४ | १ |
| व्रजयात्रायांश्रीकृष्णागमनम् | २३ | १०५ | १ |
| कोलदैत्यवधवर्णनम् ... | २४ | ” | २ |
| मथुरामाहात्म्यवर्णनम् ... | २५ | १०८ | १ |


इति पंचमंमथुराखण्डंसमाप्तम् ।

## अथ षष्ठंद्वारकाखण्डम् ।


| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| जरासंधपराजयवर्णनम् ... | १ | ११० | २ |
| कालयवनवधमुचुकुन्दवरदानद्वारकावासवर्णनम् ... | २ | १११ | २ |
| बलदेवविवाहोत्सववर्णनम् .... | ३ | ११२ | २ |
| रुक्मिणीपरिणयायकुंडिनपुरयानम् | ४ | ११३ | १ |
| रुक्मिण्याअम्बिकालयंप्रतिगमनमम्बिकापूजाच ... | ५ | ११४ | २ |
| रुक्मिणीहरणेयदूनांविजयवर्णनम् | ६ | ” | २ |
| रुक्मिणीविवाहःरुक्मिवैरूप्यकरणश्च | ७ | ११५ | २ |
| सर्वमहिषीणांविवाहवर्णनम् | ८ | ११६ | २ |
| श्रीकृष्णस्यद्वारकागमनकारणव० | ९ | ११७ | २ |
| द्वारकास्थमुख्यतीर्थवर्णनेगोमत्युपाख्यानंचक्रतीर्थमाहात्म्यञ्च... | १० | ११८ | १ |
| चक्रतीर्थोत्पत्तौगजग्राहयोर्मोक्षवर्णनम् | ११ | ११९ | १ |
| शंखोद्धारतीर्थमाहात्म्यम्.... | १२ | ” | २ |
| प्रभाससरस्वतीबोधिपिप्पलगोमतीसिंधुसंगमतीर्थमाहात्म्यम् | १३ | १२० | १ |
| रत्नाकररैवतकाचलमाहात्म्यम् | १४ | १२१ | १ |
| कपिटंकनृगकूपगोपिभूमिमाहात्म्यम् | १५ | ” | २ |
| सिद्धाश्रममाहात्म्येराधारूपदर्शनम् | १६ | १२२ | २ |
| श्रीराधाकृष्णसमागमःराधाप्रेमप्रकाशश्च | १७ | १२३ | २ |
| सिद्धाश्रमेरासोत्सववर्णनम्... | १८ | १२४ | २ |
| द्वारकाप्रथमदुर्गस्थलीलासरोवरहरिमंदिरज्ञानतीर्थकृष्णकुण्डबलभद्रसरोवरगणेशतीर्थदानस्थलमायातीर्थमाहात्म्यवर्णनम् ... | १९ | १२५ | २ |
| द्वारकाद्वितीयदुर्गस्थेंद्रतीर्थसूर्यकुंडब्रह्मतीर्थनैललोहितसप्तसामुद्रकमाहात्म्यवर्णनम् ... | २० | १२६ | २ |

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| द्वारकातृतीयदुर्गस्थपिंडारकतर्थिमाहात्म्यम् ... ... | २१ | १२७ | १ |
| सुदामविप्रोपाख्यानवर्णनम् | २२ | १२८ | १ |
| इति षष्ठंद्वारकाखंडंसमाप्तम् । | | | |
| **अथ सप्तमंविश्वजित्खण्डम् ।** | | | |
| उग्रसेनवृत्तांतेमरुतोपाख्यानम् | १ | १३१ | २ |
| प्रद्युम्नविजयाभिषेकवर्णनम् | २ | १३२ | १ |
| दिग्विजयार्थंयादवसैन्यगमनम् | ३ | १३३ | १ |
| प्रद्युम्नस्यदिग्विजयार्थंगमनम्... | ४ | ” | २ |
| कच्छकलिंगदेशविजयवर्णनम् | ५ | १३४ | २ |
| मरुधन्वमालवमाहिषदेशविजयवर्णनम् | ६ | १३५ | १ |
| गुर्जराटचेदिदेशगमनवर्णनम् | ७ | १३६ | १ |
| द्युमच्छक्तवधवर्णनम् ... | ८ | १३७ | १ |
| रंगपिंगवधशिशुपालयुद्धचेदिदेशविजयवर्णनम् ... ... | ९ | ” | २ |
| कौंकणकुटकत्रिगर्तकेरलतैलंगमहाराष्ट्रकर्णाटकविजयेकरूपदेशगमनम् | १० | १३८ | २ |
| दंतवक्त्रयुद्धेकरूपदेशविजयवर्णनम् | ११ | १३९ | २ |
| उशीनरविदर्भकुंतदरददेशविजयेऽगस्त्यकार्ष्णिज्ञानप्रस्ताववर्णनम् | १२ | १४० | २ |
| शाल्वमल्लारलंकाविजयवर्णनम् | १३ | १४१ | २ |
| श्रीवेंकटद्रविडदेशविजयवर्णनम् | १४ | १४३ | १ |
| अंगोड्डीशडामरवंगासीमकामरूपकेकयविजयवर्णनम् ... | १५ | १४४ | १ |
| जनकोपाख्यानवर्णनम् ... | १६ | ” | २ |
| मगधदेशविजयवर्णनम् ... | १७ | १४६ | १ |
| काशिकोसलोत्तरनयपालवैशालनैमिषारण्यकारूपपांचालकान्यकुब्जकाम्पिल्यविन्दुनिषधभद्रमधुशूरसेनदेशविजयवर्णनम् ... | १८ | १४७ | २ |
| कुरुदेशगमने कौरवोपाख्यानवर्णनम् ... ... | १९ | १४८ | २ |
| कारवःसहयुद्धवर्णनम् ... | २० | १४९ | २ |
| कुरुदेशविजयेकौरवसंमेलनम् | २१ | १५० | २ |
| इंद्रप्रस्थत्रिगर्तवैराटकुरुजांगलकौशांबसारस्वतसौवीराभीरसिंधुकाश्मीरजांगललक्षगांधारार्बुदम्लेच्छभौरंगदेशविजयवर्णनम् | २२ | १५१ | २ |
| करवीरदेशविजयेयक्षदेशप्रयाणवर्णनम् | २३ | १५३ | १ |
| यक्षयुद्धेगणयुद्धवर्णनम् ... | २४ | १५४ | १ |
| यक्षदेशविजयप्राग्ज्योतिषपुरविजयवर्णनम् ... | २५ | १५५ | २ |
| रंगवल्लीचैत्रदेशकिंपुरुषखण्डविजयवर्णनम् .... | २६ | १५६ | २ |
| दशार्णदेशविजयहरिवर्षखंडविजय० | २७ | १५८ | १ |
| उत्तरकुरुखंडविजयवर्णनम्... | २८ | १५९ | १ |
| मकरडिण्डिमासिंहक्रौंचत्रिशृंगदेशविजयेहिरण्यखंडविजयवर्णनम् | २९ | १६० | १ |
| मानवदेशविजयकालदेशरम्यकखंडविजयवर्णनम् .... | ३० | १६१ | १ |
| मन्मथदेशविजयकेतुमालखंडविजयवर्णनम् ... | ३१ | १६२ | १ |
| भद्राश्वखंडगमनेचंद्रावत्युपाख्यानेहृष्टदैत्यवधवर्णनम् ... | ३२ | १६३ | २ |
| ” भूतसंतापनदैत्यवधवर्णनम् | ३३ | १६४ | २ |
| ” वृकदैत्यवधवर्णनम् .... | ३४ | १६६ | १ |
| ” कालनाभदैत्यवधवर्णनम् | ३५ | १६७ | १ |
| ” महानाभवधवर्णनम् ... | ३६ | ” | २ |
| ” हरिश्मश्रुदैत्यवधवर्णनम् | ३७ | १६८ | १ |
| ” शकुनियुद्धवर्णनम् ... | ३८ | ” | २ |
| ” चन्द्रावतीयुद्धवर्णनम् ... | ३९ | १७० | १ |

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| ” चन्द्रावतीयुद्धोपाख्यानेगरुडागमनवर्णनम् ... ... | ४० | १७१ | २ |
| शकुनिदैत्यवधवर्णनम् ... | ४१ | १७३ | १ |
| शकुन्यादिपूर्वजन्मकथनेभद्राश्वखंडविजयवर्णनम् ... ... | ४२ | १७४ | १ |
| इलावृतखंडगमनेसुन्दरतपोदेशविजयेवेदनगरतपोदेशविजयेवेदनगरवर्णनम् | ४३ | ” | २ |
| इलावृतखंडगमनेवेदादिस्तुतिवर्णनम् | ४४ | १७५ | २ |
| ” रागकृतकृष्णध्यानवर्णनम् | ४५ | १७६ | २ |
| ” गंधर्वदेशविजयेवसंतमालतीकर्षणवर्णनम् ... | ४६ | १७७ | २ |
| ” देवदेशविजयेशक्रसखयुद्धवर्णनम् | ४७ | १७८ | २ |
| इलावृतखंडविजये स्वयंवरविजये प्रद्युम्नद्वारकागमनवर्णनम् | ४८ | १७९ | २ |
| यज्ञारंभेस्वजननिमंत्रणवर्णनम् | ४९ | १८१ | १ |
| उग्रसेनमहोद्येराजसूययज्ञोत्सववर्णनं | ५० | १८१ | २ |

इति सप्तमंविश्वजित्खण्डं समाप्तम् ।

## अथाष्टमंबलभद्रखण्डम् ।

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| बलदेवावतारकारणवर्णनं ... | १ | १८३ | २ |
| प्राड्विपाकदुर्योधनसंवादेसंकर्षणगमनमंत्रवर्णनं ... | २ | १८४ | १ |
| ज्योतिष्मत्युपाख्यानवर्णनं ... | ३ | १८४ | २ |
| ज्योतिष्मत्युपाख्यानेरेवत्युपाख्यानं | ४ | १८५ | २ |
| श्रीबलभद्रश्रीकृष्णजन्मोत्सववर्णनं | ५ | १८६ | २ |
| रामकृष्णव्रजलीलावर्णनं ... | ६ | १८७ | १ |
| मथुरालीलावर्णनं .. | ७ | १८८ | १ |
| द्वारकालीलावर्णनं ... | ८ | ” | २ |
| रासक्रीडावर्णनं ... | ९ | १९० | १ |
| बलभद्रपद्धतिपटलवर्णनं ... | १० | ” | २ |
| बलभद्रस्तवराजकवचवर्णनं | ११ | १९१ | २ |
| बलभद्रसहस्रनामस्तोत्रवर्णनं | १२ | १९२ | १ |

इत्यष्टमंबलभद्रखंडं समाप्तम् ।

## अथ नवमंविज्ञानखंडम् ।

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| उग्रसेनंप्रतिव्यासागमनवर्णनं | १ | १९७ | २ |
| व्यासोग्रसेनसंवादेलोकगतिनिरूपणं | २ | १९८ | १ |
| निर्गुणभक्तियोगवर्णनं ... | ३ | ” | २ |
| भक्तमाहात्म्यवर्णनं ... | ४ | १९९ | १ |
| भक्त्युत्कर्षवर्णनं... ... | ५ | २०० | १ |
| हरिमन्दिरप्रतिष्ठावर्णनं ... | ६ | ” | २ |
| राजकर्तव्यभगवत्सेवाप्रकारवर्णनं | ७ | २०१ | १ |
| महापूजाविधिवर्णनं | ८ | ” | २ |
| पूजनप्रकारवर्णनं ... | ९ | २०२ | १ |
| परब्रह्मस्वरूपनिरूपणं ... | १० | २०३ | २ |

इति नवमंविज्ञानखंडं समाप्तम् ।

## अथ दशममश्वमेधखंडम् ।

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| हयमेधचरित्रेसुमेरौगर्गवज्रनाभिसंवादव० ... ... | १ | २०६ | २ |
| कृष्णलीलावर्णनं ... | २ | २०७ | २ |
| कृष्णकथावर्णनं... ... | ३ | २०८ | १ |
| पारिजातहरणवृत्तान्तवर्णनं | ४ | २०९ | १ |
| पारिजातहरणं ... ... | ५ | २१० | १ |
| कृष्णचरित्रवर्णनं ... | ६ | २११ | १ |
| अश्वमेधयज्ञोद्योगवर्णनं ... | ७ | ” | २ |
| श्यामकर्णतुरंगदर्शनं ... | ८ | २१२ | २ |
| गर्गागमनं, दिग्विजयार्थं वीरपरीक्षणेऽनिरुद्धधैर्यश्च ... | ९ | २१३ | १ |
| रुचिमत्युग्रसेनयोःपुत्रदर्शनलालसावचनतः श्रीकृष्णेन तत्पुत्रदर्शनप्रतिज्ञाकरणं राज्ञोवासवासनस्थापनंच | १० | २१४ | १ |
| अश्वपूजनं ... ... | ११ | २१५ | १ |
| अनिरुद्धविजयाभिषेकवर्णनं | १२ | २१६ | १ |

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| यदुसैन्यनिर्गमनवर्णनं ... | १३ | ” | २ |
| अनिरुद्धप्रयाणवर्णनं ... | १४ | २१८ | १ |
| अनिरुद्धस्यविजयेइंद्रनीलकृतसत्कार-वर्णनं ... | १५ | २१९ | १ |
| चंपावतीविजयवर्णनं ... | १६ | २२० | १ |
| स्त्रीराज्यविजयवर्णनं ... | १७ | २२१ | १ |
| उपलंकागमनायाविमानारोहणं | १८ | २२२ | २ |
| राक्षसैःसहयुद्धंतत्रबकागमनंच | १९ | २२३ | १ |
| उपलंकाविजयवर्णनं ... | २० | २२४ | १ |
| भद्रावतीविजयवर्णनं ... | २१ | २२५ | १ |
| अवंतिकागमनवर्णनं ... | २२ | ” | २ |
| अवंतिपुर्यांसांदीपनिनासहानिरुद्धस्य संमेलने सांदीपनिनाभगवन्माहात्म्यकथनं ... | २३ | २२६ | १ |
| राजपुरविजयवर्णनं ... | २४ | २२७ | २ |
| बल्वलकृततुरंगहरणवर्णनं ... | २५ | २२८ | १ |
| तुरंगार्थमुपद्वीपगमनवर्णनं .... | २६ | २२९ | १ |
| समुद्रेशरैःसेतुबंधनं ... | २७ | ” | २ |

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| दैत्यानांयुद्धविषयेमंत्रवर्णनं... | २८ | २३० | २ |
| यादवासुरसंग्रामवर्णनं ... | २९ | २३१ | १ |
| ऊर्ध्वकेशनदवधवर्णनं .... | ३० | २३२ | १ |
| सिंहकुशांववधवर्णनं ... | ३१ | २३३ | १ |
| सैन्यपालसुतवर्णनं ... | ३२ | २३४ | १ |
| राजपुत्रजीवनवर्णनं ... | ३३ | २३५ | १ |
| दैत्ययादवयुद्धवर्णनं ... | ३४ | २३६ | २ |
| बल्वलस्यमूर्च्छायामनिरुद्धजयवर्णनं | ३५ | २३७ | २ |
| दैत्यपुत्रवधवर्णनं ... | ३६ | २३८ | २ |
| भैरवमोहनं ... ... | ३७ | २३९ | २ |
| अनिरुद्धादिसाहाय्यार्थश्रीकृष्णगमनं | ३८ | २४० | २ |
| अनिरुद्धविजयवर्णनं ... | ३९ | २४१ | २ |
| सर्वेषांव्रजप्रवेशवर्णनं ... | ४० | २४२ | २ |
| व्रजेसर्वेषांकृष्णमिलनं ... | ४१ | २४३ | २ |
| कृष्णरासक्रीडावर्णनं ... | ४२ | २४४ | १ |
| रासक्रीडायांगोपीगर्वेकृष्णांतर्धानं | ४३ | २४५ | २ |
| गोपीकृतकृष्णशोधः, राधामानहानिश्च | ४४ | २४६ | १ |
| रासक्रीडायांकृष्णागमनवर्णनं | ४५ | २४७ | १ |
| संपूर्णरासक्रीडावर्णनं .... | ४६ | ” | २ |

| विषयाः | अ० | प० | पृ० |
|---|---|---|---|
| वाजिनो व्रजादन्यत्रगमनम्... | ४७ | २४९ | १ |
| कौरवैःश्यामकर्णग्रहणं ... | ४८ | ” | २ |
| यदुकुरुसंग्रामवर्णनं ... | ४९ | २५० | १ |
| हस्तिनापुरविजयवर्णनं ... | ५० | २५१ | २ |
| कौंतलपुरगमनं .... | ५१ | २५२ | २ |
| म्लेच्छदेशविजयवर्णनं ... | ५२ | २५३ | २ |
| उग्रसेनंप्रत्युद्धवागमनं, तेनभगवद्गुणव० | ५३ | २५४ | १ |
| तुरगागमनं ... .... | ५४ | २५५ | १ |
| गोमतीजलानयनं ... | ५५ | २५६ | १ |
| यज्ञपूर्तौउग्रसेननृपस्याभिषेकवर्णनं | ५६ | २५७ | २ |
| विश्वभोज्यदक्षिणावर्णनं ... | ५७ | २५८ | २ |
| कंसादिदर्शनं ... ... | ५८ | २५९ | २ |
| भुजंगप्रयातवृत्तनिबद्धश्रीकृष्णसहस्रनाम-स्तोत्रवर्णनं ... | ५९ | ” | ” |
| राधाकृष्णयोर्गोलोकारोहणवर्णनं | ६० | २६३ | २ |
| आचार्यविभागावतारवर्णनमेका-दशीमाहात्म्यञ्च .... | ६१ | २६४ | २ |
| ग्रंथसमाप्तिवर्णनम् .... | ६२ | २६६ | १ |


समाप्ता ग्रंथानुक्रमणिका।

श्रीकृष्णाय नमः ॥ वृष्णीनांकृष्णदेवानामाचार्यायमहात्मने ॥ श्रीमद्गर्गकवीशायतस्मैनित्यंनमोनमः ॥ १ ॥ शौनकउवाच ॥ श्रुतंतव
मुखाद्ब्रह्मन्पुराणानांचविस्तरात् ॥ श्रेष्ठंश्रेष्ठंचमाहात्म्यंकर्णयोःसुखवर्द्धनम् ॥ २ ॥ गर्गस्यचमुनेरद्यसंहितायाःप्रयत्नतः ॥ अस्माकंवदमाहा
त्म्यंसाररूपंविचार्यच ॥ ३ ॥ अहोधन्याभागवतीमुनेर्गर्गस्यसंहिता ॥ राधामाधवयोर्यस्यांमहिमाबहुवर्णितः ॥ ४ ॥ सूतउवाच ॥ अहो
शौनकमाहात्म्यंनारदाच्चमयाश्रुतम् ॥ उक्तंसंमोहनेतंत्रेशिवायैचशिवेनवै ॥ ५ ॥ कैलासशिखरेशुभ्रेयत्राक्षयवटाजिरे ॥ तीरेचालकनंदाया
नित्यंसंराजतेहरः ॥ ६ ॥ शंकरंचैकदादेवंगिरिजासर्वमंगला ॥ सिद्धानांश्रृण्वतांतत्रपप्रच्छवांछितंमुदा ॥ ७ ॥ पार्वत्युवाच ॥ यंदेवंध्यायसे
नाथतस्यापिचरितंपरम् ॥ जन्मकर्मरहस्यंचकथयस्वममाग्रतः ॥ ८ ॥ पुरात्वन्मुखतःसाक्षाच्छ्रुतंनाम्नांसहस्रकम् ॥ श्रीमद्गोपालदेवस्यतत्क
थांवदमेहर ॥ ९ ॥ महादेवउवाच ॥ कथागोपालकृष्णस्यराधेशस्यमहात्मनः ॥ गर्गस्यसंहितायांचश्रूयतेसर्वमंगले ॥ १० ॥ पार्वत्युवाच ॥
बहूनिचपुराणानिसंहितादीनिशंकर ॥ सर्वान्विहायगर्गस्यत्वंप्रशंससिसंहिताम् ॥ ११ ॥ यस्यांकाभगवल्लीलाविस्तरेणतदुच्यताम् ॥
कृतवान्संहितांगर्गःकेनसंप्रेरितःपुरा ॥ १२ ॥ किंपुण्यंकिंफलंचास्याःश्रवणेनापिलभ्यते ॥ पुराकैःकैर्जनैर्देवश्रुताममवदप्रभो ॥ १३ ॥
सूतउवाच ॥ इतिप्रियायावचनंनिशम्यप्रसन्नचित्तोभगवान्महेशः ॥ विचार्यगर्गस्यकृतांकथांचप्रत्याहवाक्यंसदसिस्थितःसः ॥ १४ ॥ महादेव
उवाच ॥ श्रृणुदेविसविस्तारंमाहात्म्यंपापनाशनम् ॥ राधामाधवयोश्चापिसंहितायाःप्रयत्नतः ॥ १५ ॥ पूर्वंचरित्रंस्वस्यापिब्रह्मणाप्रार्थितोयदा ॥
राधायैकथयामासप्रव्रजन्भूतलंहरिः ॥ १६ ॥ ततःशेषेणभगवान्गोलोकेप्रार्थितःपुनः ॥ तस्याग्रेकथयामाससमस्तांस्वकथांमुदा ॥ १७ ॥
शेषोददौब्रह्मणेचब्रह्माधर्मायसंहिताम् ॥ धर्मःसंप्रार्थितःप्राहस्वपुत्राभ्यांकथामृतम् ॥ १८ ॥ नरनारायणाभ्यांचरहासिसर्वमंगले ॥ नारायणो
नारदायसेवनेनिरतायच ॥ १९ ॥ जगादकृष्णचरितंयच्छ्रुतंधर्मवक्त्रतः ॥ ततश्चप्रार्थितःप्राहगर्गाचार्यायनारदः ॥ २० ॥ नारायणमुखाल्ल
ब्धांसर्वांश्रीकृष्णसंहिताम् ॥ इतिश्रुत्वापरंज्ञानंहरेर्भक्तिसमन्वितम् ॥ २१ ॥ चकारपूजनंगर्गोनारदस्यमहात्मनः ॥ उवाचनारदोगर्गंत्रिकाल
ज्ञंचपार्वति ॥ २२ ॥ नारदउवाच ॥ मयातुभ्यंश्रावितंचयशःसंक्षेपतोहरेः ॥ वैष्णवानांप्रियंगर्गत्वमेतद्विपुलंकुरु ॥ २३ ॥ सर्वेषांकामदंश

श्वत्कृष्णभक्तिविवर्द्धनम् ॥ ममप्रियंकुरुविभोशास्त्रंतुपरमाद्भुतम् ॥२४॥ वचसाममविप्रेंद्रकृष्णद्वैपायनेनच ॥ सर्वशास्त्रात्परंश्रेष्ठंश्रीमद्भागव
तंकृतम् ॥२५॥ ब्रह्मन्यथाभागवतंगोपयिष्याम्यहंतथा ॥ त्वत्कृतंश्रावयिष्यामिबहुलाश्वायभूभृते ॥२६॥ इतिश्रीसम्मोहनतंत्रेपार्वतीहरसं
वादेश्रीगर्गसंहितामाहात्म्येप्रथमोऽध्यायः ॥१॥ महादेवउवाच ॥ श्रुत्वादेवर्षिवचनंगर्गाचार्योमहामुनिः ॥ विनयावनतोभूत्वाप्रहसन्निदमब्र
वीत् ॥१॥ गर्गउवाच ॥ त्वयाब्रह्मन्वचश्चोक्तंकठिनंसर्वतोऽस्फुटम् ॥ तथापिचकरिष्यामित्वंकरोषिकृपांयदि ॥२॥ इत्येवमुक्तोभगवान्नारदःसर्वमं
गले ॥ स्ववीणांवादयन्गायन्ब्रह्मलोकंययौमुदा ॥ ३ ॥ गर्गाचलेकविर्गर्गःशास्त्रंचक्रेमहाद्भुतम् ॥ निरूपितंचसंवादंदेवर्षिबहुलाश्वयोः ॥४॥
नानाकृष्णचरित्रैश्चविचित्रैःपारिपूरितम् ॥ श्लोकैर्द्वादशसाहस्रैःसुधामिष्टैरलंकृतम् ॥ ५ ॥ यच्छ्रुतंगुरुवक्त्राच्चयद्दृष्टंश्रीहरेर्महत् ॥ तत्सर्वंच
रितंगर्गःसंहितायांसमादधे ॥६॥ श्रीगर्गसंहितानाम्नाकथाभूत्कृष्णभक्तिदा ॥ यस्याःश्रवणमात्रेणसर्वकार्यंचसिद्ध्यति ॥७॥ अत्रैवोदाहरंतीम
मितिहासंपुरातनम् ॥ यस्यश्रवणमात्रेणसर्वपापंप्रणश्यति ॥ ८ ॥ वज्रस्यापिसुतोराजाप्रतिबाहुर्नृपोह्यभूत् ॥ तस्यराज्ञःप्रियादेविमालिनी
नामवर्त्तते ॥ ९ ॥ मथुरायांकृष्णपुर्य्यांभार्ययासहितोनृपः ॥ संतानार्थेविधानेनबहून्यत्नांश्चकारह ॥ १० ॥ गावश्चबहवोदत्ताःसुपात्रेभ्यः
सवत्सकाः ॥ तथातेनकृतायज्ञादक्षिणाभिःप्रयत्नतः ॥ ११ ॥ गुरवोब्राह्मणादेवाःपूजिताभोजनैर्धनैः ॥ पुत्रोनजातस्तदपिततश्चितातु
रोऽभवत् ॥ १२ ॥ तावुभौदंपतीनित्यंचिंताशोकपरायणौ ॥ पितरोस्यजलंदत्तंकवोष्णमुपभुंजते ॥ १३ ॥ राज्ञःपश्चान्नपश्यामोयो
स्माकंतर्पयिष्यति ॥ इत्येवंस्मरतस्तस्यदुःखिताःपितरोऽभवन् ॥ १४ ॥ नबांधवानमित्राणिनामात्यसुहृदस्तथा ॥ शोचयंत्यस्यभूपस्यन
गजाश्वाःपदातयः ॥१५॥ नैराश्यंभूपतेस्तस्यानित्यंमनसिवर्त्तते ॥ जनस्यसुतहीनस्यनास्तिवैजन्मनःफलम् ॥ १६ ॥ गृहंशून्यंह्यपुत्रस्य
दुःखितंचमनःसदा ॥ देवमानुषपितॄणांनानृणत्वंसुतंविना ॥ १७ ॥ पुत्रमुत्पादयेत्प्राज्ञस्तस्मात्सर्वप्रयत्नतः ॥ यशस्तेषांभूमिलोकेपरलो
केगतिर्भवेत् ॥ १८ ॥ तेषांतुपुण्यकर्तॄणांपुत्रजन्मगृहेभवेत् ॥ आयुरारोग्यसंपत्तीतेषांगेहेप्रवर्त्तते ॥ १९ ॥ एवंविचिंत्यमनसानशर्मलभ ॥ १
तेनृपः ॥ श्वेतान्स्वमूर्द्धजान्दृष्ट्वाचक्रेशोकमहर्निशम् ॥२०॥ तस्यैकदामधुपुरेशांडिल्योपिमुनीश्वरः ॥ स्वेच्छयासउपागच्छत्प्रतिबाहुंविलो

कितम् ॥ २१ ॥ तंदृष्ट्वासहसाराजाप्रत्युत्थानासनादिभिः ॥ निवेद्यमधुपर्कादींश्चकारपूजनंमुदा ॥ २२ ॥ उदासीनंनृपंदृष्ट्वाकृत्वाविस्मयमे
वच ॥ ऋषिस्तमभिनंद्याथस्वस्तिवाचनपूर्वकम् ॥ २३ ॥ पप्रच्छकुशलंराज्येसप्तस्वंगेषुभूपतेः ॥ निवेदितुंस्वकुशलंप्रत्याहनृपसत्तमः ॥ २४ ॥
॥ राजोवाच ॥ पूर्वदोषेणयद्दृष्टंस्वदुःखंकिंब्रवीम्यहम् ॥ ऋषयस्त्वादृशाब्रह्मन्किंनजानंतिसांप्रतम् ॥ २५ ॥ सौख्यंनराज्येनपुरेममनैवतुदृ
श्यते ॥ किंकरोमिक्वगच्छामिपुत्रप्राप्तिःकथंभवेत् ॥ २६ ॥ राज्ञःपश्चान्नपश्यामोयोस्माकंपालयिष्यति ॥ इत्येवंस्मरतःसर्वादुःखितामेभव
न्प्रजाः ॥ २७ ॥ उपायंवदमेब्रह्मंस्त्वंसाक्षाद्दिव्यदर्शनः ॥ येनापिनिष्कलःपुत्रोवंशकर्त्ताभविष्यति ॥ २८ ॥ महादेवउवाच ॥ इतिश्रुत्वावचो
देविदुःखितस्यनृपस्यच ॥ उवाचमुनिशांडिल्यःकश्मलंशमयन्निव ॥ २९ ॥ इतिश्रीसंमोहनतंत्रेपार्वतीहरसंवादेगर्गसं०मा०द्वि०ध्यायः ॥ २ ॥
॥ शांडिल्यउवाच ॥ उपायाश्चकृताराजन्बहवश्चपुरात्वया ॥ परंतुतैःसुतोह्येकोनजातःकुलदीपकः ॥ १ ॥ तस्माच्छृणुविधानेनभार्य
यासहितःशुचिः ॥ धनदांपुत्रदांराजन्मुक्तिदांगर्गसंहिताम् ॥ २ ॥ सर्वंददात्यसौविष्णुर्लघूपायेनवैकलौ ॥ पुत्रादिसुखसंपत्तिःसंहिताश्रव
णान्नृणाम् ॥ ३ ॥ नरेंद्रशश्वन्मुनिसंहितायानवाहयज्ञेनजनाःपुनीताः ॥ इहैवसौख्यंपरमाप्नुवंतस्ततस्तुगोलोकपुरंव्रजंति ॥ ४ ॥ रोगीपु
मान्रोगगणात्प्रमुच्यतेभीतोभयाद्बंधनगश्चबंधनात् ॥ श्रुत्वाकथांनिर्धनएतिवैभवंमूर्खोभवेत्पंडितएवसत्वरम् ॥ ५ ॥ विप्रोथविद्वान्विजयी
नृपात्मजोवैश्योनिधीशोवृषलोपिनिर्मलः ॥ श्रुत्वाकथांप्राप्तमनोरथोभवेत्स्त्रीणांजनानामतिदुर्लभोपिहि ॥ ६ ॥ निष्कारणोभक्तियुतःशृ
णोतिहिसर्वामिमांवैमुनिगर्गसंहिताम् ॥ विजित्यविघ्नान्प्रविजित्यनाकपान्गोलोकधामप्रवरंप्रयातिसः ॥ ७ ॥ प्रबंधकल्पनागर्गसंहितायाश्चदु
र्लभा ॥ सहस्रजन्मपुण्येनलभ्यतेभूतलेनृप ॥ ८ ॥ श्रीगर्गसंहितायाश्चदिनानांनियमोनहि ॥ सर्वदाश्रवणंचोक्तंभुक्तिमुक्तिकरंकलौ ॥ ९ ॥
नजानेसमयेनापिप्रभातेकिंभविष्यति ॥ प्रोक्तंतुसंहितायाश्चनवाहश्रवणंततः ॥ १० ॥ ज्ञानेनब्रह्मचर्येणचैकभुक्तेनभूपते ॥ एकान्नेनहवि
ष्येणफलाहारेणवापुनः ॥ ११ ॥ मिष्टान्नंपूरिकांचैवगोधूमस्ययवस्यवा ॥ अश्नीयात्सैन्धवंकंदंदधिदुग्धंविधानतः ॥ १२ ॥ विष्णोःप्रसादं
भुंजीतनाप्रसादंनृपोत्तम ॥ श्रद्धयातुप्रकुर्वीतश्रवणंसर्वकामदम् ॥ १३ ॥ भूमिशायीभवेत्प्राज्ञःक्रोधलोभविवर्जितः ॥ कथांगुरुमुखाच्छ्रुत्वा

सर्वकामफलंलभेत् ॥ १४ ॥ गुरुभक्तिविहीनानांनास्तिकानांचपापिनाम् ॥ अवैष्णवानांदुष्टानांकथायाश्चफलंनहि॥१५॥ सुमुहूर्तेकथारंभं
स्वगृहेकारयेन्नरः॥ ब्रह्मक्षत्रियविट्शूद्रान्समाहूयस्वकान्स्वकान् ॥ १६ ॥ मंडपंकदलीखंडैःप्रकुर्य्याद्भक्तितःसुधीः ॥ अग्रेतुकलशंधृत्वा
जलपूर्णंसपल्लवम् ॥ १७ ॥ पूर्वंविनायकंपूज्यतत्पश्चात्तुनवग्रहान् ॥ ततश्चपुस्तकंपूज्यवक्तारंपरिपूजयेत् ॥ १८ ॥ सुवर्णंदक्षिणांदत्त्वाह्यश
क्तोरजतस्यवा ॥ कलशेश्रीफलंधृत्वामिष्टान्नंतुनिवेदयेत् ॥ १९ ॥ प्रकुर्य्यादार्त्तिकंभक्त्यासंपूज्यतुलसीदलैः ॥ समाप्तिदिवसेराजन्प्रदक्षिण
मुपाचरेत् ॥ २० ॥ परदाररतंधूर्त्तंवादिनंशिवनिन्दकम् ॥ अवैष्णवंक्रोधपरंवक्तारंतुनकल्पयेत् ॥ २१ ॥ वादीचानिंदकोमूर्खोगाथायांभंग
माचरेत् ॥ दुःखदाताचसर्वेषांसतुश्रोताहतःस्मृतः ॥ २२ ॥ गुरुशुश्रूषणेरक्तोविष्णुभक्तःकथार्थवित् ॥ गाथांश्रोतुंमनोयस्यसश्रोताश्रेष्ठउ
च्यते ॥२३॥ शुद्धःसआचार्यकुलप्रजातःश्रीकृष्णभक्तोबहुशास्त्रवेत्ता ॥ कृपाकरःसर्वजनेषुनित्यंसंदेहहारीकथितःसवक्ता ॥२४॥ वरणंब्रा
ह्मणानांचयथाशक्त्याचकारयेत्॥कथाविघ्ननिवृत्त्यर्थंद्वादशाक्षरविद्यया ॥२५॥ कथांतुधीरकंठेनवाचयेत्प्रहरत्रयम् ॥ कथायास्तत्रविश्रामं
द्विवारंकारयेद्बुधः ॥ २६ ॥ लघुशंकादिकंकृत्वाभूत्वानीरेणवैशुचिः ॥ प्रक्षाल्यपाणीपादौचमुखप्रक्षालनंचरेत् ॥ २७ ॥ नवाहेपूजनं
चोक्तंखंडेविज्ञानकेनृप ॥ पुस्तकंपूजयित्वाचपुष्पनैवेद्यचंदनैः ॥ २८ ॥ सुवर्णरजताद्यैश्चवाहनाद्यैःसदक्षिणैः ॥ वस्त्रभूषणगंधाद्यैर्वाचकं
पूजयेत्सुधीः ॥ २९ ॥ विप्रान्वानवसाहस्रांस्तथानवशतान्नृप ॥ तथानवनववापिपायसैर्वानवद्विजान् ॥ ३० ॥ भोजयेत्तुयथाशक्त्याकथा
याश्चफलंलभेत् ॥ कथायास्तत्रविश्रामेकीर्त्तनंकारयेद्बुधः ॥ ३१ ॥ स्त्रीजनैःपुरुषैःसार्द्धंविष्णुभक्तिसमन्वितैः ॥ कांस्यशंखमृदंगाद्यैर्जयश
ब्दैरितस्ततः ॥ ३२ ॥ श्रीगर्गसंहितायाश्चपुस्तकंगुरवेजनः ॥ निधायस्वर्णसिंहेवैदद्यात्सोंतेहरिंव्रजेत् ॥ ३३ ॥ इतितेकथितंराजन्किंभूयः
श्रोतुमिच्छसि ॥ संहिताश्रवणेनापिभुक्तिर्मुक्तिश्चदृश्यते ॥ ३४ ॥ इति श्रीसंमोहनतंत्रेपार्वतीहरसंवादेश्रीगर्गसंहितामाहात्म्येश्रवणविधिव
र्णनंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ महादेवउवाच ॥ ॥ इदंवचःश्रीमुनिशस्यश्रुत्वाप्रहस्यराजावनतस्तुसम्यक् ॥ कुरुत्वंसपुत्रंमुनेमांश
रण्यंत्वरंश्रावयत्वंहरेःसंहितांच ॥ १ ॥ श्रुत्वाभूपवचश्चकारसुखदंपारायणंमंडपंकृत्वाश्रीयमुनातटेमुनिवरःश्रुत्वाऽऽययुर्माथुराः ॥ पूर्णेनाथ

दिनेतथापरदिनेराजाथदानंत्वदाद्विप्रेभ्योवरभोजनंबहुधनंश्रीयादवेंद्रोमहान् ॥२॥ शांडिल्यायमुनीन्द्रायरथाश्वान्द्रविणंमहत् ॥ गोगजादी
निरत्नानिसंपूज्यप्रददौनृपः ॥ ३ ॥ श्रीमद्गोपालकृष्णस्यममोक्तंसर्वमंगले ॥ सहस्रनामशांडिल्यःसर्वदोषहरंजगौ ॥ ४ ॥ कथावसानेराजें
द्रःशांडिल्येनप्रणोदितः ॥ दध्यौभक्त्याव्रजपतिंश्रीमन्मदनमोहनम् ॥ ५ ॥ ततःप्रादुरभूत्कृष्णःप्रिययापार्षदैःसह ॥ वंशीवेत्रधरःश्यामःको
टिमन्मथमोहनः ॥ ६ ॥ दृष्ट्वागतंतंशांडिल्योराज्ञाचसर्वश्रोतृभिः ॥ प्रणामंतुचकाराशुस्तुतिंचक्रेविधानतः ॥ ७ ॥ शांडिल्यउवाच ॥
वैकुण्ठलीलाप्रचुरंमनोहरंनमस्कृतंदेवगणैःपरंवरम् ॥ गोपाललीलाभियुतंभजाम्यहंगोलोकनाथंशिरसानमाम्यहम् ॥ ८ ॥ प्रति
बाहुरुवाच ॥ ॥ गोलोकनाथगिरिराजपतेपरेशवृंदावनेशकृतनित्यविहारलील ॥ राधापतेव्रजवधूजनगीतकीर्तेगोविंदगोकुलपतेकिल
तेजयोस्तु ॥ ९ ॥ ॥ राज्ञ्युवाच ॥ ॥ वृंदावनेशराधेशपुरुषोत्तममाधव ॥ भक्तानांत्वंतुसुखदस्त्वामहंशरणंगता ॥ १० ॥ सर्वेश्रोतार
ऊचुः ॥ श्रीनाथहेजगन्नाथह्यपराधंक्षमस्वनः ॥ सुपुत्रंदेहिभूपायाऽस्मभ्यंभक्तिंस्वपादयोः ॥ ११ ॥ महादेवउवाच ॥ ॥ इतिश्रुत्वास्तु
तिंदेविभगवान्भक्तवत्सलः ॥ उवाचप्रणतान्सर्वान्मेघगंभीरयागिरा ॥ १२ ॥ श्रीभगवानुवाच ॥ ॥ मुनीन्द्रशृणुमद्वाक्यंराज्ञासर्वजनैः
सह ॥ वचनंयुष्मदादीनांसफलंचभाविष्यति ॥ १३ ॥ गर्गेणकथिताब्रह्मन्नाम्नेयंगर्गसंहिता ॥ सर्वदोषहरापुण्याचतुर्वर्गफलप्रदा ॥ १४ ॥
येयेमनोरथंयंयंवांछंतिमनुजाःकलौ ॥ तंतंदास्यतिसर्वेभ्योश्रीमुनेर्गर्गसंहिता ॥ १५ ॥ शिवउवाच ॥ ॥ इत्युक्त्वाराधयासार्द्धंमाधवोऽन्तर
धीयत ॥ मुनिभूपादयःसर्वेश्रोतारश्चमुदंययुः ॥ १६ ॥ शांडिल्यश्चमुनिर्द्रव्यंमाथुरान्ब्राह्मणान्पृथक् ॥ दत्त्वाराजानमाश्वास्यसोपिचांतर्द
धेप्रिये ॥१७॥ ततोभूपतिनाराज्ञीगर्भमाधत्तशोभनम् ॥ सूतिकालेसुतोजातोगुणवान्पुण्यकर्मतः ॥१८॥ हृष्टोराजाब्राह्मणेभ्यःकुमारस्य च
जन्मनि ॥ गोभूसुवर्णवस्त्राणिगजाश्वादीनिदत्तवान् ॥ १९ ॥ दैवज्ञैश्चस्वपुत्रस्यसुबाहुंनामचाकरोत् ॥ प्रतिबाहुर्नृपश्रेष्ठःकृतकृत्योबभूवह
॥२०॥ श्रीगर्गसंहितांश्रुत्वाभुक्त्वासर्वसुखानिच ॥ प्रतिबाहुर्ययावंतेगोलोकंयोगिदुर्लभम् ॥२१॥ स्त्रियंपुत्रंधनंवापिवाहनंचयशोगृहम् ॥
राज्यंसौख्यंचमोक्षंचदद्याच्छ्रीगर्गसंहिता ॥ २२ ॥ इतिसर्वांकथांदेव्यैकथयित्वाचशंकरः ॥ तूष्णींबभूवमुनयःपुनस्तंप्राहपार्वती ॥ २३ ॥

पार्वत्युवाच ॥ ॥ श्रीगर्गसंहितायाश्चकथांवदममाग्रतः ॥ अद्भुतंचरितंयस्यांश्रूयतेमाधवस्यहि ॥ २४ ॥ इतिश्रुत्वाकथांसर्वांभवान्यैभगवान्भवः ॥ गर्गस्यसंहितायाश्चकथयामासहर्षितः ॥ २५ ॥ हयमेधचरित्रस्यसुमेरुर्नामशौनक ॥ पुनस्तत्रदिनैकेनवर्णयामासहर्षितः ॥ २६ ॥ पुनरूचेहरःसाक्षाच्छृणुत्वंसर्वमंगले ॥ बिल्वकेशवनेसिद्धपीठेगंगार्द्धयोजने ॥ २७ ॥ श्रीमद्भागवतादीनिसंहितादीनिवैकलौ ॥ गोकुलस्थैर्विष्णुजनैर्वारंवारंचश्रोष्यसि ॥ २८ ॥ सूतउवाच ॥ ॥ इतीतिहासंरुद्रस्यमुखाच्छ्रुत्वामहाद्भुतम् ॥ वैष्णवीभगवन्मायाप्रसन्नाभूच्चशौनक ॥ २९ ॥ सकृच्छ्रोतुंहरेर्गाथांबिल्वकेशवनेमुने ॥ स्वात्मानंप्रकटंकर्तुंकलेरादौमनोदधे ॥ ३० ॥ तस्माच्छ्रीरूपिणीतत्रनाम्नावैसर्वमंगला ॥ गंगायादक्षिणतटेप्रादुर्भूताभविष्यति ॥ ३१ ॥ श्रीगर्गसंहितायाश्चमाहात्म्यंकथितंमुने ॥ शृणोतियश्चपठतिपापदुःखैःसमुच्यते ॥ ३२ ॥ इति श्रीसंमोहनतंत्रेपार्वतीहरसंवादेश्रीगर्गसंहितामाहात्म्येचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥ ॥

## इति श्रीमद्गर्गसंहितायामाहात्म्यं समाप्तम् ।

---

इदं पुस्तकं श्रीकृष्णदासात्मज-खेमराजेन मुम्बय्यां स्वकीये "श्रीवेंकटेश्वर" स्टीम्-मुद्रणालये मुद्रितम् । संवत् १९६६.

श्रीगणेशाय नमः ॥ ॥ अथ गर्गसंहिताया गोलोकखण्डः प्रारभ्यते ॥ ॐ नारायणंनमस्कृत्य नरंचैवनरोत्तमम् ॥ देवींसर
स्वतींव्यासंततोजयमुदीरयेत् ॥ १ ॥ शरद्विकचपंकजश्रियमतीवविद्वेषकं मिलिन्दमुनिसेवितंकुलिशकंजचिह्नावृतम् ॥ स्फुरत्कन
कनूपुरंदलितभक्ततापत्रयं चलद्द्युतिपदद्वयंत्वदिदधामिराधापतेः ॥ २ ॥ वदनकमलनिर्यद्यस्यपीयूषमाद्यंपिबतिजनवरोयंपातुसोयं
गिरंमे ॥ बदरवनविहारःसत्यवत्याःकुमारः प्रणतदुरितहारःशार्ङ्गधन्वावतारः ॥ ३ ॥ कदाचिन्नैमिषारण्येश्रीगर्गोज्ञानिनांवरः ॥ आय
यौशौनकंद्रष्टुंतेजस्वीयोगभास्करः ॥ ४ ॥ तंदृष्ट्वासहसोत्थायशौनकोमुनिभिःसह ॥ पूजयामासपाद्याद्यैरुपचारैर्विधानतः ॥ ५ ॥ ॥
॥ शौनकउवाच ॥ ॥ सतांपर्यटनंधन्यंगृहिणांशांतयेस्मृतम् ॥ नृणामन्तस्तमोहारीसाधुरेवनभास्करः ॥ ६ ॥ तस्मान्मेत्वदिदिसं
भूतंसंदेहंनाशयप्रभो ॥ कतिधाश्रीहरेर्विष्णोरवतारोभवत्यलम् ॥ ७ ॥ ॥ श्रीगर्गउवाच ॥ ॥ साधुपृष्टंत्वयाब्रह्मन्भगवद्गुणव
र्णनम् ॥ शृण्वतांगदतांयद्वैपृच्छतांवितनोतिशम् ॥ ८ ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ यस्यस्मरणमात्रेणमहादोषःप्र
शाम्यति ॥ ९ ॥ मिथिलानगरेपूर्वंबहुलाश्वःप्रतापवान् ॥ श्रीकृष्णभक्तःशान्तात्माबभूवनिरहंकृतिः ॥ १० ॥ अम्बरादागतंदृष्ट्वानारदं
मुनिसत्तमम् ॥ सम्पूज्यचासनेस्थाप्यकृतांजलिरभाषत ॥ ११ ॥ श्रीजनकउवाच ॥ ॥ योनादिरात्मापुरुषोभगवान्प्रकृतेःपरः ॥ क
स्मात्तनुंसमाधत्तेतन्मेब्रूहिमहामते ॥ १२ ॥ ॥ श्रीनारदउवाच ॥ ॥ गोसाधुदेवताविप्रवेदानांरक्षणायवै ॥ तनुंधत्तेहरिःसाक्षाद्भग
वानात्मलीलया ॥ १३ ॥ यथानटःस्वलीलायांमोहितोनपरस्तथा ॥ अन्येदृष्ट्वाचतन्मायांमुमुहुस्तेनसंशयः ॥ १४ ॥ ॥ श्रीजनक
उवाच ॥ ॥ कतिधाश्रीहरेर्विष्णोरवतारोभवत्यलम् ॥ साधूनांरक्षणार्थंहिकृपयावदमांप्रभो ॥ १५ ॥ ॥ श्रीनारदउवाच ॥ ॥
अंशांशोंशस्तथावेशःकलाःपूर्णःप्रकथ्यते ॥ व्यासाद्यैश्चस्मृतःषष्ठःपरिपूर्णतमःस्वयम् ॥ १६ ॥ अंशांशस्तुमरीच्यादिरंशाब्रह्मादयस्त
था ॥ कलाःकपिलकूर्माद्याआवेशाभार्गवादयः ॥ १७ ॥ पूर्णोनृसिंहोरामश्चश्वेतद्वीपाधिपोहरिः ॥ वैकुंठोपितथायज्ञोनरनारायणः
स्मृतः ॥ १८ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् ॥ असंख्यब्रह्मांडपतिर्गोलोकेधाम्निराजते ॥ १९ ॥ कार्याधिकारंकुर्व

न्तःसदांशास्तेप्रकीर्तिताः ॥ तत्कार्यभारंकुर्वंतस्तेंऽशांशाविदिताःप्रभोः ॥ २० ॥ येषामन्तर्गतोविष्णुःकार्यंकृत्वाविनिर्गतः ॥ नानाऽऽ
वेशावतारांश्चविद्धिराजन्महामते ॥ २१ ॥ धर्मंविज्ञायकृत्वायःपुनरंतरधीयत ॥ युगेयुगेवर्तमानःसोऽवतारःकलाहरेः ॥ २२ ॥ चतुर्व्यू
होभवेद्यत्रदृश्यंतेचरसानव ॥ अतःपरंचवीर्याणिसतुपूर्णःप्रकथ्यते ॥ २३ ॥ यस्मिन्सर्वाणितेजांसिविलीयन्तेस्वतेजसि ॥ तंवदन्तिपरेसा
क्षात्परिपूर्णतमंस्वयम् ॥ २४ ॥ पूर्णस्यलक्षणंयत्रयंपश्यन्तिपृथक्पृथक् ॥ भावेनापिजनाःसोयंपरिपूर्णतमःस्वयम् ॥ २५ ॥ परिपूर्णत
मःसाक्षाच्छ्रीकृष्णोनाऽन्यएवहि ॥ एककार्यार्थमागत्यकोटिकार्यंचकारह ॥ २६ ॥ पूर्णःपुराणःपुरुषोत्तमोत्तमः परात्परोयःपुरुषःपरे
श्वरः ॥ स्वयंसदाऽऽनन्दमयंकृपाकरंगुणाकरंतंशरणंव्रजाम्यहम् ॥ २७ ॥ श्रीगर्गउवाच ॥ ॥ तच्छ्रुत्वाहर्षितोराजारोमांचीप्रेमवि
ह्वलः ॥ प्रामृश्यनेत्रेऽश्रुपूर्णेनारदंवाक्यमब्रवीत् ॥ २८ ॥ ॥ श्रीबहुलाश्वउवाच ॥ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णःकेनहेतुना ॥
आगतोभारतेखंडेद्वारवत्यांविराजते ॥ २९ ॥ तस्यगोलोकनाथस्यगोलोकंधामसुन्दरम् ॥ कर्माण्यपरिमेयाणिब्रूहिब्रह्मन्बृहन्मुने ॥३०॥
यदातीर्थाटनंकुर्वञ्छतजन्मतपःपरः ॥ तदासत्संगमेत्याऽऽशुश्रीकृष्णंप्राप्नुयान्नरः ॥ ३१ ॥ श्रीकृष्णदासस्यचदासदासः कदाभवेयं
मनसार्द्रचितः ॥ योदुर्लभोदेववरैःपरात्मासमेकथंगोचरआदिदेवः ॥ ३२ ॥ श्रीनारदउवाच ॥ ॥ धन्यस्त्वंराजशार्दूलश्रीकृष्णेष्टो
हरिप्रियः ॥ तुभ्यंचदर्शनंदातुंभक्तेशोऽत्रागमिष्यति ॥ ३३ ॥ त्वांनृपंश्रुतदेवंचद्विजदेवोजनार्दनः ॥ स्मरत्यलंद्वारकायामहोभाग्यंस
तामिह ॥ ३४ ॥ इति श्रीगर्गसंहितायांगोलोकखंडेनारदबहुलाश्वसंवादेश्रीकृष्णमाहात्म्यवर्णनंनामप्रथमोऽध्यायः ॥ १ ॥ श्रीना-
रदउवाच ॥ ॥ जिह्वांलब्ध्वापियःकृष्णंकीर्तनीयंनकीर्तयेत् ॥ लब्ध्वापिमोक्षनिश्रेणींसनारोहतिदुर्मतिः ॥ १ ॥ अथतेसंप्रवक्ष्यामिश्री
कृष्णागमनंभुवि ॥ अस्मिन्वाराहकल्पेवैयद्भूतंतच्छृणुप्रभो ॥ २ ॥ पुरादानवदैत्यानांनराणांखलभूभुजाम् ॥ भूरिभारसमाक्रांतापृथ्वी
गोरूपधारिणी ॥ ३ ॥ अनाथवद्रुदंतीववेदयंतीनिजंव्यथाम् ॥ कंपयंतीनिजांगानिब्रह्माणंशरणंगता ॥ ४ ॥ ब्रह्माथाश्वास्यतांसद्यःसर्वैर्देवग
णैर्वृतः ॥ शंकरेणसमंप्रागाद्वैकुंठंमंदिरंहरेः ॥ ५ ॥ नत्वाचतुर्भुजंविष्णुंस्वाभिप्रायंजगादह ॥ अथोद्विग्नंदेवगणंश्रीनाथःप्राहतंविधिम् ॥ ६ ॥

॥ श्रीभगवानुवाच ॥ ॥ कृष्णंस्वयंविगणितांडपतिंपरेशंसाक्षादखंडमतिदेवमतीवलीलम् ॥ कायकदापिनभविष्यातियंविनाहिगच्छाशु
तस्यविशदंपदमव्ययंत्वम् ॥ ७ ॥ ॥ श्रीब्रह्मोवाच ॥ ॥ त्वत्तःपरंनजानामिपरिपूर्णतमंस्वयम् ॥ यदियोन्यस्तस्यसाक्षाल्लोकंदर्श
यनःप्रभो ॥ ८ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्तोपिहरिःपूर्णःसर्वैर्देवगणैःसह ॥ पदवींदर्शयामासब्रह्मांडशिखरोपरि ॥ ९ ॥ वाम
पादांगुष्ठनखभिन्नब्रह्मांडमस्तके ॥ श्रीवामनस्यविवरेब्रह्मद्रवसमाकुले ॥ १० ॥ जलयानेनमार्गेणबहिस्तेनिर्ययुःसुराः ॥ कलिंगबिंबव
च्चेदंब्रह्मांडंददृशुस्त्वधः ॥ ११ ॥ इंद्रायणफलानीवलुठंत्यन्यानिवैजले ॥ विलोक्यविस्मिताःसर्वेबभूवुश्चकिताइव ॥ १२ ॥ कोटिशोयो
जनोर्ध्वंवैपुराणामष्टकंगताः ॥ दिव्यप्राकाररत्नादिद्रुमवृंदमनोहरम् ॥ १३ ॥ तदूर्ध्वंददृशुर्देवाविरजायास्तटंशुभम् ॥ तरंगितंक्षौमशुभ्रंसो
पानैर्भास्वरंपरम् ॥ १४ ॥ तंदृष्ट्वाप्रचलन्तस्तेतत्पुरंजग्मुरुत्तमम् ॥ असंख्यकोटिमार्तंडज्योतिषांमंडलंमहत् ॥ १५ ॥ दृष्ट्वाप्रताडिता
क्षास्तेतेजसाधर्षिताःस्थिताः ॥ नमस्कृत्वाथतत्तेजोदध्यौविष्णवाज्ञयाविधिः ॥ १६ ॥ तज्ज्योतिर्मंडलेऽपश्यत्साकारंधामशान्तिमत् ॥
तस्मिन्महाद्भुतंदीर्घंमृणालधवलंपरम् ॥ सहस्रवदनंशेषंदृष्ट्वानेमुःसुरास्ततः ॥ १७ ॥ तस्योत्संगेमहालोकगोलेकोलोकवंदितः ॥ यत्र
कालःकलयतामीश्वरोऽधाममानिनाम् ॥ १८ ॥ राजन्नप्रभवेन्मायामनाश्चित्तंमतिर्ह्यहम् ॥ नविकारोविशत्येवनमहांश्चगुणाःकुतः ॥ १९ ॥
तत्रकंदर्पलावण्याःश्यामसुंदरविग्रहाः ॥ द्वारिगंतुंचाभ्युदितान्यषेधन्कृष्णपार्षदाः ॥ २० ॥ देवाऊचुः ॥ ॥ लोकपालावयंसर्वेब्रह्मावि
ष्णुमहेश्वराः ॥ श्रीकृष्णदर्शनार्थायशक्राद्याआगताइह ॥ २१ ॥ श्रीनारदउवाच ॥ ॥ तच्छ्रुत्वातदभिप्रायंश्रीकृष्णायसखीज
नाः ॥ ऊचुर्देवप्रतीहारागत्वाचांतःपुरंपरम् ॥ २२ ॥ तदाविनिर्गताकाचिच्छतचंद्राननासखी ॥ पीतांबरावेत्रहस्तासाऽपृच्छद्वांछितं
सुरान् ॥ २३ ॥ चंद्राननोवाच ॥ ॥ कस्यांडस्याधिपादेवायूयंसर्वेसमागताः ॥ वदताशुगमिष्यामितस्मैभगवतेह्यहम् ॥ २४ ॥
॥ देवाऊचुः ॥ अहोअंडान्युतान्यानिनास्माभिर्दर्शितानिच ॥ एकमंडंप्रजानीमोथोऽपरंनास्तिनःशुभे ॥ २५ ॥ श्रीचन्द्राननोवाच ॥
ब्रह्मदेवलुठंतीहकोटिशोह्यंडराशयः ॥ तेषुसूयंसश्चादेवास्तथांडेऽडेपृथकपृथक ॥ २६ ॥ नामग्रामंनजानीथकदानात्रसमागताः ॥

जडबुद्धयाप्रत्हष्यध्वंगृहान्नापिविनिर्गताः ॥ २७ ॥ ब्रह्मांडमेकंजानंतियत्रजातास्तथाजनाः ॥ मशकाश्चयथांतःस्थाऔदुंबरफलेषुवै
॥ २८ ॥ श्रीनारदउवाच ॥ उपहास्यंगतादेवाइत्थंतूष्णींस्थिताःपुनः ॥ चकितानिवतान्दृष्ट्वाविष्णुर्वचनमब्रवीत् ॥ २९ ॥ श्रीवि
ष्णुरुवाच ॥ यस्मिन्नंडेपृश्निगर्भोऽवतारोभूत्सनातनः ॥ त्रिविक्रमनखोद्भिन्नेतस्मिन्नंडेस्थितावयम् ॥ ३० ॥ श्रीनारदउवाच ॥
॥ तच्छ्रुत्वातंचसंश्लाघ्यशीघ्रमन्तःपुरंगता ॥ पुनरागत्यदेवेभ्योप्याज्ञांदत्वागतापुरम् ॥ ३१ ॥ अथदेवगणाःसर्वेगोलोकंददृशुःपरम् ॥
तत्रगोवर्द्धनोनामगिरिराजोविराजते ॥ ३२ ॥ वसंतमानिनीभिश्चगोपीभिर्गोगणावृतः ॥ कल्पवृक्षलतासंघैरासमंडलमंडितः ॥ ३३ ॥
यत्रकृष्णनदीश्यामातोलिकाकोटिमंडिता ॥ वैडूर्य्यकृतसोपानास्वच्छन्दगतिरुत्तमा ॥ ३४ ॥ वृंदावनंभ्राजमानंदिव्यद्रुमलताकुलम् ॥
चित्रपक्षिमधुव्रातैर्वंशीवटविराजितम् ॥ ३५ ॥ पुलिनेशीतलेवायुर्मंदगामीवहत्यलम् ॥ सहस्रदलपद्मानांरजोविक्षेपयन्मुहुः ॥ ३६ ॥
मध्येनिजनिकुंजोस्तिद्वात्रिंशद्वनसंयुतः ॥ प्राकारपरिखायुक्तोरुणाक्षयवटाजिरः ॥ ३७ ॥ सप्तधापद्मरागाग्राजिरकुड्यविभूषितः ॥
कोटीन्दुमंडलाकारैर्वितानैर्गुलिकाद्युतिः ॥ ३८ ॥ पतत्पताकैर्दिव्याभैःपुष्पमन्दिरवर्त्मभिः ॥ जातभ्रमरसंगीतोमत्तबर्हि
पिकस्वनः ॥ ३९ ॥ बालार्ककुंडलधराःशतचन्द्रप्रभाःस्त्रियः ॥ स्वच्छन्दगतयोरत्नैःपश्यंत्यःसुंदरंमुखम् ॥ ४० ॥
रत्नाजिरेषुधावंत्योहारकेयूरभूषिताः ॥ क्वणन्नूपुरकिंकिण्यश्चूडामणिविराजिताः ॥ ४१ ॥ कोटिशःकोटिशोगावो द्वारिद्वा
रिमनोहराः ॥ श्वेतपर्वतसंकाशादिव्यभूषणभूषिताः ॥ ४२ ॥ पयस्विन्यस्तरुण्यश्चशीलरूपगुणैर्युताः ॥ सवत्साःपीतपुच्छाश्चव्रजंत्यो
भव्यमूर्तिकाः ॥ ४३ ॥ घंटामंजीरसंरावाःकिंकिणीजालमंडिताः ॥ हेमशृंग्योहेमतुल्यहारमालाःस्फुरत्प्रभाः ॥ ४४ ॥ पाटलाहरिता
स्ताम्राःपीताःश्यामाविचित्रिताः ॥ धूम्राःकोकिलवर्णाश्चयत्रगावस्त्वनेकधा ॥ ४५ ॥ समुद्रवद्दुग्धदाश्चतरुणीकरचिह्निताः ॥ कुरंगव
द्विलंघद्भिर्गोवत्सैर्मंडिताःशुभाः ॥ ४६ ॥ इतस्ततश्चलंतश्चगोगणेषमहावृषाः ॥ दीर्घकन्धरसंगाढ्यायत्रधर्मधुरंधराः ॥ ४७ ॥ गोपाला
वेत्रहस्ताश्चश्यामावंशीधराःपराः ॥ कृष्णलीलांप्रगायंतोरागैर्मदनमोहनैः ॥ ४८ ॥ इत्थंनिजनिकुंजन्तन्नत्वामध्येगताःसुराः ॥ ज्योतिषांमंड

लंपद्मंसहस्रदलशोभितम् ॥ ४९ ॥ तदूर्ध्वंषोडशदलंततोष्टदलपंकजम् ॥ तस्योपरिस्फुरद्दीर्घसोपानत्रयमंडितम् ॥ ५० ॥ सिंहास
नंपरंदिव्यंकौस्तुभैःखचितंशुभैः॥दहशुर्देवताःसर्वाःश्रीकृष्णंराधयायुतम् ॥५१॥ दिव्यैरष्टसखीसंघैर्मोहिन्यादिभिरन्वितम् ॥ श्रीदामाद्यैःसे
व्यमानमष्टगोपालसेवितैः ॥ ५२ ॥ हंसाभैर्व्यजनांदोलचामरैर्वज्रमुष्टिभिः ॥ कोटिचन्द्रप्रतीकाशैःसेवितंछत्रकोटिभिः ॥ ५३ ॥ श्रीराधिकालं
कृतवामबाहुंस्वच्छन्दवक्रीकृतदक्षिणांघ्रिम् ॥ वंशीधरंसुन्दरमन्दहासंभ्रूमंडलामोहितकामराशिम् ॥ ५४ ॥ घनप्रभंपद्मदलायतेक्षणंप्रलं
बबाहुंबहुपीतवाससम् ॥ वृंदावनोन्मत्तमिलिंदशब्दैर्विराजितंश्रीवनमालयाहरिम् ॥ ५५ ॥ कांचीकलाकंकणनूपुरद्युतिंलसन्मनोहारिमहो
ज्ज्वलस्मितम् ॥ श्रीवत्सरत्नोत्तमकुन्तलश्रियंकिरीटहारांगदकुंडलत्विषम् ॥ ५६ ॥ दृष्ट्वातमानन्दसमुद्रमग्नवत्प्रहर्षिताश्चाश्रुकलाकुले
क्षणाः ॥ ततःसुराःप्रांजलयोनताननानेमुर्मुरारिंपुरुषंपरायणम् ॥ ५७ ॥ इति श्रीमद्गर्गाचार्यसंहितायांगोलोकखंडेनारदबहुलाश्वसंवादेश्री
गोलोकधामवर्णनंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ श्रीजनकउवाच ॥ ॥ मुनेदेवामहात्मानंकृष्णंदृष्ट्वापरात्परम् ॥ अग्रेकिंचक्रिरेतत्रतन्मे
ब्रूहिकृपांकुरु ॥ १ ॥ ॥ श्रीनारदउवाच ॥ ॥ सर्वेषांपश्यतांतेषांवैकुंठोपिहरिस्ततः ॥ उत्थायाष्टभुजःसाक्षाल्लीनोऽभूत्कृष्णविग्रहे ॥ २ ॥
तदैवचागतःपूर्णोनृसिंहश्चंडविक्रमः ॥ कोटिसूर्यप्रतीकाशोलीनोभूत्कृष्णतेजसि ॥ ३ ॥ रथेलक्षहयेशुभ्रेस्थितश्चागतवांस्ततः ॥ श्वेत
द्वीपाधिपोभूमासहस्रभुजमंडितः ॥ ४ ॥ श्रियायुक्तःस्वायुधाढ्यःपार्षदैःपरिसेवितः ॥ संप्रलीनोबभूवाशुसोपिश्रीकृष्णविग्रहे ॥ ५ ॥
तदैवचागतःसाक्षाद्रामोराजीवलोचनः ॥ धनुर्बाणधरःसीताशोभितोभ्रातृभिर्वृतः ॥ ६ ॥ दशकोट्यर्कसंकाशेचामरैर्दोलितेरथे ॥ असं
ख्यवानरेंद्राढ्येलक्षचक्रघनस्वने ॥ ७ ॥ लक्षध्वजेलक्षहयेशातकौंभेस्थितस्ततः ॥ श्रीकृष्णविग्रहेपूर्णःसंप्रलीनोबभूवह ॥ ८ ॥ तदैवचा
गतःसाक्षाद्यज्ञोनारायणोहरिः ॥ प्रस्फुरत्प्रलयाटोपज्वलदग्निशिखोपमः ॥ ९ ॥ रथेज्योतिर्मयेदृश्योदक्षिणाढ्यःसुरेश्वरः ॥ सोपिलीनो
बभूवाशुश्रीकृष्णेश्याम विग्रहे ॥ १० ॥ तदाचागतवान्साक्षान्नरनारायणःप्रभुः ॥ चतुर्भुजोविशालाक्षोमुनिवेषोघनद्युतिः ॥ ११ ॥
तडित्कोटिजटाजूटःप्रस्फुरद्दीप्तिमंडलः ॥ मुनींद्रमंडलैर्दिव्यैर्मंडितोऽखंडितव्रतः ॥ १२ ॥ सर्वेषांपश्यतांतेषामाश्चर्यमनसांनृप ॥ सोपिली

गर्गसं० नोबभूवाशुश्रीकृष्णेश्यामसुंदरे ॥ १३ ॥ परिपूर्णतमंसाक्षाच्छ्रीकृष्णंचस्वयंप्रभुम् ॥ ज्ञात्वादेवाःस्तुतिंचक्रुःपरंविस्मयमागताः ॥ १४ ॥ गो०
श्रीदेवाऊचुः ॥ कृष्णायपूर्णपुरुषायपरात्परायययज्ञेश्वरायपरकारणकारणाय ॥ राधावरायपरिपूर्णतमायसाक्षाद्गोलोकधामधिषणायन
॥ ६ ॥ मःपरस्मै ॥ १५ ॥ योगेश्वराःकिलवदन्तिमहःपरंत्वांतत्रैवसात्वतमनाःकृतविग्रहंच ॥ अस्माभिरद्यविदितंयददोऽद्वयंतेतस्मैनमोस्तुमह अ०
सांपतयेपरस्मै ॥ १६ ॥ व्यंग्येनवाननहिलक्षणयाकदापिस्फोटेनयच्चकवयोनविशंतिमुख्याः ॥ निर्देश्यभावरहितंप्रकृतेःपरंचत्वांब्रह्मनि
र्गुणमलंशरणंव्रजामः ॥ १७ ॥ त्वांब्रह्मकेचिदवयंतिपरेचकालंकेचित्प्रशांतमपरेभुविकर्मरूपम् ॥ पूर्वेचयोगमपरेकिलकर्तृभावमन्यो
क्तिभिर्नविदितंशरणंगताःस्म ॥ १८ ॥ श्रेयस्करींभगवतस्तवपादसेवांहित्वाथतीर्थयजनादितपश्चरन्ति ॥ ज्ञानेनयेचविदिताबहुविघ्नसं
घैःसंताडिताःकिलभवन्तिनतेकृतार्थाः ॥ १९ ॥ विज्ञाप्यमद्यकिमुदेवअशेषसाक्षियःसर्वभूतहृदयेषुविराजमानः ॥ देवैर्नमद्भिरमलाशय
मुक्तदेहैस्तस्मैनमोभगवतेपुरुषोत्तमाय ॥ २० ॥ योराधिकाहृदयसुन्दरचन्द्रहारःश्रीगोपिकानयनजीवनमूलहारः ॥ गोलोकधामधिषण
ध्वजआदिदेवःसत्वंविपत्सुविबुधान्परिपाहिपाहि ॥ २१ ॥ वृंदावनेशगिरिराजपतेव्रजेशगोपालवेषकृतनित्यविहारलील ॥ राधापतेश्रुतिध
राधिपतेधरांत्वंगोवर्द्धनोद्धरणउद्धरधर्मधाराम् ॥ २२ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्तोभगवान्साक्षाच्छ्रीकृष्णोगोकुलेश्वरः ॥ प्रत्या
हप्रणतान्देवान्मेघगंभीरयागिरा ॥ २३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ हेसुरज्येष्ठहेशंभोदेवाःशृणुतमद्वचः ॥ यादवेषुचजन्यध्वमंशैःस्त्रीभि
र्मदाज्ञया ॥ २४ ॥ अहंचावतरिष्यामिहरिष्यामिभुवोभरम् ॥ करिष्यामिचवःकार्यंभविष्यामियदोःकुले ॥ २५ ॥ वेदामेवचनंविप्रामुखं
गावस्तनुर्मम ॥ अङ्गानिदेवतायूयंसाधवोह्यसवोहृदि ॥ २६ ॥ युगेयुगेचबाध्येतयदापाखण्डिभिर्जनैः ॥ धर्म्मःक्रतुर्दयासाक्षात्तदात्मानं
सृजाम्यहम् ॥ २७ ॥ श्रीनारदउवाच ॥ इत्युक्तवंतंजगदीश्वरंहरिंराधापतिंप्राणवियोगविह्वला ॥ दावाग्निनादुःखलतेवमूर्च्छिताऽश्रु
कंपरोमांचितभावसंवृता ॥ २८ ॥ ॥ श्रीराधोवाच ॥ भुवोभरंहर्तुमलं[illegible]शपथंशृणोत्वतः ॥ गतेत्वयिप्राणपतेचविग्रहं ॥ ६
कदाचिदत्रैवनधारयाम्यहम् ॥ २९ ॥ यदात्वमेवंशपथंनमन्यसेद्वितीयवारांबुदयामिवाक्पथम् ॥ प्राणोधरेगंतुमतीवविह्वलःकर्पूरधूलेः क

णवद्गमिष्यति ॥ ३० ॥ ॥ श्रीभगवानुवाच ॥ त्वयासहगमिष्यामिमाशोकंकुरुराधिके ॥ हरिष्यामिभुवोभारंकरिष्यामिवचस्तव ॥
॥ ३१ ॥ ॥ श्रीराधिकोवाच ॥ ॥ यत्रवृंदावनंनास्तियत्रनोयमुनानदी ॥ यत्रगोवर्द्धनोनास्तितत्रमेनमनःसुखम् ॥ ३२ ॥ ॥ श्री
नारदउवाच ॥ ॥ वेदनागक्रोशभूमिंस्वधाम्नःश्रीहरिःस्वयम् ॥ गोवर्द्धनंचयमुनांप्रेषयामासभूपरि ॥ ३३ ॥ तदाब्रह्मादेवगणैर्नत्वान
त्वापुनःपुनः ॥ परिपूर्णतमंसाक्षाच्छ्रीकृष्णंसमुवाचह ॥ ३४ ॥ ॥ श्रीब्रह्मोवाच ॥ ॥ अहंकुत्रभविष्यामिकुत्रत्वंचभविष्यसि ॥ एते
कुत्रभविष्यंतिकैर्गृहैःकैश्चनामभिः ॥ ३५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ वसुदेवस्यदेवक्यांभविष्यामिपरःस्वयम् ॥ रोहिण्यांमत्क
लाशेषोभविष्यतिनसंशयः ॥ ३६ ॥ श्रीःसाक्षाद्रुक्मिणीभैमीशिवाजांबवतीतथा ॥ सत्याचतुलसीभूमौसत्यभामावसुन्धरा ॥ ३७ ॥
दक्षिणालक्ष्मणाचैवकालिन्दीविरजातथा ॥ भद्राह्रीर्मित्रविंदाचजाह्नवीपापनाशिनी ॥ ३८ ॥ रुक्मिण्यांकामदेवश्चप्रद्युम्नइतिविश्रुतः ॥
भविष्यतिनसन्देहस्तस्यत्वञ्चभविष्यसि ॥ ३९ ॥ नंदोद्रोणोवसुःसाक्षाद्यशोदासाधरास्मृता ॥ वृषभानुःसुचन्द्रश्चतस्यभार्याकलावती ॥
॥ ४० ॥ भूमौकीर्तिरितिख्याताततस्यांराधाभविष्यति ॥ सदारासंकरिष्यामिगोपीभिर्व्रजमंडले ॥ ४१ ॥ ॥ इति श्रीमद्गर्गाचार्यसं
हितायांगोलोकखण्डे श्रीनारदबहुलाश्वसंवादेभूतलागमनोद्योगवर्णनंनामतृतीयोऽध्यायः ॥ ३ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ श्रीभगवानुवाच ॥ ॥ नन्दोपनन्दभवनाः श्रीदामासुबलःसखा ॥ स्तोकःकृष्णोर्जुनोंशुश्चनवनन्दगृहेविधे ॥ १ ॥ विशालर्षभते
जस्विदेवप्रस्थवरूथपाः ॥ भविष्यंतिसखायोमेव्रजेषड्वृषभानुषु ॥ २ ॥ श्रीब्रह्मोवाच ॥ कस्यवैनन्दपदवीकस्यवैवृषभानुता ॥ वददेव
पतेसाक्षादुपनन्दस्यलक्षणम् ॥ ३ ॥ श्रीभगवानुवाच ॥ ॥गाःपालयन्तिघोषेषुसदागोवृत्तयोनिशम् ॥ तेगोपालामयाप्रोक्तास्तेषांत्वं
लक्षणंशृणु ॥ ४ ॥ नन्दःप्रोक्तःसगोपालैर्नवलक्षगवांपतिः ॥ उपनन्दश्चकथितःपञ्चलक्षगवांपतिः ॥ ५ ॥ वृषभानुःसउक्तोयोदशलक्षग
वांपतिः ॥ गवांकोटिर्गृहेयस्यनन्दराजःसएवहि ॥६॥ कोट्यर्धंचगवांयस्यवृषभानुवरस्तुसः ॥ एतादृशौव्रजेद्वौतुसुचंद्रोद्रोणएवहि ॥७॥
सर्वलक्षणलक्ष्याढ्यौगोपराजौभविष्यतः ॥ शतचन्द्राननानांवैसुन्दरीणांसुवाससाम् ॥ ८ ॥ गोपीनांमद्व्रजेरम्येशतयूथोभविष्यति ॥

॥ श्रीब्रह्मोवाच ॥ हेदीनबन्धोहेदेवजगत्कारणकारण ॥ यूथस्यलक्षणंसर्वंतन्मेब्रूहिपरेश्वर ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ अर्बुदंदश
कोटीनांमुनिभिःकथितंविधे ॥ दशार्बुदंयत्रभवेत्सोपियूथःप्रकथ्यते ॥ १० ॥ गोलोकवासिन्यःकाश्चित्काश्चिद्वैद्वारपालिकाः ॥ शृङ्गारप्र
कराःकाश्चित्काश्चिच्छय्योपकारकाः ॥ ११ ॥ पार्षदाख्यास्तथाकाश्चिच्छ्रीवृन्दावनपालिकाः ॥ गोवर्द्धननिवासिन्यःकाश्चित्कुञ्जविधा
यकाः ॥ १२ ॥ मेनिकुंजनिवासिन्योभविष्यंतिव्रजेमम ॥ एवञ्चयमुनायूथोजाह्नवीयूथएवच ॥ १३ ॥ रमायामधुमाधव्याविरजायास्त
थैवच ॥ ललितायाविशाखायामायायूथोभाविष्यति ॥ १४ ॥ एवंह्यष्टसखीनाञ्चसखीनांकिलषोडश ॥ द्वात्रिंशच्चसखीनांचयूथाभाव्याव्रजे
विधे ॥ १५ ॥ श्रुतिरूपाऋषिरूपामैथिलाःकौशलास्तथा ॥ अयोध्यापुरवासिन्योयत्रसीतापुलिंदकाः ॥ १६ ॥ यासांमयावरोदत्तोपूर्वेपू
र्वेयुगेयुगे ॥ तासांयूथाभविष्यन्तिगोपीनांमद्व्रजेशुभे ॥ १७ ॥ ॥ श्रीब्रह्मोवाच ॥ ॥ एताःकथंव्रजेभाव्याःकेनपुण्येनकैर्वरैः ॥ दुर्लभंहिप
दंतद्वैयोगिभिःपुरुषोत्तम ॥ १८ ॥ श्रीभगवानुवाच ॥ श्वेतद्वीपेचभूमानंश्रुतयस्तुष्टुवुःपरम् ॥ उशतीभिर्गिराभिश्चप्रसन्नोभूत्सहस्रपात् ॥ १९ ॥
श्रीहरिरुवाच ॥ वरंवृणीतयूयंवैयन्मनोवांछितंमहत् ॥ येषांप्रसन्नोहंसाक्षात्तेषांकिंदुर्लभंहितत् ॥ २० ॥ श्रीश्रुतयऊचुः ॥ वाङ्मनो
गोचरातीतंततोनज्ञायतेतुतत् ॥ आनन्दमात्रमितियद्वदंतीहपुराविदः ॥ २१ ॥ तद्रूपंदर्शयास्माकंयदिदेयोवरोहिनः ॥ श्रुत्वैतद्दर्शयामा
सस्वंलोकंप्रकृतेःपरम् ॥ २२ ॥ केवलानुभवानन्दमात्रमक्षरमव्ययम् ॥ यत्रवृन्दावनंनामवनंकामदुघैर्द्रुमैः ॥ २३ ॥ मनोरमनिकुंजाढ्यं
सर्वर्तुसुखसंयुतम् ॥ यत्रगोवर्द्धनोनामसुनिर्झरदरीयुतः ॥ २४ ॥ रत्नधातुमयःश्रीमान्सुपक्षिगणसंवृतः ॥ यत्रनिर्मलपानीयाकालिंदीसरि
तांवरा ॥ रत्नबद्धोभयतटीहंसपद्मादिसंकुला ॥ २५ ॥ नानारासरसोन्मत्तंयत्रगोपीकदंबकम् ॥ तत्कदंबकमध्यस्थःकिशोराकृतिरच्युतः
॥ २६ ॥ दर्शयित्वाचताःप्राहब्रूतकिंकरवाणिवः ॥ दृष्टोमदीयोलोकोयंयतोनास्तिपरंवरम् ॥ २७ ॥ श्रीश्रुतयऊचुः ॥ ॥ कन्दर्पको
टिलावण्येत्वयिदृष्टेमनांसिनः ॥ कामिनीभावमासाद्यस्मरक्षुभितान्यसंशयम् ॥ २८ ॥ यथात्वल्लोकवासिन्यःकामतत्वेनगोपिकाः ॥ भजं
तिरमणंमत्वाचिकीर्षाऽजनिनस्तथा ॥ २९ ॥ श्रीहरिरुवाच ॥ ॥ दुर्लभोदुर्घटश्चैवयुष्माकन्तुमनोरथः ॥ मयानुमोदितःसम्यक्सत्यो

तिरमणमत्वाचिकापोऽजाननस्तथा ॥ २९ ॥ श्रीहरिरुवाच ॥ ॥ दुर्लभोदुर्घटश्चैवयुष्माकन्तुमनोरथः ॥ मयानुमोदितःसम्यक्सत्यो

भवितुमर्हति ॥ ३० ॥ आगामिनिविरिंचौतुजातेसृष्ट्यर्थमुद्यते ॥ कल्पेसारस्वतेऽतीतेव्रजेगोप्योभविष्यथ ॥ ३१ ॥ पृथिव्यांभारतेक्षेत्रे माथुरेममममंडले ॥ वृंदावनेभविष्यामिप्रेयान्वोरासमंडले ॥ ३२ ॥ जारधर्मेणसुस्नेहंसुदृढंसर्वतोधिकम् ॥ मयिसंप्राप्यसर्वाहिकृतकृत्याभ विष्यथ ॥ ३३ ॥ ॥ श्रीभगवानुवाच ॥ ताश्चगोप्योभविष्यंतिपूर्वकल्पवरान्मम ॥ अन्यासांचैवगोपीनांलक्षणंशृणुताद्विधे ॥ ३४ ॥ सुराणांरक्षणार्थायराक्षसानांवधायच ॥ त्रेतायांरामचंद्रोभूद्वीरोदशरथात्मजः ॥ ३५ ॥ सीतास्वयंवरंगत्वाधनुर्भंगंचकारसः ॥ उवाहजा नकींसीतांरामोराजीवलोचनः ॥ ३६ ॥ तंदृष्ट्वामैथिलाःसर्वाःपुरन्ध्र्योमुमुहुर्विधे ॥ रहस्यूचुर्महात्मानंभर्तानोभवहेरघो ॥ ३७॥ तामाह राघवेन्द्रस्तुमाशोकंकुरुतास्त्रियः ॥ द्वापरान्तेकरिष्यामिभवतीनांमनोरथम् ॥ ३८ ॥ तीर्थंदानंतपःशौचंसमाचरतत्त्वतः ॥ श्रद्धयापर याभक्त्याव्रजेगोप्योभविष्यथ ॥ ३९ ॥ इतिताभ्योवरंदत्वाश्रीरामःकरुणानिधिः ॥ कोसलान्प्रययौधन्वीतेजसाजितभार्गवः ॥ ४० ॥ मार्गेचकोसलानार्योरामंदृष्ट्वातिसुंदरम् ॥ मनसावव्रिरेतंवैपतिंकन्दर्पमोहनम् ॥ ४१ ॥ मनसापिवरंरामोददौताभ्योह्यशेषवित् ॥ मनोर थंकरिष्यामिव्रजेगोप्योभविष्यथ ॥ ४२ ॥ आगतंसीतयासार्द्धंसैनिकैःसहितंरघुम् ॥ अयोध्यापुरवासिन्यःश्रुत्वाद्रष्टुंसमाययुः ॥ ४३ ॥ वीक्ष्यतंमोहमापन्नामूर्च्छिताःप्रेमविह्वलाः ॥ तेपुस्तपस्ताःसरयूतीरेरामधृतव्रताः ॥ ४४ ॥ आकाशवागभूत्तासांद्वापरान्तेमनोरथः॥ भवि ष्यतिनसन्देहःकालिंदीतीरजेवने ॥ ४५ ॥ पितुर्वाक्याद्यदारामोदंडकाख्यंवनंगतः ॥ चचारसीतयासार्द्धंलक्ष्मणेनधनुष्मता ॥ ४६ ॥ गोपालोपासकाःसर्वेदंडकारण्यवासिनः ॥ध्यायन्तःसततंमांवैरासार्थंध्यानतत्पराः ॥ ४७ ॥ येषामाश्रममासाद्यधनुर्बाणधरोयुवा ॥ तेषांध्यानेगतोरामोजटामुकुटमंडितः ॥ ४८ ॥ अन्याकृतिंततंवीक्ष्यपरंविस्मितमानसाः ॥ ध्यानादुत्थायददृशुःकोटिकन्दर्पस न्निभम् ॥ ४९ ॥ ऊचुस्तेयस्तुगोपालोवंशीवेत्रेविनाप्रभुः ॥ इत्थंविचार्यमनसानेमुश्चक्रुःस्तुतिम्पराम् ॥ ५० ॥ वरंवृणीतमुनयः श्रीरामस्तानुवाचह ॥ यथासीतातथासर्वेभूयाःस्मइतिवादिनः ॥ ५१ ॥ ॥ श्रीरामउवाच ॥ ॥ यथाहिलक्ष्मणोभ्रातातथाप्रार्थ्योवरो यदि ॥ अद्यैवसफलोभाव्योभवाद्भिर्मत्प्रसंगतः ॥ ५२ ॥ सीतापिममवाक्येनतुर्यदनुकूलभोवरः ॥ एकपत्नीव्रतोहंवैमर्यादापुरुषोत्तमः ॥५३ ॥

तस्मात्तुमद्वरेणापिद्वापरान्तेभविष्यथ ॥ मनोरथंकरिष्यामिभवतांवांछितंपरम् ॥ ५४ ॥ इतिदत्वावरंरामस्ततःपंचवटींगतः ॥ पर्ण
शालांसमासाद्यवनवासंचकारह ॥ ५५ ॥ तद्दर्शनस्मररुजःपुलिन्द्यःप्रेमविह्वलाः ॥ श्रीमत्पादरजोधृत्वाप्राणांस्त्यक्तुंसमुद्यताः
॥ ५६ ॥ ब्रह्मचारिवपुर्भूत्वारामस्तत्रसमागतः ॥ उवाचप्राणसंत्यागंमाकुरुतस्त्रियोवृथा ॥ ५७ ॥ वृंदावनेद्वापरान्तेभवितावोम
नोरथः ॥ इत्युक्त्वाब्रह्मचारीतुतत्रैवान्तरधीयत ॥ ५८ ॥ अथरामोवानरेन्द्रैरावणादीन्निशाचरान् ॥ जित्वालंकामेत्यसीतांपुष्पकेणपुरींय
यौ ॥ ५९ ॥ सीतांतत्याजराजेन्द्रोवनेलोकापवादतः ॥ अहोसतामपिभुविभवनंभूरिदुःखदम् ॥ ६० ॥ यदायदाकरोद्यज्ञंरामोराजीवलो
चनः ॥ तदातदास्वर्णमयींसीतांकृत्वाविधानतः ॥ ६१ ॥ यज्ञसीतासमूहोभून्मंदिरेराघवस्यच ॥ ताश्चैतन्यघनाभूत्वारंतुंरामंसमागताः
॥ ६२ ॥ ताआहराघवेशेन्द्रोनाहंगृह्णामिहेप्रियाः ॥ तदोचुस्ताः प्रेमपरारामंदशरथात्मजम् ॥ ६३ ॥ कथंचास्मान्नगृह्णासिभजन्तीर्मैथिलीः
सतीः ॥ अर्धांगीर्यज्ञकालेषुसततंकार्यसाधिनीः ॥ ६४ ॥ धर्मिष्ठस्त्वंश्रुतिधरोऽधर्मवद्भाषसेकथम् ॥ करंगृहीत्वात्यजसिततःपापमवा
प्स्यसि ॥ ६५ ॥ श्रीरामउवाच ॥ ॥ समीचीनंवचःसत्यंयुष्माभिर्गदितंचमे ॥ एकपत्नीव्रतोहंहिराजर्षिःसीतयैकया ॥ ६६ ॥
तस्माद्यूयंद्वापरान्तेपुण्येवृंदावनेवने ॥ भविष्यथकरिष्यामियुष्माकंतुमनोरथम् ॥ ६७ ॥ श्रीभगवानुवाच ॥ ताव्रजेपिभविष्य
न्तियज्ञसीताश्चगोपिकाः ॥ अन्यासांचैवगोपीनांलक्षणंशृणुतद्विधे ॥ ६८ ॥ इति श्रीमद्गर्गाचार्यसं०गोलोक० भगवद्ब्रह्मसंवादेउद्योगप्रश्न
वर्ण० चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ ॥ रमावैकुण्ठवासिन्यःश्वेतद्वीपसखीजनाः ॥ ऊर्ध्ववैकुण्ठवासिन्य
स्तथाजितपदाश्रिताः ॥ १ ॥ श्रीलोकाचलवासिन्यः श्रीसख्योपिसमुद्रजाः ॥ तागोप्योपिभविष्यन्तिलक्ष्मीपतिवराद्द्विजे ॥ २ ॥ काश्चिद्दि
व्याअदिव्याश्चतथात्रिगुणवृत्तयः ॥ भूमिगोप्योभविष्यंतिपुण्यैर्नानाविधैःकृतैः ॥ ३ ॥ यज्ञावतारंरुचिरंरुचिपुत्रंदिवस्पतिम् ॥ मोहिताःप्रीति
भावेनवीक्ष्यदेवजनाःस्त्रियः ॥ ४ ताश्चदेवलवाक्येनतपस्तेपुर्हिमाचले ॥ भक्त्यापरमयातामेगोप्याभाव्याव्रजेविधे ॥ ५ ॥ अन्तर्हितेभ
गवतिदेवेधन्वन्तरौभुवि ॥ औषध्योदुःखमापन्नानिष्फलाभारतेऽभवन् ॥ ६ ॥ सिद्ध्यर्थंतास्तपस्तेपुःस्त्रियोभूत्वामनोहराः ॥ चतुर्युगेव्यती

तेतुप्रसन्नोभूद्धरिःपरम् ॥ ७॥ वरंवृणीतचेत्युक्तंश्रुत्वानार्योंमहावने ॥ तंदृष्ट्वामोहमापन्नाऊचुर्भर्ताभवात्रनः ॥ ८ ॥ श्रीहरिरुवाच ॥
वृन्दावनेद्वापरान्तेलताभूत्वामनोहराः ॥ भविष्यथस्त्रियोरासेकरिष्यामिवचश्च्वः ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ भक्तिभावसमायु
क्ताभूरिभाग्यावराङ्गनाः ॥ लतागोप्योभविष्यन्तिवृन्दारण्येपितामह ॥ १० ॥ जालन्धर्यश्चयानार्य्योवीक्ष्यवृन्दापतिंहरिम् ॥ ऊचुर्वाऽ
यंहरिःसाक्षादस्माकन्तुवरोभवेत् ॥ ११ ॥ आकाशवागभूत्तासांभजताशुरमापतिम् ॥ यथावृन्दातथायूयंवृन्दारण्येभविष्यथ ॥ १२ ॥
समुद्रकन्याःश्रीमत्स्यंहरिंदृष्ट्वाचमोहिताः॥ताहिगोप्योभविष्यन्तिश्रीमत्स्यस्यवराद्व्रजे ॥ १३ ॥ आसीद्राजापृथुःसाक्षान्ममांशश्चण्ड
विक्रमः ॥ जित्वाशत्रून्नृपश्रेष्ठोधरांकामान्दुदोहह ॥ १४ ॥ बर्हिष्मतीभवास्तत्रपृथुंदृष्ट्वापुरस्त्रियः ॥ अत्रेःसमीपमागत्यताऊचुर्मोहविह्वलाः
॥ १५ ॥ अयन्तुराजराजेन्द्रःपृथुःपृथुलविक्रमः ॥ कथंवरोभवेन्नोवैतद्वदत्वंमहामुने ॥ १६ ॥ ॥ अत्रिरुवाच ॥ ॥ गोदोहंकुरुताश्वद्यपृथ्वीयं
धारणामयी ॥ सर्वदास्यतिवोदुर्गंमनोरथमहार्णवम् ॥ १७ ॥ मनोरथंप्रदुदुहुर्मनःपात्रेणताश्वगाम् ॥ तस्माद्गोप्योभविष्यन्तिवृन्दारण्येपिता
मह ॥ १८ ॥ कामसेनामोहनार्थंदिव्याअप्सरसोवराः ॥ नारायणस्यसहसाबभूवुर्गंधमादने ॥ १९ ॥ भर्तृकामाश्वताआहसिद्धोनारायणोमुनिः ॥
मनोरथोवोभविताव्रजेगोप्योभविष्यथ ॥ २० ॥ स्त्रियःसुतलवासिन्योवामनं वीक्ष्यमोहिताः ॥ तपस्तत्वाभविष्यंतिगोप्योवृन्दावनेविधे
॥ २१ ॥ नागेंद्रकन्यकाः शेषंभेजुर्भक्त्यावरेच्छया ॥ संकर्षणस्यरासार्थंभविष्यंतिव्रजेचताः ॥ २२ ॥ कश्यपोवसुदेवश्चदेवकीचादितिः
परा ॥ शूरःप्राणोध्रुवःसोपिदेवकोवतरिष्यति ॥ २३ ॥ वसुश्चैवोद्धवःसाक्षादक्षोक्रूरोदयापरः ॥ हृदीकोधनदश्चैवकृतवर्मात्वपांपतिः
॥ २४ ॥गदःप्राचीनबर्हिश्चमरुतोह्युग्रसेनउत ॥ तस्यरक्षांकरिष्यामिराज्यंदत्वाविधानतः ॥ २५ ॥ युयुधानश्चांबरीषःप्रह्लादःसात्य
किस्तथा ॥ क्षीराब्धिःशन्तनुःसाक्षाद्भीष्मोद्रोणोवसूत्तमः ॥ २६ ॥ शलश्चैवदिवोदासोधृतराष्ट्रोभगोरविः ॥ पांडुःपूषासतांश्रेष्ठोधर्म
राजोयुधिष्ठिरः ॥ २७ ॥ भीमोवायुर्बलिष्ठश्चमनुःस्वायंभुवोर्जुनः ॥ शतरूपासुभद्राचसविताकर्णएवहि ॥ २८ ॥ नकुलःसहदेवश्चस्मृ
तौद्वावश्विनीसुतौ ॥ धाताबाह्लिकिवरिश्चवह्निर्द्रोणःप्रतापवान् ॥ २९ ॥ दुर्योधनःकलेरंशोभिमन्युःसोमएवच ॥ द्रौणिःसाक्षाच्छिव

न्दहासासुद्विजारचिताम्बरा ॥ नीलाम्बरापद्ममुखीचरन्तीचारुदर्शना ॥ १५ ॥ रम्भोरूःपद्मनयनामाधवीप्रमदोत्तमा ॥ तपश्चरन्ती सुश्रोणीकूजन्नूपुरमेखला ॥ १६ ॥ जलस्थिताश्यामलांगीखाण्डवाभाविहारिणी ॥ गाण्डीविभाषिणीवन्याश्रीकृष्णंवरमिच्छती ॥ १७ ॥ द्वारकागमनाराज्ञीपट्टराज्ञीपरङ्गता ॥ महाराज्ञीरत्नभूषागोमतीतीरचारिणी ॥ १८ ॥ स्वकीयास्वसुखास्वार्थास्वीयकार्यार्थसाधिनी ॥ नवलांगाबलामुग्धावरांगावामलोचना ॥ १९ ॥ अज्ञातयौवनादीनाप्रभाकान्तिर्द्युतिश्छविः ॥ सोमाभापरमाकीर्तिःकुशलाज्ञातयौवना ॥ २० ॥ नवोढामध्यगामध्याप्रौढिःप्रौढाप्रगल्भका ॥ धीराऽधीराधैर्य्यधराज्येष्ठाश्रेष्ठाकुलांगना ॥ २१ ॥ क्षणप्रभाचञ्चलार्चा विद्युत्सौदामिनीतडित् ॥ स्वाधीनपतिकालक्ष्मीःपुष्टास्वाधीनभर्तृका ॥ २२ ॥ कलहान्तरिताभीरुरिच्छाप्रोत्कंठिताकुला ॥ कशिपुस्थादिव्यशय्यागोविन्दहृतमानसा ॥ २३ ॥ खण्डिताखण्डशोभाढ्याविप्रलब्धाभिसारिका ॥ विरहार्ताविरहिणीनारीप्रोपितभर्तृका ॥ २४ ॥ मानिनीमानदाप्राज्ञामन्दारवनवासिनी ॥ झङ्कारिणीझणत्कारीरणन्मंजीरनूपुरा ॥ २५ ॥ मेखलामेखलाकांचीश्रीकाञ्चीकाञ्चनामयी ॥ कंचुकीकंचुकमणिःश्रीकंठाढ्यामहामणिः ॥ २६ ॥ श्रीहारिणापद्महारामुक्तामुक्ताफलार्चिता ॥ रत्नकंकणकेयूरास्फुरदंगुलिभूषणा ॥ २७ ॥ दर्पणादर्पणीभूतादुष्टदर्पविनाशिनी ॥ कंबुग्रीवाकंबुधराग्रैवेयकविराजिता ॥२८॥ ताटंकिनीदंतधराहेमकुंडलमण्डिता ॥ शिखाभूषाभालपुष्पानासामौक्तिकशोभिता ॥ २९ ॥ मणिभूमिगतादेवीरैवताद्रिविहारिणी ॥ वृन्दावनगतावृन्दावृन्दारण्यनिवासिनी ॥३०॥ वृन्दावनलतामाध्वीवृन्दारण्यविभूषणा ॥ सौंदर्यलहरीलक्ष्मीर्मथुरातीर्थवासिनी ॥ ३१ ॥ विश्रांतवासिनीकाम्यारम्यागोकुलवासिनी ॥ रमणस्थलशोभाढ्यामहावनमहानदी॥३२॥ प्रणताप्रोन्नतापुष्टाभारतीभरतार्चिता ॥ तीर्थराजगतिर्गोत्रागंगासागरसंगमा ॥३३॥ सप्ताब्धिभेदिनीलोलासप्तद्वीपगताबलात् ॥ लुठंतीशैलभिद्यंतीस्फुरंतीवेगवत्तरा ॥३४॥ कांचनीकांचनीभूमिःकांचनीभूमिभावता ॥ लोकदृष्टिर्लोकलीलालोकालोकाचलार्चिता ॥ ३५ ॥ शैलोद्गतास्वर्गगतास्वर्गार्चास्वर्गपूजिता ॥ वृन्दावनवनाध्यक्षारक्षाकक्षातटीपटी ॥ ३६ ॥ असिकुण्डगताकच्छास्वच्छन्दोच्छलितादिजा ॥ कुहरस्थारयप्रस्थाप्रस्थाशांतितरातुरा ॥ ३७ ॥ अंबुच्छटासीकरा

भादर्द्दुरादर्दुरीधरा ॥ पापांकुशापापसिंहीपापद्रुमकुठारिणी ॥ ३८ ॥ पुण्यसंघापुण्यकीर्तिःपुण्यदापुण्यवर्द्धिनी ॥ मधोर्वननदीमुख्यातु
लातालवनस्थिता ॥ ३९ ॥ कुमुद्वननदीकुब्जाकुमुदांभोजवर्द्धिनी ॥ प्लवरूपावेगवतीसिंहसर्पादिवाहिनी ॥ ४० ॥ बहुलीबहुदाबह्वीबहु
लावनवन्दिता ॥ राधाकुण्डकलाराध्याकृष्णकुण्डजलाश्रिता ॥ ४१ ॥ ललिताकुण्डगाघंटाविशाखाकुण्डमण्डिता ॥ गोविन्दकुण्डनिल
यागोपकुण्डतरंगिणी ॥४२॥ श्रीगंगामानसीगंगाकुसुमांबरभाविनी ॥ गोवर्द्धनीगोधनाढचामयूरीवरवर्णिनी ॥४३॥ सारसीनीलकंठाभा
कूजत्कोकिलपोतकी ॥ गिरिराजप्रभूर्भूरिरातपत्रातपत्रिणी ॥४४॥ गोवर्द्धनांकागोदंतीदिव्यौषधिनिधिःश्रुतिः ॥ पारदीपारदमयीनारदी
शारदीभृतिः ॥ ४५ ॥ श्रीकृष्णचरणांकस्थाकामाकामवनांचिता ॥ कामाटवीनन्दिनीचनन्दग्राममहीधरा ॥ ४६ ॥ बृहत्सानुद्युतिःप्रो
तानन्दीश्वरसमन्विता ॥ काकलीकोकिलमयीभांडारकुशकौशला ॥ ४७ ॥ लोहार्गलप्रदाकाराकाश्मीरवसनावृता ॥ बर्हिषदी
शोणपुरीशूरक्षेत्रपुराधिका ॥ ४८ ॥ नानाभरणशोभाढचानानावर्णसमन्विता ॥ नानानारीकदंबाढचानानावस्त्रविराजिता ॥ ४९ ॥
नानालोकगतावर्चिर्नानाजलसमन्विता ॥ स्त्रीरत्नंरत्ननिलयाललनारत्नरंजिनी ॥ ५० ॥ रंगिणीरंगभूमाढचारंगारंगमहीरुहा ॥ रा
जविद्याराजगुह्याजगत्कीर्त्तिर्घनाघना ॥ ५१ ॥ विलोलघंटाकृष्णांगाकृष्णदेहसमुद्भवा ॥ नीलपंकजवर्णाभानीलपंकजहारिणी ॥ ५२ ॥
नीलाभानीलपद्माढचानीलांभोरुहवासिनी ॥ नागवल्लीनागपुरीनागवल्लीदलार्चिता ॥ ५३ ॥ तांबूलचर्चिताचर्चामकरन्दमनोहरा ॥ स
केसराकेसरिणीकेशपाशाभिशोभिता ॥ ५४ ॥ कज्जलाभाकज्जलाक्ताकज्जलीकलितांजना ॥ अलक्तचरणाताम्रालालाताम्रीकृतांब
रा ॥ ५५ ॥ सिन्दूरितालिप्तवाणीसुश्रीःश्रीखंडमंडिता ॥ पाटीरपंकवसनाजटामांसीरुचाम्बरा ॥ ५६ ॥ आगर्य्यगुरुगन्धाक्तातग
राश्रितमारुता ॥ सुगन्धितैलरुचिराकुन्तलालिःसुकुन्तला ॥ ५७ ॥ शकुन्तलाऽपांसुलाचपातिव्रत्यपरायणा ॥ सूर्यकोटिप्रभासूर्य
कन्यासूर्यसमुद्भवा ॥ ५८ ॥ कोटिसूर्य्यप्रतीकाशासूर्यजासूर्यनंदिनी ॥ संज्ञासंज्ञासुतास्वेच्छासंज्ञामोदप्रदायिनी ॥ ५९ ॥ संज्ञा
पत्रीस्फुरच्छायातपन्तीतापकारिणी ॥ सावर्ण्यानुभवावेदीवडवासौख्यदायिनी ॥ ६० ॥ शनैश्चरानुजाकीलाचन्द्रवंशविवर्द्धिनी ॥

चन्द्रवंशवधूश्चन्द्राचन्द्रावलिसहायिनी ॥ ६१ ॥ चन्द्रावतीचन्द्रलेखाचंद्रकांतानुगांशुका ॥ भैरवीपिंगलाशंकीलीलावत्यागरीमयी ॥ ॥ ६२ ॥ धनश्रीर्देवगांधारीस्वर्मणिर्गुणवर्द्धिनी ॥ व्रजमल्लार्यंधकारीविचित्राजयकारिणी ॥ ६३ ॥ गांधारीमंजरीटोडीगुर्जर्य्यासाव रीजया ॥ कर्णाटीरागिणीगौडीवैराटीगौरवाटिका ॥ ६४ ॥ चतुश्चन्द्रकलाहेरीतैलंगीविजयावती ॥ तालीतालस्वरागानक्रियामात्र प्रकाशिनी ॥ ६५ ॥ वैशाखीचंचलाचारुर्माचारीघूंघटीघटा ॥ वैरांगरीसोरठीशाकेदारीजलधारिका ॥ ६६ ॥ कामाकरश्रीकल्या णगौडकल्याणमिश्रिता ॥ रामसंजीविनीहेलामन्दारीकामरूपिणी ॥ ६७ ॥ सारंगीमारुनीहोढासागरीकामवादिनी ॥ वैभासीमं गलाचान्द्रीरासमंडलमंडना ॥ ६८ ॥ कामधेनुःकामलताकामदाकमनीयका ॥ कल्पवृक्षस्थलीस्थूलाक्षुधासौधनिवासिनी ॥ ६९ ॥ गोलोकवासिनीसुभ्रूर्यष्टिभृद्द्वारपालिका ॥ शृंगारप्रकराशृंगास्वच्छाशय्योपकारिका ॥ ७० ॥ पार्षदासुमुखीसेव्याश्रीवृन्दावनपालिका ॥ निकुंजभृत्कुंजपुंजागुंजाभरणभूषिता ॥ ७१ ॥ निकुंजवासिनीप्रोष्यागोवर्द्धनतटीभवा ॥ विशाखाललितारामानीरुजामधुमाधवी ॥ ॥ ७२ ॥ एकानेकसखीशुक्लासखीमध्यामहामनाः ॥ श्रुतिरूपाऋषिरूपामैथिलाःकौशलाःस्त्रियः ॥ ७३ ॥ अयोध्यापुरवासिन्यो यज्ञसीताःपुलिंदकाः ॥ रमावैकुण्ठवासिन्यःश्वेतद्वीपसखीजनाः ॥ ७४ ॥ ऊर्ध्ववैकुंठवासिन्योदिव्याजितपदाश्रिताः ॥ श्रीलोका चलवासिन्यः श्रीसख्यःसागरोद्भवाः ॥ ७५ ॥ दिव्याअदिव्यादिव्यांगाव्याप्तास्त्रिगुणवृत्तयः ॥ भूमिगोप्योदेवनार्योलताऔषधिवीरुधः ॥ ॥ ७६ ॥ जालंधर्य्यःसिन्धुसुताःपृथुबर्हिष्मतीभवाः ॥ दिव्यांबराअप्सरसःसौतलानागकन्यकाः ॥ ७७ ॥ परंधामपरंब्रह्मपौरुषाप्र कृतिःपरा ॥ तटस्थागुणभूर्गीतागुणागुणमयीगुणा ॥ ७८ ॥ सिद्धनासदसन्मालादृष्टिर्दृश्यागुणाकरी ॥ महत्तत्त्वमहंकारोमनोबुद्धिः प्रचेतना ॥ ७९ ॥ चेतोवृत्तिःस्वान्तरात्माचतुर्द्धाचतुरक्षरा ॥ चतुर्व्यूहश्चतुर्मूर्तिर्व्योमवायुरदोजलम् ॥ ८० ॥ महीशब्दोरसोगन्धः स्पर्शोरूपमनेकधा ॥ कर्मेंद्रियंकर्ममयीज्ञानंज्ञानेन्द्रियंद्विधा ॥ ८१ ॥ त्रिधाधिभूतमध्यात्ममधिदैवमधिस्थितम् ॥ ज्ञानशक्तिःक्रि याशक्तिःसर्वदेवाधिदेवता ॥ ८२ ॥ तत्त्वसंघाविराण्मूर्तिर्धारणाधारणामयी ॥ श्रुतिःस्मृतिर्वेदमूर्तिःसंहितागर्गसंहिता ॥ ८३ ॥

पराशरीसैवसृष्टिःपारहंसीविधातृका ॥ याज्ञवल्कीभागवतीश्रीमद्भगवतार्चिता ॥ ८४ ॥ रामायणमयीरम्यापुराणपुरुषप्रिया ॥
पुराणमूर्तिःपुण्यांगाशास्त्रमूर्तिर्महोन्नता ॥ ८५ ॥ मनीषाधिषणाबुद्धिर्वाणीधीःशेमुषीमतिः ॥ गायत्रीवेदसावित्रीब्रह्माणीब्रह्मलक्ष
णा ॥ ८६ ॥ दुर्गापर्णासतीसत्यापार्वतीचंडिकांबिका ॥ आर्यादाक्षायणीदाक्षीदक्षयज्ञविघातिनी ॥८७॥ पुलोमजाशचीन्द्राणीवेदीदेव
वरार्पिता ॥ वायुनाधारिणीधन्यावायवीवायुवेगगा ॥ ८८ ॥ यमानुजासंयमनीसंज्ञाच्छायास्फुरद्द्युतिः ॥ रत्नदेवीरत्नवृन्दातारा
तरणिमण्डला ॥ ८९ ॥ रुचिःशान्तिःक्षमाशोभादयादक्षाद्युतिस्त्रपा ॥ तलतुष्टिर्विभापुष्टिःसन्तुष्टिःपुष्टभावना ॥ ९० ॥ चतु
र्भुजाचारुनेत्राद्विभुजाष्टभुजाबला ॥ शंखहस्तापद्महस्ताचक्रहस्तागदाधरा ॥ ९१ ॥ निषंगधारिणीचर्मखड्गपाणिर्धनुर्धरा ॥ धनुष्टं
कारिणीयोध्रीदैत्योद्भटविनाशिनी ॥ ९२ ॥ रथस्थागरुडारूढाश्रीकृष्णहृदयस्थिता ॥ वंशीधराकृष्णवेषास्त्रग्विणीवनमालिनी ॥
॥ ९३ ॥ किरीटधारिणीयानामन्दमन्दगतिर्गतिः ॥ चन्द्रकोटिप्रतीकाशातन्वीकोमलविग्रहा ॥ ९४ ॥ भैष्मीभीष्मसुताभीमारुक्मि
णीरुक्मरूपिणी ॥ सत्यभामाजांबवतीसत्याभद्रासुदक्षिणा ॥९५॥ मित्रवृन्दासखीवृन्दावृन्दारण्यध्वजोर्ध्वगा ॥ शृंगारकारिणीशृंगाशृंग
भूःशृङ्गदाशुगा ॥ ९६ ॥ तितिक्षेक्षास्मृतिःस्पर्धास्पृहाश्रद्धास्वनिर्वृतिः ॥ ईर्षातृष्णाभिधाप्रीतिर्हिंसायाच्ञाक्लमाकृषिः ॥ ९७ ॥
आशानिद्रायोगनिद्रायोगिनीयोगदाश्रुगा ॥ निष्ठाप्रतिष्ठासमितिःसत्वप्रकृतिरुत्तमा ॥ ९८ ॥ तमःप्रकृतिर्दुर्मर्षीरजःप्रकृतिरानि
तिः ॥ क्रियाऽक्रियाकृतिर्ग्लानिःसात्विक्याध्यात्मिकीवृषा ॥ ९९ ॥ सेवाशिखामणिर्वृद्धिराहूतिःसुमतिर्द्युभूः ॥ रज्जुर्द्विदाम्नीषड्व
र्गासंहितासौख्यदायिनी ॥ १०० ॥ मुक्तिःप्रोक्तिर्देशभाषाप्रकृतिःपिंगलोद्भवा ॥ नागभावानागभूषानागरीनगरीनगा ॥ १ ॥ नौ
र्नौकाभवनौर्भाव्याभवसागरसेतुका ॥ मनोमयीदारुमयीसैकतीसिकतामयी ॥ २ ॥ लेख्यालेप्यामणिमयीप्रतिमाहेमनिर्मिता ॥ शैली
शैलेभवाशीलाशीकराभाचलाचला ॥ ३ ॥ अस्थिताऽस्वस्थितातुलीवैदिकीतांत्रिकीविधिः ॥ संध्यासंध्याभ्रवसनावेदसंधिःसुधाम
यी ॥ ४ ॥ सायंतनीशिखावेध्यासूक्ष्माजीवकलाकृतिः ॥ आत्मभूताभाविताऽण्वीप्रह्वीकमलकर्णिका ॥ ५ ॥ नीराजनीमहाविद्याकं

दलीकार्यसाधिनी ॥ पूजाप्रतिष्ठाविपुलापुनंतीपारलौकिकी ॥ ६ ॥ शुक्ताशुक्तिमौक्तिकाचप्रतीतिःपरमेश्वरी ॥ विराजोष्णिग्विराट्वे
णीवेणुकावेणुनादिनी ॥ ७ ॥ आवर्तिनीवार्तिकदावार्त्तावृत्तिर्विमानगा ॥ रासाढ्यारासिनीरासीरासमण्डलमंडली ॥ ८ ॥ गोपगोपीश्वरी
गोपीगोपीगोपालवन्दिता ॥ गोचारिणीगोपनदीगोपानन्दप्रदायिनी ॥ ९ ॥ पशव्यदागोपसेव्याकोटिशोगोगणावृता ॥ गोपानुगागोप
वतीगोविन्दपदपादुका ॥ ११० ॥ वृषभानुसुताराधाश्रीकृष्णवशकारिणी ॥ कृष्णप्राणाधिकाशश्वद्रसिकारसिकेश्वरी ॥ ११ ॥ अव
टोदाताम्रपर्णीकृतमालाविहायसी ॥ कृष्णावेणीभीमरथीतापीरेवामहापगा ॥ १२ ॥ वैयासकीचकावेरीतुंगभद्रासरस्वती ॥ चन्द्रभागावे
त्रवतीऋषिकुल्याककुद्मती ॥ १३ ॥ गौतमीकौशिकीसिन्धुर्बाणगंगातिसिद्धिदा ॥ गोदावरीरत्नमालागंगामन्दाकिनीबला ॥ १४ ॥
स्वर्णदीजाह्नवीवेलावैष्णवीमंगलालया ॥ बालाविष्णुपदीप्रोक्तासिन्धुसागरसंगता ॥ १५ ॥ गंगासागरशोभाढ्यासामुद्रीरत्नदाधुनी ॥
भागीरथीस्वर्धुनीभूःश्रीवामनपदच्युता ॥ १६ ॥ लक्ष्मीरमारामणीयाभार्गवीविष्णुवल्लभा ॥ सीतार्चिर्जानकीमाताकलंकरहिताक
ला ॥ १७ ॥ कृष्णपादाब्जसंभूतासर्वात्रिपथगामिनी ॥ धराविश्वंभरानन्ताभूमिर्धात्रीक्षमामयी ॥ १८ ॥ स्थिताधरित्रीधरणिरुर्वीशे
षफणस्थिता ॥ अयोध्याराघवपुरीकौशिकीरघुवंशजा ॥ १९ ॥ मथुरामाथुरीपंथायादवीध्रुवपूजिता ॥ मायापूर्बिल्वनीलाद्रिगंगाद्वा
रविनिर्गता ॥ १२० ॥ कुशावर्तमयीध्रौव्याध्रुवमण्डलमध्यगा ॥ काशीशिवपुरीशेषाविंध्यावाराणसीशिवा ॥ २१ ॥ अवंतिकादेवपु
रीप्रोज्ज्वलोज्जयिनीजिता ॥ द्वारावतीद्वारकामाकुशभूताकुशस्थली ॥ २२ ॥ महापुरीसप्तपुरीनन्दिग्रामस्थलस्थिता ॥ शालग्राम
शिलादित्याशंभलग्राममध्यगा ॥ २३ ॥ वंशगोपालिनीक्षिप्राहरिमन्दिरवर्तिनी ॥ बर्हिष्मतीहस्तिपुरीशक्रप्रस्थनिवासिनी ॥ २४ ॥ दा
डिमीसैंधवीजंबूःपौष्करीपुष्करप्रसूः ॥ उत्पलावर्तगमनानैमिषीनैमिषावृता ॥ २५ ॥ कुरुजांगलभूःकालीहैमवत्यार्बुदीबुधा ॥ शूकर
क्षेत्रविदिताश्वेतवाराहधारिता ॥२६॥ सर्वतीर्थमयीतीर्थातीर्थानांतीर्थकारिणी ॥ हारिणीसर्वदोषाणांदायिनीसर्वसम्पदाम् ॥ २७ ॥ वर्द्धि
नीतेजसांसाक्षाद्गर्भवासिनिकृंतनी ॥ गोलोकधामधनिनीनिकुंजनिजमंजरी ॥२८॥ सर्वोत्तमासर्वपुण्यासर्वसौंदर्यशृंखला ॥ सर्वतीर्थोप

रिगतासर्वतीर्थाधिदेवता ॥ २९ ॥ नाम्नांसहस्रंकालिन्द्याःकीर्तिदंकामदम्परम् ॥ महापापहरम्पुण्यमायुर्वर्द्धनमुत्तमम् ॥ १३० ॥ एक
वारंपठेद्रात्रौचौरेभ्योनभयंभवेत् ॥ द्विवारंप्रपठेन्मार्गेदस्युभ्योनभयंक्वचित् ॥ ३१ ॥ द्वितीयांतुसमारभ्यपठेत्पूर्णावधिंद्विजः ॥ दशवार
मिदंभक्त्याध्यात्वादेवींकलिन्दजाम् ॥ ३२ ॥ रोगीरोगात्प्रमुच्येतबद्धोमुच्येतबन्धनात् ॥ गुर्विणीजनयेत्पुत्रंविद्यार्थीपंडितोभवेत् ॥३३॥
मोदनंस्तंभनंशश्वद्वशीकरणमेवच ॥ उच्चाटनंघातनञ्चशोषणंदीपनंतथा ॥ ३४ ॥ उन्मादनन्तापनञ्चनिधिदर्शनमेवच ॥ यद्यद्वाञ्छति
चित्तेनतत्तत्प्राप्नोतिमानवः ॥ ३५ ॥ ब्राह्मणोब्रह्मवर्चस्वीराजन्योजगतीपतिः ॥ वैश्योनिधिपतिर्भूयाच्छूद्रःश्रुत्वातुनिर्मलः ॥ ३६ ॥ पूजा
कालेतुयोनित्यंपठतेभक्तिभावतः ॥ लिप्यतेनसपापेनपद्मपत्रमिवांभसा ॥ ३७ ॥ शतवारंपठेन्नित्यंवर्षावधिमतःपरम् ॥ पटलंपद्ध
तिंकृत्वास्तवंचकवचंतथा ॥ ३८ ॥ सप्तद्वीपमहीराज्यंप्राप्नुयान्नात्रसंशयः ॥ ३९ ॥ निष्कारणंपठेद्यस्तुयमुनाभक्तिसंयुतः ॥ त्रैवर्ग्यमे
त्यसुकृतीजीवन्मुक्तोभवेदिह ॥१४०॥ निकुंजलीलाललितंमनोहरंकलिन्दजाकूललताकदम्बकम् ॥ वृन्दावनोन्मत्तमिलिन्दशब्दितंव्रजे
त्सगोलोकमिदंपठेच्चयः ॥ १४१ ॥ इति श्रीग०मा०खं० श्रीसौभरिमान्धातृसंवादेयमुनासहस्रनामकथनंनामैकोनविंशोऽध्यायः ॥१९॥
श्रीनारदउवाच ॥ ॥इतिकृष्णास्तवंश्रुत्वामान्धातानृपसत्तमः ॥ अयोध्यांप्रययौवीरोनत्वाश्रीसौभरिंमुनिम् ॥ १ ॥ इदंमयातेक
थितंगोपीनांचरितंशुभम् ॥ महापापहरम्पुण्यंकिम्भूयःश्रोतुमिच्छसि ॥ २ ॥ ॥ बहुलाश्वउवाच ॥ ॥ श्रुतंतवमुखाद्ब्रह्मन्गोपीनां
वर्णनम्परम् ॥ यमुनायाश्चपञ्चाङ्गम्महापातकनाशनम् ॥ ३ ॥ श्रीकृष्णःसबलःसाक्षाद्गोलोकाधिपतिःप्रभुः ॥ अग्रेचकारकांलीलांललि
तांव्रजमण्डले ॥ ४ ॥ ॥ श्रीनारदउवाच ॥ ॥ एकदाचारयन्गाःस्वाःसबलोगोपबालकैः ॥ भांडीरेयमुनातीरेबाललीलाञ्चकारह ॥ ५ ॥
विहारंकारयन्बालैर्वाह्यवाहकलक्षणम् ॥ विजहारवनेकृष्णोदर्शयन्गामनोहराः ॥ ६ ॥ तत्रागतोगोपरूपीप्रलम्बःकंसनोदितः ॥ नज्ञा
तोबालकैःसोपिहरिणाविदितोऽभवत् ॥ ७ ॥ विहारेविजयंरामंनेतुंकोपिनमन्यते ॥ उवाहतंप्रलम्बोसौभाण्डीराद्यमुनातटम् ॥ ८ ॥
अवरोहणतोदैत्योमथुरांगतुमुद्यतः ॥ दधारवनवद्रूपंगिरीन्द्रइवदुर्गमः ॥ ९ ॥ बभौबलोदैत्यपृष्ठेसुन्दरोलोलकुण्डलः ॥ आकाशस्थः

पूर्णचन्द्रःसंतडिज्जलदोयथा ॥ १० ॥ दैत्यंभयंकरंवीक्ष्यबलदेवोमहाबलः ॥ रुपाहनन्मुष्टिनातंशिरस्यद्रिंयथाद्रिभित् ॥ ११ ॥ विशी
र्णमस्तकोदैत्योयथावज्रहतोगिरिः ॥ पपातभूमौसहसाचालयन्वसुधातलम् ॥ १२ ॥ तज्ज्योतिर्निर्गतंदीर्घंबलेलीनंबभूवह ॥ तदै
ववृषुर्देवाःपुष्पैर्नन्दनसंभवैः ॥ १३ ॥ अभूज्जयजयारावोदिविभूमौनृपेश्वर ॥ एवंश्रीबलदेवस्यचरितंपरमाद्भुतम् ॥ १४ ॥ मया
तेकथितंराजन्किम्भूयःश्रोतुमिच्छसि ॥ ॥ बहुलाश्वउवाच ॥ ॥ कोयंदैत्यःपूर्वकालेप्रलम्बोरणदुर्मदः ॥ बलदेवस्यहस्तेनमु
क्तिम्प्रापकथंमुने ॥ १५ ॥ ॥ श्रीनारदउवाच ॥ ॥ शिवस्यपूजनार्थंहियक्षराट्स्ववनेशुभे ॥ कारयामासपुष्पाणांरक्षांयक्षैरि
तस्ततः ॥ १६ ॥ तदप्यस्यापिजगृहुःपुष्पाणिप्रस्फुरन्तिच ॥ ततःक्रुद्धोददौशापंयक्षराड्धनदोबली ॥ १७ ॥ येगृह्णंत्यस्यपुष्पाणि
स्वेचान्येसुरमानवाः ॥ भवितारोऽसुराःसर्वेमच्छापात्सहसाभुवि ॥ १८ ॥ हूहूसुतोथविजयोविचरंस्तीर्थभूमिषु ॥ वनंचैत्ररथंप्राप्तोगाय
न्विष्णुगुणान्पथि ॥ १९ ॥ वीणापाणिरजानन्वैगन्धर्वःसुमनांसिच ॥ गृहीत्वासोऽसुरोजातोगन्धर्वत्वंविहायतत् ॥ २० ॥ तदैवश
रणंप्राप्तः कुबेरस्यमहात्मनः ॥ नत्वाततप्रार्थनांचक्रेकृतांजलिपुटःशनैः ॥ २१ ॥ तस्मैप्रसन्नोराजेन्द्रकुबेरोपिवरंददौ ॥ त्वंविष्णुभक्तः
शान्तात्मामाशोकंकुरुमानद ॥ २२ ॥ द्वापरांतेचतेमुक्तिर्बलदेवस्यहस्ततः ॥ भविष्यतिनसन्देहोभाण्डीरेयमुनातटे ॥ २३ ॥ ॥ श्रीना
रदउवाच ॥ ॥ हूहूसुतःसगन्धर्वःप्रलम्बोभून्महाऽसुरः ॥ कुबेरस्यवराद्राजन्परंमोक्षंजगामह ॥ २४ ॥ ॥ इतिश्रीगर्गसंहितायां
श्रीमाधुर्यखण्डे श्रीनारदबहुलाश्वसं॰प्रलम्बवधोनामविंशतितमोऽध्यायः ॥ २० ॥ ॥ नारदउवाच ॥ ॥ अथक्रीडाप्रसक्तेषुगो
पेषुसबलेषुच ॥ तृणलोभेनविविशुर्गावःसर्वामहद्वनम् ॥ १ ॥ ताआनेतुंगोपबालाःप्राप्तामुंजाटवींपराम् ॥ संभूतस्तत्रदावाग्निःप्रलया
ग्निसमोमहान् ॥ २ ॥ गोभिर्गोपाःसमेतास्तेश्रीकृष्णंसबलंहरिम् ॥ वदन्तःपाहिपाहीतिभयार्ताःशरणंगताः ॥ ३ ॥ वीक्ष्यवह्निभयंस्वा
नांकृष्णोयोगेश्वरेश्वरः ॥ न्यमीलयतमाभैष्टलोचनानीत्यभाषत ॥ ४ ॥ तथाभूतेषुगोपेषुतमग्निंभयकारकम् ॥ अपिबद्भगवान्देवोदे
वानांपश्यतांनृप ॥ ५ ॥ एवंपीत्वामहावह्निंनीत्वागोपालगोगणम् ॥ प्राप्तोभूद्यमुनापारेशुभाशोकवनेहरिः ॥ ६ ॥ तत्रक्षुत्पीडितागो

पाः श्रीकृष्णंसबलंहरिम् ॥ कृतांजलिपुटाऊचुःक्षुधार्ताःस्मोवयम्प्रभो ॥ ७ ॥ तदातान्प्रेषयामासयज्ञआंगिरसेहरिः ॥ तेगत्वातंयज्ञवरं
नत्वोचुर्विमलंवचः ॥ ८ ॥ ॥ गोपाऊचुः ॥ ॥ गोपालबालैःसबलःसमागतोगाश्चारयञ्छ्रीव्रजराजनन्दनः ॥ क्षुत्संयुतोऽस्मैसगणाय
भूसुराःप्रयच्छताश्वन्नमनंगमोहिने ॥ ९ ॥ ॥ श्रीनारदउवाच ॥ ॥ नाकिंचिदूचुस्तेसर्वेवचःश्रुत्वाद्विजानृप ॥ गोपानिराशाआगत्य
प्रत्यूचुःसबलंहरिम् ॥ १० ॥ ॥ गोपाऊचुः ॥ त्वमस्यधीशोव्रजमंडलेबलीश्रीगोकुलेनन्दपुरोग्रदण्डधृक् ॥ नवर्ततेदण्डमलंमघोः
पुरिप्रचंडचंडांशुमहस्तवस्फुरत् ॥ ११ ॥ ॥ श्रीनारदउवाच ॥ ॥ पुनस्तान्प्रेषयामासतत्पत्नीभ्योहरिःस्वयम् ॥ यज्ञवाटंपुनर्ग
त्वानत्वाविप्रप्रियास्तदा ॥ १२ ॥ कृतांजलिपुटाऊचुर्गोपाःकृष्णप्रणोदिताः ॥ १३ ॥ ॥ गोपाऊचुः ॥ ॥ गोपालबालैःसबलस्समा
गतोगाश्चारयञ्छ्रीव्रजराजनन्दनः ॥ क्षुत्संयुतोऽस्मैसगणायचांगनाःप्रयच्छताश्वन्नमनंगमोहिने ॥ १४ ॥ ॥ श्रीनारदउवाच ॥ ॥
कृष्णंसमागतंश्रुत्वाकृष्णदर्शनलालसाः ॥ चक्रुस्तथान्नंपात्रेषुनीत्वासर्वद्विजांगनाः ॥ १५ ॥ त्यक्त्वासद्योलोकलज्जांकृष्णपार्श्वंसमाय
युः ॥ अशोकानांवनेरम्येकृष्णातीरेमनोहरे ॥ १६ ॥ यथाश्रुतंतथादृष्टंश्रीहरेरूपमद्भुतम् ॥ प्राप्यानंदंगताःसर्वास्तुरीयंयोगिनोय
था ॥ १७ ॥ ॥ श्रीभगवानुवाच ॥ ॥ धन्यायूयंदर्शनार्थमागताहेद्विजांगनाः ॥ प्रतियातगृहाञ्छीघ्रंनिःशंकाभूमिदेवताः ॥ १८ ॥
युष्माकंतुप्रभावेणपतयोवोद्विजातयः ॥ सद्योयज्ञफलंप्राप्ययुष्माभिःसहनिर्मलाः ॥ १९ ॥ गमिष्यंतिपरंधामगोलोकंप्रकृतेःपरम् ॥
॥ श्रीनारदउवाच ॥ ॥ अथनत्वाहरिंसर्वाआजग्मुर्यज्ञमण्डलम् ॥ २० ॥ तादृष्ट्वाब्राह्मणाःसर्वेस्वात्मानंधिक्प्रचक्रिरे ॥ दिदृक्षवस्ते
श्रीकृष्णंकंसाद्भीतानचागताः ॥ २१ ॥ भुक्त्वान्नंसबलःकृष्णोगोपालैःसहमैथिल ॥ गाःपालयन्नाजगामवृन्दारण्यंमनोहरम् ॥ २२ ॥
॥ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेनारदबहुलाश्वसंवादेदावाग्निमोक्षविप्रपत्नीदर्शनंनामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥
॥ श्रीनारदउवाच ॥ ॥ एकदानन्दराजोसौकृत्वाचैकादशीव्रतम् ॥ द्वादश्यांयमुनांस्नातुंगोपालैर्जलमाविशत् ॥ १ ॥ तंगृहीत्वापा
शिभृत्यःपाशिलोकंजगामह ॥ तदाकोलाहलेजातेगोपानांमैथिलेश्वर ॥ २ ॥ आश्वास्यसर्वान्भगवान्गतवान्वारुणींपुरीम् ॥ भस्मी

चकारसहसापुरीदुर्गंहारिःस्वयम् ॥ ३ ॥ कोटिमार्तंडसंकाशंदृष्ट्वाप्रकुपितंहरिम् ॥ नत्वाकृतांजलिःपाशीपरिक्रम्याहधर्षितः ॥ ४ ॥
॥ वरुणउवाच ॥ ॥ नमःश्रीकृष्णचन्द्रायपरिपूर्णतमायच ॥ असंख्यब्रह्मांडभृतेगोलोकपतयेनमः ॥ ५ ॥ चतुर्व्यूहायमहसेनमस्ते
सर्वतेजसे ॥ नमस्तेसर्वभावायपरस्मैब्रह्मणेनमः ॥ ६ ॥ केनापिमूढेनममानुगेनकृतंपरंहेलनमद्यचैवम् ॥ तत्क्षम्यतांभोशरणागतंमांपरेश
भूमन्परिपाहिपाहि ॥ ७ ॥ ॥ नारदउवाच ॥ ॥ इतिप्रसन्नोभगवान्नंदंनीत्वासुजीवितम् ॥ सौख्यंप्रकाशयन्बंधून्व्रजमंडलमाय
यौ ॥ ८ ॥ नन्दराजमुखाच्छ्रुत्वाप्रभावंश्रीहरेस्तुतम् ॥ गोपीगोपगणाऊचुःश्रीकृष्णंनन्दनन्दनम् ॥ ९ ॥ यदित्वंभगवान्साक्षाल्लोकपा
लैःसुपूजितः ॥ दर्शयाशुपरंलोकंवैकुठंतर्हिनःप्रभो ॥ १० ॥ नीत्वासर्वांस्ततःकृष्णएत्यवैकुंठमन्दिरम् ॥ दर्शयामासरूपंस्वंज्योतिर्मं
डलमध्यगम् ॥ ११ ॥ सहस्रभुजसंयुक्तंकिरीटकटकोज्ज्वलम् ॥ शंखचक्रगदापद्मवनमालाविराजितम् ॥ १२ ॥ असंख्यकोटिमार्तंड
संकाशंशेषसंस्थितम् ॥ चामरांदोलदिव्याभंब्रह्माद्यैःपरिसेवितम् ॥ १३ ॥ तद्दैवतान्गोपगणान्पार्षदास्तेगदाधराः ॥ ऋजुंकृत्वानतिं
धृत्वादूरेस्थाप्यप्रयत्नतः ॥ १४ ॥ चकितानिवतान्वीक्ष्यप्रोचुस्तेपार्षदागिरा ॥ रेरेतूष्णींप्रभवतमावक्तव्यंवनेचराः ॥ १५ ॥ भाषणं
माप्रकुरुतनदृष्टाकिंसभाहरेः ॥ वेदावदंतिचात्रैवसाक्षाद्देवेस्थितेप्रभौ ॥ १६ ॥ इतिशिक्षांगतागोपाहर्षितामौनमास्थिताः ॥ मनस्यूचु
रयंकृष्णउच्चसिंहासनस्थितः ॥ १७ ॥ अस्मान्दूरादधःकृत्वास्माभिर्वक्तिनकर्हिचित् ॥ तस्माद्व्रजाद्वरोनास्तिकोपिलोकोनसौख्यदः ॥
॥ १८ ॥ ॥ यत्रानेनस्वभ्रात्रापिवार्त्तास्याद्धिपरस्परम् ॥ इतिप्रवदतस्तान्वैनीत्वाश्रीभगवान्हरिः ॥ व्रजमागतवान्राजन्परिपूर्णतमः
प्रभुः ॥ १९ ॥ ॥ इतिश्रीमद्ग॰स॰श्रीमाधुर्यखण्डेनारदबहुलाश्वसंवादेनन्दादिवैकुण्ठदर्शनंनामद्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥छ॥
॥ श्रीनारदउवाच ॥ ॥ एकदानृपगोपालाःशकटैरत्नपूरितैः ॥ वृषभानूपनन्दाद्याआजग्मुश्चांबिकावनम् ॥ १ ॥ भद्रकालींपशुप
तिंपूजयित्वाविधानतः ॥ ददुर्दानंद्विजातिभ्यःसुप्तास्तत्रसरित्तटे ॥ २ ॥ तत्रैकोनिर्गतोरात्रौसर्पोनन्दंपदेऽग्रहीत् ॥ कृष्णकृष्णेतिचुक्रो
शनन्दोतिभयविह्वलः ॥ ३ ॥ तदोल्मुकैर्गोपबालास्तेडुराजगरंनृप ॥ पदंसोपिनतत्याजसर्पोर्थंस्वमाणिंयथा ॥ ४ ॥ तताडस्वप

दासर्पंभगवाँल्लोकपावनः ॥ त्यक्त्वातदैवसर्पत्वंभूत्वाविद्याधरःकृती ॥ ५ ॥ नत्वाकृष्णंपरिक्रम्यकृतांजलिपुटोवदत् ॥ सुदर्शन उवाच ॥ ॥ अहंसुदर्शनोनामविद्याधरवरःप्रभो ॥ अष्टावक्रंमुनिंदृष्ट्वाहसितोस्मिमहाबलः ॥ ६ ॥ मह्यंशापंददौसोपित्वंसर्पोभवदुर्मते ॥ तच्छापादद्यमुक्तोहंकृपयातवमाधव ॥ ७ ॥ त्वत्पादपद्ममकरन्दरजःकणानांस्पर्शेनदिव्यपदवींसहसागतोस्मि ॥ तस्मैनमोभगवतेभुवनेश्वराययोभूरिभारहरणायभुवोवतारः ॥ ८ ॥ ॥ श्रीनारदउवाच ॥ ॥ इतिनत्वाहरिंकृष्णंराजन्विद्याधरस्तुसः ॥ जगामवैष्णवंलोकंसर्वोपद्रववर्जितम् ॥ ९ ॥ नंदाद्याविस्मिताःसर्वेज्ञात्वाकृष्णंपरेश्वरम् ॥ अंबिकावनतःशीघ्रमाययुर्व्रजमंडलम् ॥ १० ॥ इदंमयातेकथितंश्रीकृष्णचरितंशुभम् ॥ सर्वपापहरंपुण्यंकिंभूयःश्रोतुमिच्छसि ॥ ११ ॥ ॥ बहुलाश्वउवाच ॥ ॥ अहोश्रीकृष्णचन्द्रस्य चरितंपरमाद्भुतम् ॥ श्रुत्वामनोमेतच्छ्रोतुमतृप्तंपुनरिच्छति ॥ १२ ॥ अग्रेचकारकांलीलांलीलयाव्रजमण्डले ॥ हरिर्व्रजेशःपरमोवद देवर्षिसत्तम ॥ १३ ॥ इति श्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेनारदबहुलाश्वसंवादेसुदर्शनोपाख्यानंनामत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ श्रीनारदउवाच ॥ ॥ एकदाशैलदेशेषुसबलोभगवान्हरिः ॥ कृत्वाविलापनक्रीडांचौरपालकलक्षणाम् ॥ १ ॥ तत्रव्योमासुरोदैत्योबालान्मोषायितान्बहून् ॥ नीत्वानीत्वाद्रिदर्यांचविनिःक्षिप्यपुनःपुनः ॥ २ ॥ शिलयापिदधौद्वारंमयपुत्रोमहाबलः ॥ सत्यचौरंचतंज्ञात्वाभगवान्मधुसूदनः ॥ गृहीत्वापातयामासभुजाभ्यांभूमिमंडले ॥ ३ ॥ तदामृत्युंगतोदैत्यस्तज्ज्योतिर्निर्गतंस्फुरत् ॥ दशदिक्षुभ्रमद्राजञ्छ्रीकृष्णेलीनतांगतम् ॥ ४ ॥ तदाजयजयारावोदिविभूमौबभूवह ॥ पुष्पाणिववृषुर्देवाःपरमानन्दसंवृताः ॥ ५ ॥ बहुलाश्व उवाच ॥ ॥ कोऽयंपूर्वंकुशलकृद्व्योमोनामाथतद्वद ॥ येनकृष्णेघनश्यामेलीनोभूद्दामिनीयथा ॥ ६ ॥ ॥ नारदउवाच ॥ ॥ आसीत्काश्यांभीमरथोराजादानपरायणः ॥ यज्ञकृन्मानदोधन्वीविष्णुभक्तिपरायणः ॥ ७ ॥ राज्येपुत्रंसन्निवेश्यजगाममलयाचलम् ॥ तपस्तत्रसमारेभेवर्षाणांलक्षमेवहि ॥ ८ ॥ तस्याश्रमेपुलस्त्योसौशिष्यवृन्दैःसमागतः ॥ तंदृष्ट्वानोत्थितोमानीराजर्षिर्ननतोऽभवत् ॥ ९ ॥ शापंददौपुलस्त्योपिदैत्योभवमहाखल ॥ ततस्तच्चरणोपांतेपतितंशरणागतम् ॥ १० ॥ उवाचमुनिशार्दूलःपुलस्त्योदी

नवत्सलः ॥ द्वापरांतेमाथुरेचपुण्येश्रीव्रजमंडले ॥ ११ ॥ यदुवंशपतेःसाक्षाच्छ्रीकृष्णस्यभुजौजसा ॥ ईप्सितायोगिभिर्मुक्तिर्भविष्य
तिनसंशयः ॥ १२ ॥ श्रीनारदउवाच ॥ ॥ सोयंभीमरथोराजामयदैत्यसुतोभवत् ॥ श्रीकृष्णभुजवेगेनमुक्तिंप्रापविदेहराट् ॥ १३ ॥
एकदागोपवेषेषुदैत्योऽरिष्टोमहाबलः ॥ आगतोनादयन्खंगान्तटाञ्छृंगैर्विदारयन् ॥ १४ ॥ गोप्योगोपागोगणाश्चवीक्ष्यतंदुद्रुवुर्भयात् ॥
भगवान्दैत्यहादेवोमाभैष्टेत्यभयंददौ ॥१५॥ गृहीत्वातंतुशृंगेषुनोदयामाससमाधवः ॥ सोपितंनोदयामासश्रीकृष्णंयोजनद्वयम् ॥ १६ ॥
पुच्छेगृहीत्वातंकृष्णोभ्रामयित्वाभुजौजसा ॥ भूपृष्ठेपोथयामासकमण्डलुमिवार्भकः ॥ १७ ॥ अरिष्टःपुनरुत्थायक्रोधसंरक्तलोचनः ॥
शृंगैश्चरोहितंशैलंसमुत्पाट्यमहाखलः ॥ १८ ॥ गर्जयन्घनवद्वीरःकृष्णोपरिसमाक्षिपत् ॥ कृष्णःशैलंसंगृहीत्वातस्योपरिसमाक्षिपत् ॥
॥ १९ ॥ शैलस्यापिप्रहारेणकिंचिद्व्याकुलमानसः ॥ भूमौतताडशृंगाभ्यांनिर्गतैस्तैर्जलंभुवः ॥ २० ॥ श्रीकृष्णस्तंचशृंगेषुगृहीत्वाभ्रा
मयन्मुहुः ॥ भूपृष्ठेपोथयामासवातःपद्ममिवोद्धतम् ॥ २१ ॥ तदैववृषरूपत्वंत्यक्त्वाविप्रवपुर्धरः ॥ नत्वाश्रीकृष्णपादाब्जंप्राहग
द्गदयागिरा ॥ २२ ॥ द्विजउवाच ॥ ॥ बृहस्पतेश्चशिष्योहंवरतंतुर्द्विजोत्तमः ॥ बृहस्पतिसमीपेचपठितुंगतवानहम् ॥ २३ ॥ पादौ
कृत्वास्थितोभूवंपश्यतस्तस्यसंमुखे ॥ तदारुषाहसमुनिर्वृषवत्त्वंस्थितःपुरः ॥ २४ ॥ गुरुहेलनकृत्तस्मात्त्वंवृषोभवदुर्मते ॥ तेनशापा
द्वृषोऽभूवंवंगदेशेषुमाधव ॥ २५ ॥ असुराणांप्रसंगेनासुरत्वंगतवानहम् ॥ त्वत्प्रसादाद्विमुक्तोहंशापतोऽसुरभावतः ॥ २६ ॥ ॥ श्रीकृ
ष्णायनमस्तुभ्यंवासुदेवायतेनमः ॥ प्रणतक्लेशनाशायगोविन्दायनमोनमः ॥ २७ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्त्वाश्रीहरिंनत्वासा
क्षाच्छिष्योबृहस्पतेः ॥ द्योतयन्भुवनंराजन्विमानेनदिवंययौ ॥ २८ ॥ इदंमयातेकथितंखण्डंमाधुर्य्यमद्भुतम् ॥ सर्वपापहरम्पुण्यंकृ
ष्णप्राप्तिकरंपरम् ॥ २९ ॥ कामदंपठतांशश्वत्किंभूयःश्रोतुमिच्छसि ॥ ३० ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेनारदब
हुलाश्वसंवादेव्योमासुरारिष्टासुरवधोनामचतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ शुभंभवतु ॥ ॥ छ ॥

## इति श्रीमद्गर्गाचार्यसंहितायां चतुर्थं माधुर्यखंडं सम्पूर्णम् ।

॥ श्रीगणेशायनमः ॥ ॥ वसुदेवसुतंदेवंकंसचाणूरमर्दनम् ॥ देवकीपरमानन्दंकृष्णंवन्देजगद्गुरुम् ॥ १ ॥ ॥ बहुलाश्वउवाच ॥ ॥ मथुरायांकिंचरित्रंकृतवान्भगवान्मुने ॥ कथंजघानकंसाख्यमेतन्मेब्रूहितत्त्वतः ॥ २ ॥ ॥ नारदउवाच ॥ ॥ अथैकदाहंमथुरांपुरींपरांविलोकितुंचागतवान्नृपेश्वर ॥ कर्तुंपरंदैत्यवधोद्यमंहरेःपरस्यसाक्षान्मनसाप्रणोदितः ॥ ३ ॥ सिंहासनेचप्रहतेपुरन्दरात्सितातपत्रेचलचारुचामरे ॥ स्थितंनृपंकंससुरंगदुःसहंप्रावोचमेवंशृणुतत्प्रपूजितः ॥ ४ ॥ यशोदायाःसुताजातायात्वद्धस्तादिवङ्गता ॥ देवक्यांकृष्णउत्पन्नोरोहिणीनन्दनोबलः ॥ ५ ॥ स्वमित्रेनन्दराजेचन्यस्तौपुत्रौभवद्भयात् ॥ तवारीरामकृष्णौद्वौवसुदेवेनदैत्यराट् ॥ ६ ॥ पूतनाद्याह्यरिघ्रान्तादैत्यायेत्वद्बलोत्कटाः ॥ याभ्यांहतावनोदेशेतेमृत्यूतौस्मृतौकिल ॥ ७ ॥ एवमुक्तोभोजपतिःक्रोधाच्चलितविग्रहः ॥ जग्राहनिशितंखड्गंशौरिंहंतुंसभातले ॥ ८ ॥ मयानिवारितःसोपिविस्तृतैर्निगडैर्दृढैः ॥ बद्ध्वातंभार्ययासार्द्धंकारागारेरुरोधह ॥ ९ ॥ इत्युक्त्वातंमयिगतेकेशिनंदैत्यपुङ्गवम् ॥ रामकृष्णवधार्थायप्रेषयामासदैत्यराट् ॥ १० ॥ चाणूरादीन्समाहूयमहामात्यंद्विपस्यच ॥ कार्यभारकराँल्लोकान्प्राहेदम्भोजराड्बली ॥ ११ ॥ ॥ कंसउवाच ॥ ॥ हेकूटहेतोशलकहेचाणूरमहाबल ॥ रामकृष्णौचमेमृत्यूदर्शितौनारदेनतु ॥ १२ ॥ भवद्भिरिहसंप्राप्तौहन्येतांमल्ललीलया ॥ मल्लभूमिंचसंयुक्तांकुरुताशुशुभावहाम् ॥ १३ ॥ द्विपंकुवलयापीडंरङ्गद्वारिमदोत्कटम् ॥ प्रस्थाप्यतेनहंतव्यौमहामात्रममाऽहितौ ॥ १४ ॥ चतुर्दश्यांतुकर्तव्योधनुर्यागःप्रशान्तये ॥ अमावास्यादिनेलोकामल्लयुद्धंभवेदिह ॥ १५ ॥ ॥ नारदउवाच ॥ ॥ इत्युक्त्वास्वजनान्कंसोऽक्रूरमाहूयसत्वरम् ॥ रहसिप्राहराजेन्द्रमंत्रंमंत्रिजनप्रियम् ॥ १६ ॥ ॥ कंसउवाच ॥ ॥ भोभोदानपतेमंत्रिन्छृणुमेपरमंवचः ॥ गच्छनन्दव्रजंप्रातःकुरुकार्यंमहामते ॥ १७ ॥ आसातेतत्रमेशत्रूवसुदेवसुतौकिल ॥ दर्शितौनारदेनापिदेवदेवर्षिणाभृशम् ॥ १८ ॥ सोपायनैर्गोपगणैर्नन्दराजादिभिःसह ॥ मथुरादर्शनमिषाद्रथेनानयमाचिरम् ॥ १९ ॥ द्विपेनवामहामल्लैर्घातयिष्यामितौशिशू ॥ तत्पश्चान्नन्दराजंचवसुदेवंमहाबकम् ॥ २० ॥ वृषभानुवरंपश्चान्नवनन्दोपनन्दकान् ॥ पश्चाच्छौरिंहनिष्यामिदेवकंतत्सहायकम् ॥ २१ ॥ उग्रसेनंचपितरंबद्धंराज्यसमुत्सुकम् ॥ तत्पश्चाद्यादवान्सर्वान्हनिष्यामिनसंशयः ॥ २२ ॥

एतेदेवगणाः सर्वेजातामन्त्रिन्महीतले ॥ शकुनिर्मेमहामित्रंबलीचन्द्रावतीपतिः ॥ २३ ॥ भूतसन्तापनोहृष्टोवृकःशङ्करएवच ॥ कालना
भोमहानाभोहरिश्मश्रुस्तथैवच ॥ २४ ॥ एतेमित्राणिमेसन्तिमदर्थंप्राणदाबलात् ॥ श्वशुरोपिजरासन्धोद्विविदोमेसखास्मृतः ॥ २५ ॥
बाणासुरश्चनरकोमय्येवकृतसौहृदः ॥ एतेसर्वांमहींजित्वाबद्धादेवान्सवासवान् ॥ २६ ॥ क्षिप्त्वामेरुगुहादुर्गेकुबेरंद्रव्यनायकम् ॥ त्रै
लोक्यराज्यंतुसदाकरिष्यन्तिनसंशयः ॥ २७ ॥ कवीनांत्वंकविरिवगिरांगीष्पतिवद्भुवि ॥ एतत्कार्यंचकर्तव्यंत्वयादानपतेत्वरम् ॥
॥ २८ ॥ ॥ अक्रूरउवाच ॥ ॥ त्वयाकृतोयदुपतेमनोरथमहार्णवः ॥ दैवेच्छयाऽयंभवतिगोष्पदंतद्दिनार्णवः ॥ २९ ॥ कंसउवा
च ॥ विसृज्यदैवंकुरुतेबलिष्ठोदैवंसमाश्रित्यहिनिर्बलश्च ॥ कालात्मनोनित्यहरेःप्रभावान्निराकुलस्तिष्ठतिकर्मयोगी ॥ ३० ॥ नार
दउवाच ॥ ॥ एवमुक्त्वामन्त्रिवरंसमुत्थायसभास्थलात् ॥ किञ्चित्प्रकुपितःकंसःशनैरन्तःपुरंययौ ॥ ३१ ॥ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीम
थुराखण्डे नारदबहुलाश्वसंवादे कंसमन्त्रोनामप्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥ ॥ श्रीनारदउवाच ॥ ॥ अथकेशीमहादैत्यो
हयरूपीमहोत्कटः ॥ राजन्वृन्दावनंरम्यंजगर्जघनवद्बली ॥ १ ॥ यस्यपादप्रताडेननिपेतुःशाखिनोदृढाः ॥ पुच्छघातेनगगनेखण्डंख
ण्डंययुर्घनाः ॥ २ ॥ तंवीक्ष्यदुःसहजवंगोपगोपीगणाभृशम् ॥ भयातुरामैथिलेंद्रश्रीकृष्णंशरणंययुः ॥ ३ ॥ माभैष्टेत्यभयंदत्त्वाभगवा
न्वृजिनार्दनः ॥ कटौपीताम्बरंबद्ध्वाहन्तुंदैत्यंप्रचक्रमे ॥ ४ ॥ हरिंपश्चिमपादाभ्यांसन्तताडमहासुरः ॥ चालयन्पृथिवींराजन्नादयन्व्यो
ममण्डलम् ॥ ५ ॥ गृहीत्वापादयोर्दैत्यंभ्रामयित्वाभुजेनखे ॥ चिक्षेपयोजनंकृष्णोवातःपद्ममिवोद्धतम् ॥ ६ ॥ पुनरागतवान्सोपिक्रो
धपूरितविग्रहः ॥ पुच्छेनश्रीहरिंदेवंसन्तताडव्रजांगणे ॥ ७ ॥ पुच्छेगृहीत्वातंकृष्णोभ्रामयित्वाभुजौजसा ॥ योजनानांशतंराजँश्चिक्षेप
गगनेबलात् ॥ ८ ॥ आकाशात्पतितःसोपिकिंचिद्व्याकुलमानसः ॥ समुत्थायपुनर्दैत्योजगर्जघनवद्बली ॥ ९ ॥ सटाविधुन्वन्रोमाणि
वालंखेचालयन्मुहुः ॥ महींविदारयन्पादैरुत्पपातहरेःपुरः ॥ १० ॥ तताडमुष्टिनातंवैभगवान्मधुसूदनः ॥ तस्यमुष्टिप्रहारेणमूर्च्छितो
घटिकाद्वयम् ॥ ११ ॥ मस्तकेनगलोदेशेसमुद्धृत्यहरिंहयः ॥ भूमण्डलादुत्पपातगगनेलक्षयोजनम् ॥ १२ ॥ तयोर्युद्धमभूद्घोरंगगने

प्रहरद्वयम् ॥ पादैर्दद्भिःसटाभिश्चपुच्छतीक्ष्णखुरैर्नृप ॥ १३ ॥ गृहीत्वातंहरिर्दोर्भ्यांभ्रामयित्वात्वितस्ततः ॥ आकाशात्पातयामासक
मण्डलुमिवार्भकः ॥ १४ ॥ भुजंप्रवेशयामासतन्मुखेभगवान्हरिः ॥ तस्योदरेगतोबाहुर्ववृधेरोगवद्भृशम् ॥ १५ ॥ तदातुलेंडंकृतवान्रु
द्धवायुर्महासुरः ॥ खण्डीभूतोदरःसद्योममारहयरूपधृक् ॥ १६ ॥ देहाद्विनिर्गतःसद्योमुकुटीकुण्डलान्वितः ॥ दिव्यरूपधरःकृष्णंप्रांज
लिःप्रणनामह ॥ १७ ॥ ॥ कुमुदउवाच ॥ ॥ शक्रस्यानुचरोहंवैकुमुदोनाममाधव ॥ तेजस्वीरूपवान्वीरोजिष्णुच्छत्रभ्रमिंदधत् ॥ १८ ॥
वृत्रासुरवधेपूर्वंब्रह्महत्याप्रशांतये ॥ यज्ञंचकारनाकेशोवाजिमेधंक्रतूत्तमम् ॥ १९ ॥ अश्वमेधहयंशुभ्रंश्यामकर्णंमनोजवम् ॥ तमारुरुक्षु
र्दृष्टोहंचोरयित्वातलङ्गतः ॥ २० ॥ ततोमरुद्गणैर्नीतंपाशबद्धंमहाखलम् ॥ शशापमांबलारातिस्त्वंरक्षोभवदुर्मते ॥ २१ ॥ हयाकृति
स्तेसंभूयाद्भूमौमन्वंतरद्वयम् ॥ तच्छापादद्यमुक्तोहंसद्यस्त्वत्स्पर्शनात्प्रभो ॥ २२ ॥ किंकरंकुरुमांदेवत्वदंघ्रौलग्नमानसम् ॥ नमस्तु
भ्यंभगवतेसर्वलोकैकसाक्षिणे ॥ २३ ॥ ॥ श्रीनारदउवाच ॥ ॥ प्रदक्षिणीकृत्यहरिंपरेश्वरंविमानमारुह्यमहोज्ज्वलंपरम् ॥ वैकुण्ठलोकं
कुमुदोययौत्वरंविराजयन्मैथिलमण्डलंदिशाम् ॥ २४ ॥ ॥ इतिश्रीमद्गर्गाचार्यसंहितायां श्रीमथुराखण्डे नारदबहुलाश्वसंवादे केशिव
धोनाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ श्रीनारदउवाच ॥ ॥ अक्रूरोरथमारुह्यकर्तुंकार्यंनृपस्यवै ॥ प्रहर्षितोमैथिले
न्द्रप्रययौनन्दगोकुलम् ॥ १ ॥ परांभक्तिंह्युपगतःश्रीकृष्णेपुरुषोत्तमे ॥ एवंविचारयन्बुद्ध्यापथिगच्छन्महामतिः ॥ २ ॥ ॥ अक्रूरउ
वाच ॥ ॥ किंभारतेवासुकृतंकृतंमयानिष्कारणंदानमलंक्रतूत्तमम् ॥ तीर्थाटनंवाद्विजसेवनंशुभंयेनाद्यद्रक्ष्यामिहरिंपरेश्वरम् ॥ ३ ॥ तपः
सुतप्तंकिमलंपुराकृतंसत्सेवनंभक्तियुतंमयाकृतम् ॥ येनैवमेदर्शनमद्यदुर्लभंश्रीकृष्णदेवस्यपुरोभविष्यति ॥ ४ ॥ तेषांभवोवैसफलो
महीतलेयन्नेत्रगामीभगवान्सुरेश्वरः ॥ कृत्वाथतद्दर्शनमद्यदुर्लभंसद्यःकृतार्थोभवितास्मिसर्वतः ॥ ५ ॥ ॥ नारदउवाच ॥ ॥ इत्थंसं
चिंतयन्कृष्णंपश्यञ्छकुनमुत्तमम् ॥ संध्यायांगोकुलंप्राप्तोरथस्थोगांदिनीसुतः ॥ ६ ॥ कृष्णपादाब्जचिह्नानियवांकुशयुतानिच ॥
तद्रागयुक्परागाणिरजांसिसददर्शको ॥ ७ ॥ तद्दर्शनौत्सुक्यभक्तिभावानन्दसमाकुलः ॥ रथात्समुत्पत्यतेषुलुठंश्चाश्रुप्रमोचसः ॥ ८ ॥

येषांश्रीकृष्णदेवस्यभक्तिःस्याद्दृढिमैथिल ॥ तेषामात्रह्मणःसर्वंतृणवज्जगतःसुखम् ॥ ९ ॥ रथारूढस्ततोऽक्रूरःक्षणान्नन्दपुरंगतः ॥
घोषेषुसबलंकृष्णमागच्छंतंददर्शह ॥ १० ॥ देवौपुराणौपुरुषौपरेशौपद्मेक्षणौश्यामलगौरवर्णौ ॥ यथेन्द्रनीलध्वजवज्रशैलौसमाश्रि
तौतौपथिरामकृष्णौ ॥ ११ ॥ बालार्कमौलीवसनंतडिद्युद्वर्षाशरन्मेघरुचंदधानौ ॥ दृष्ट्वासतूर्णंस्वरथाद्द्रुतोधस्तयोर्नतोभक्तियुतःप
पात ॥ १२ ॥ तदाननंबाष्पकलाकुलेक्षणंरोमांचितंवीक्ष्यहरिःपरेश्वरः ॥ दोर्भ्यांसमुत्थाप्यघृणातुरोश्रुमुमोचभक्तंपरिरभ्यमाधवः ॥
॥ १३ ॥ एवंमिलित्वासबलश्चतंहरिःसद्यःसमानीयवरासनंददौ ॥ निवेद्यगांचातिथयेसुभोजनंरसावृतंप्रेमयुतोह्युपाहरत् ॥ १४ ॥ तमा
हनन्दःपरिरभ्यदोर्भ्यांमहोकथंजीवसिकंसराज्ये ॥ गतत्रपोयोनिजघानबालान्स्वसुःकथंसोन्यजनेषुमोही ॥ १५ ॥ गृहंगतेनन्दवरेहारि
स्तंपप्रच्छसर्वंकुशलंस्वपित्रोः ॥ तथायदूनांकिलबांधवानांकंसस्यसर्वांविपरीतबुद्धिम् ॥ १६ ॥ ॥ अक्रूरउवाच ॥ ॥ परश्वोहनिहेदे
वहंतुंशौरिंसमुद्यतः ॥ खड्गपाणिर्भोजराजोनारदेननिवारितः ॥ १७ ॥ दुःखिताबांधवाःसर्वेयादवाभयविह्वलाः ॥ सकुटुंबाःकंसभयाद्भूम
न्देशांतरंगताः ॥ १८ ॥ अद्यैवयादवान्हंतुंदेवाज्ञेतुंसमुद्यतः ॥ अन्यत्किमपिकौकर्तुमिच्छतेदैत्यराड्बली ॥ १९ ॥ तस्माद्भवद्भ्यांगं
तव्यंकुशलंकर्तुमव्ययम् ॥ भवंतौहिविनाकार्यंकिंचिन्नस्यात्सतांप्रभू ॥ २० ॥ ॥ नारदउवाच ॥ ॥ अथतस्यवचःश्रुत्वासबलोभग
वान्हरिः ॥ नन्दराजमतेनाहगोपान्कार्यकरानिदम् ॥ २१ ॥ ॥ श्रीभगवानुवाच ॥ ॥ नन्दराजोपिसबलोवृद्धैर्गोपगणैरहम् ॥ नन्दा
नवोपनन्दाश्चतथाषड्वृषभानवः ॥ २२ ॥ मथुरांतुगमिष्यंतिसर्वेप्रातःसमुत्थिताः ॥ सर्वेतुगोरसंतस्माद्दधिदुग्धघृतादिकम् ॥ २३ ॥
गृहीत्वैकत्रकर्तव्यंसोपायनमतःपरम् ॥ रथांश्वशकटैःसार्द्धंसमर्थान्कुरुताशुवै ॥ २४ ॥ ॥ नारदउवाच ॥ ॥ इतिश्रुत्वाकार्यकरागो
पाःसर्वेगृहेगृहे ॥ शृण्वंतीनांगोपिकानामूचुःसर्वंयथोदितम् ॥ २५ ॥ तच्छ्रुत्वोद्विग्नहृदयागोप्योविरहविह्वलाः ॥ परस्परंवाक्यमूचुःस
र्वास्ताहिगृहेगृहे ॥ २६ ॥ प्रस्थानस्यचवार्तेयंश्रीकृष्णस्यमहात्मनः ॥ वृषभानुवरस्यापिगृहेप्राप्तानृपेश्वर ॥ २७ ॥ गमिष्यतोभर्तुरती
वदुःखिताश्रुत्वाथवार्तांसदसिह्यकस्मात् ॥ संप्रापमूर्च्छांवृषभानुनन्दिनीरंभेवभूमौपतितामरुद्धता ॥ २८ ॥ काश्चित्परिम्लानमुखश्रि

यो भवन्प्रकंकणीभूतकरांगुलीयकाः ॥ सद्यःश्लथद्भूषणकेशबंधनाश्चित्रार्पितारंभइवावतस्थिरे ॥ २९ ॥ श्रीकृष्णगोविन्दहरेमुरारेका
श्चिद्वदन्त्यःस्वगृहेऽतिविह्वलाः ॥ विसृज्यकर्माणिगृहस्यसर्वतोयोगीवचानन्दगतानृपेश्वर ॥ ३० ॥ काश्चित्समर्थास्तुपरस्परंवचः समे
त्यराजन्युगपत्सखीजनम् ॥ ऊचुःस्खलद्गद्गदकंठवाचःस्वतःस्रवद्बाष्पकलावहद्दृशः ॥ ३१ ॥ ॥ गोप्यऊचुः ॥ ॥ अहोतिनिर्मोहिज
नस्यचित्रंपरंचरित्रंगदितुंनयोग्यम् ॥ मुखेनचान्यंहृदिभाव्यमन्यद्देवोनजानातिकुतोमनुष्यः ॥ ३२ ॥ रासेपियद्यद्गदितंतुतत्तद्विहायगंतुं
समवस्थितोयम् ॥ गतेपुरींप्राणपतावहोस्मिन्किंकिंनकष्टंबतनोभविष्यत् ॥३३॥इ०ग०सं०मथु०ना०ब०सं०अक्रूरागमनं नामतृ० ॥३॥
॥ श्रीनारदउवाच ॥ राजन्नेवंवदंतीनांगोपीनांविरहंपरम् ॥ विज्ञायभगवान्देवःशीघ्रंतासांगृहान्ययौ ॥ १ ॥ ॥ यावंत्योयोषितोराजं
स्तावद्रूपधरोहरिः ॥ स्वयंसंबोधयामासवाग्भिःसर्वाःपृथक्पृथक् ॥ २ ॥ श्रीराधामन्दिरंगत्वादृष्ट्वाराधांचमूर्च्छिताम् ॥ रहःस्थितांसखी
संघेननादमुरलीकलम् ॥ ३ ॥ श्रुत्वावंशीध्वानिंराधासहसोत्थायचातुरा ॥ नेत्रउन्मील्यददृशेश्रीगोविन्दंसमागतम् ॥ ४ ॥ पद्मिनी
वगतानन्दंपद्मिनीपद्मिनीपतिम् ॥ वीक्ष्योत्थायागतायास्मैसादरेणासनन्ददौ ॥ ५ ॥ अश्रुपूर्णमुखींदीनांराधांकमललोचनाम् ॥ शोचं
तींभगवानाहमेघगंभीरयागिरा ॥ ६ ॥ ॥ श्रीभगवानुवाच ॥ विमनास्त्वंकथंभद्रेमाशोकंकुरुराधिके ॥ अथवागंतुकामंमांश्रुत्वा
सिविरहातुरा ॥ ७ ॥ भुवोभारावतारायकंसादीनांवधायच ॥ ब्रह्मणाप्रार्थितःसाक्षाज्जातोहंवैत्वयासह ॥ ८ ॥ मथुरांहिगमिष्यामिहरि
ष्यामिभुवोभरम् ॥ शीघ्रमत्रागमिष्यामिकरिष्यामिशुभंतव ॥ ९ ॥ ॥ नारदउवाच ॥ ॥ इत्युक्तवंतंजगदीश्वरंहरिंराधापतिंप्राहवियोग
विह्वला ॥ दावाग्निनादावलतेवमूर्च्छितासुकंपरोमांचितभावसंवृता ॥ १० ॥ ॥ राधोवाच ॥ ॥ भुवोभरंहर्तुमलंपुरींव्रजकृतंपरंमे
शपथंशृणुत्वतः ॥ गतेत्वयिप्राणपतेचविग्रहंकदाचिदत्रैवनधारयाम्यहम् ॥ ११ ॥ यदात्थमेत्वंशपथंनमन्यसेद्वितीयवारंवदयामिवाक्पथ
म् ॥ प्राणोधरेगंतुमतीवविह्वलःकर्पूरधूलेःकणवद्गमिष्यति ॥ १२ ॥ ॥ श्रीभगवानुवाच ॥ ॥ वचनंवैस्त्वनिगमंदूरीकर्तुंक्षमोस्म्यहम् ॥
भक्तानांवचनंराधेदूरीकर्तुंनचक्षमः ॥ १३ ॥ श्रीदामशापात्पूर्वंस्माद्गोलोकेकलहान्मम ॥ शतवर्षंतेवियोगोभविष्यतिनसंशयः ॥ १४ ॥

माशोककुरुकल्याणिवरंमेस्मरराधिके ॥ मासंमासंवियोगांतेदशनंमेभविष्यति ॥ १५ ॥ ॥ राधोवाच ॥ ॥ मासंप्रतिवियो
गंमेदातुंस्वंदर्शनंहरे ॥ चेन्नागमिष्यसितदाऽसून्दुःखात्संत्यजाम्यहम् ॥ १६ ॥ लोकाभिरामजनभूषणविश्वदीपकंदर्पमोहनजगद्वृजि
नार्तिहारिन् ॥ आनन्दकन्दयदुनन्दननन्दसूनोअद्यागमस्यशपथंकुरुमेपुरस्त्वम् ॥ १७ ॥ ॥ श्रीभगवानुवाच ॥ ॥ रंभोरुमासंप्रति
तेवियोगंचेन्नागमिष्येशपथंगवांमे ॥ निःसंशयंनिष्कपटंवचस्त्वमवेहिराधेकथितंमयायत् ॥ १८ ॥ योमित्रतांनिष्कपटंकरोतिनिष्कार
णोधन्यतमःसएव ॥ विधायमैत्रींकपटंविदध्यात्तंलंपटंहेतुपटुंनटंधिक् ॥ १९ ॥ कर्मेन्द्रियाणीहयथारसादींस्तथासकामामुनयःसुखंय
त् ॥ मनाक्नजानंतिहिनैरपेक्ष्यंगूढंपरंनिर्गुणलक्षणंतत् ॥ २० ॥ जानंतिसंतः समदर्शिनोयेदांतामहांतःकिलनैरपेक्षाः ॥ तेनैरपेक्ष्यंप
रमंसुखंमेज्ञानेंद्रियादीनियथारसादीन् ॥ २१ ॥ सर्वंहिभावंमनसःपरस्परंनह्येकतोभामिनिजायतेततः ॥ प्रेमैवकर्तव्यमतोमयिस्वतःप्रे
मणासमानंभुविनास्तिकिंचित् ॥ २२ ॥ यथाहिभांडीरवटेमनोरथोबभूवराधेहितथाभविष्यति ॥ अहैतुकंप्रेमचसद्भिराश्रितंतच्चापिसंतः
किलनिर्गुणंविदुः ॥२३॥ येराधिकायांत्वयिकेशवेमयिभेदंनकुर्वंतिहिदुग्धशौक्ल्यवत् ॥ तएवमेब्रह्मपदंप्रयांतितदहैतुकस्फूर्जितभक्तिल
क्षणाः ॥ २४ ॥ येराधिकायांत्वयिकेशवेमयिपश्यंतिभेदंकुधियोनराभुवि ॥ तेकालसूत्रंप्रपतंतिदुःखितारंभोरुयावत्किलचन्द्रभा
स्करौ ॥ २५ ॥ ॥ नारदउवाच ॥ ॥ एवमाश्वास्यतांराधांसर्वगोपीगणंतथा ॥ आययौनंदभवनंभगवान्नयकोविदः ॥ २६ ॥ अ
थसूर्योदयेजातेनन्दाद्याःशकटैर्बलिम् ॥ नीत्वारथान्समारुह्यसर्वेश्रीमथुरांययुः ॥ २७ ॥ आरुह्यरामकृष्णाभ्यांस्वरथंगांदिनीसुतः ॥
प्रयाणमकरोद्राजन्मथुरांद्रष्टुमुद्यतः ॥ २८ ॥ कोटिशःकोटिशोगोप्योमार्गेमार्गेसमास्थिताः ॥ पश्यंत्यस्तन्निर्गमनंक्रोधाढ्यामोहविह्व
लाः ॥ २९ ॥ क्रूरक्रूरेतिचाक्रूरंवदन्त्यःपरुषंवचः ॥ रुरुधुःसर्वतोयानंयथार्कंसरथंघनाः ॥ ३० ॥ अक्रूरस्यरथंराजन्निजघ्नुर्यष्टिभिर्भृश
म् ॥ अश्वांस्तथासारथिंचभगवद्विरहातुराः ॥ ३१ ॥ अश्वास्तत्रसमुत्पेतुस्ताडितास्तइतस्ततः ॥ गोपीद्व्यंगुलिघातेनसारथिः पति
तोरथात् ॥ ३२ ॥ विहायलज्जांलोकस्यसमाकृष्यरथाद्बलात् ॥ कंकणैस्तेडुरक्रूरंपश्यतोःकृष्णरामयोः ॥ ३३ ॥ गोपीयूथबलंदृष्ट्वास

बलोभगवान्हरिः ॥ गोपीःसंबोधयामासरक्षित्वागांदिनीसुतम् ॥ ३४ ॥ संध्यायामागमिष्यामिमाशोकंकुरुतांगनाः ॥ पश्यतश्चास्यम
द्धास्यंमाकुर्वन्तुव्रजौकसः ॥३५॥ इत्येवमुक्त्वासरथःसमागतोऽक्रूरेणकृष्णोबलदेवसंयुतः ॥ तुरंगमैर्वेगमयैर्मनोहरैर्ययौपुरींयादववृन्दमंडि
ताम् ॥ ३६ ॥ यावद्रथःकेतुरुताश्वरेणुरालक्ष्यतेतावदतीवमोहात् ॥ स्थिताबभूवन्पथिचित्रवत्ताःस्मृत्वाहरेर्वाक्यमुतागताशाः ॥
॥ ३७ ॥ इतिश्रीमद्गर्गाचार्यसंहितायांमथुराखंडेनारदबहुलाश्वसंवादेश्रीमथुराप्रयाणंनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥
॥ श्रीनारदउवाच ॥ ॥ हरिरक्रूररामाभ्यांमथुरोपवनङ्गतः ॥ यमुनानिकटंस्थित्वावारिपीत्वारथंययौ ॥ १ ॥ अक्रूरस्तावनुज्ञाप्य
स्नातुंश्रीयमुनाङ्गतः ॥ नित्यनैमित्तिकंकर्तुंविवेशविमलेजले ॥ २ ॥ जलेचागाधगंभीरेमहावर्तसमाकुले ॥ ददर्शरामकृष्णौतौवदंतौगांदिनी
सुतः ॥३॥ विस्मितस्तौरथेपश्यत्पुनर्वारिस्थितौनृप ॥ ददर्शतत्रसर्पेन्द्रंकुण्डलीभूतमास्थितम् ॥ ४ ॥ तस्योत्संगेमहालोकंगोलोकंलोकव
न्दितम् ॥ गोवर्द्धनाद्रियमुनावृन्दारण्यमनोहरम् ॥ ५ ॥ असंख्यकोटिमार्तण्डज्योतिषांमण्डलंप्रभुम् ॥ परिपूर्णतमंसाक्षाच्छ्रीकृष्णं
पुरुषोत्तमम् ॥ ६ ॥ कोटिमन्मथलावण्यंरासमण्डलमध्यगम् ॥ राधयासहितंदेवंतत्राक्रूरोददर्शह ॥ ७ ॥ ज्ञात्वाकृष्णंपरंब्रह्मनत्वा
नत्वापुनःपुनः ॥ कृतांजलिपुटोऽक्रूरःस्तुतिंचक्रेतिहर्षितः ॥ ८ ॥ ॥ अक्रूरउवाच ॥ ॥ नमःश्रीकृष्णचन्द्रायपरिपूर्णतमायच ॥ असं
ख्यांडाधिपतयेगोलोकपतयेनमः ॥ ९ ॥ श्रीराधापतयेतुभ्यंव्रजाधीशायतेनमः ॥ नमःश्रीनन्दपुत्राययशोदानन्दनायच ॥ १० ॥
देवकीसुतगोविन्दवासुदेवजगत्पते ॥ यदूत्तमजगन्नाथपाहिमांपुरुषोत्तम ॥ ११ ॥ वाणीसदातेगुणवर्णनेस्यात्कर्णौकथायांममदोश्चकर्म
णि ॥ मनःसदात्वच्चरणारविन्दयोर्दृशौस्फुरद्धामविशेषदर्शने ॥ १२ ॥ ॥ नारदउवाच ॥ ॥ एवंसंस्तुवतस्तस्यपश्यतोविस्मितस्यच ॥
तत्रैवांतर्दधेकृष्णःसलोकोभगवान्प्रभुः ॥ १३ ॥ नत्वातंचतदाक्रूरःकृत्वानैमित्तिकंविधिम् ॥ ज्ञात्वाकृष्णम्परंब्रह्मविस्मितोरथमाय
यौ ॥ १४ ॥ दिनात्ययेरामकृष्णावनयद्गांदिनीसुतः ॥ रथेनवायुवेगेनस्निग्धगंभीरनादिना ॥ १५ ॥ पुरस्योपवनेतत्रवीक्ष्यनन्दंयदूत्त
मः ॥ अक्रूरंप्राहविहसन्मेघगंभीरयागिरा ॥ १६ ॥ श्रीभगवानुवाच ॥ ॥ मथुरायांहिगंतव्यंभवतास्वरथेनवै ॥ गोपालैःसहितः

पश्चादागमिष्यामिमानद ॥ १७ ॥ ॥ अक्रूरउवाच ॥ ॥ देवदेवजगन्नाथगोविन्दपुरुषोत्तम ॥ सहाग्रजःसगोपालोगच्छमेमन्दिरंप्रभो
॥ १८ ॥ पादारविंदरजसापवित्रीकुरुमद्गृहम् ॥ त्वांविनानगमिष्यामिमंदिरंस्वंजगत्पते ॥ १९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ गृहंतवाग
मिष्यामिहत्वावैयादवाहितम् ॥ सबलोबान्धवैःसार्द्धंकरिष्यामितवप्रियम् ॥ २० ॥ ॥ नारदउवाच ॥ अथतत्रस्थितेकृष्णेसोक्रूरोमथु
राङ्गतः ॥ निवेद्यचेदंकंसायततःस्वभवनंययौ ॥ २१ ॥ अथापराह्णेसबलंगोविन्दंबालकैःपुरीम् ॥ द्रष्टुमभ्युदितंवीक्ष्यनंदोवाक्यम
थाब्रवीत् ॥ २२ ॥ आर्जवेनपुरींवीक्ष्यागन्तव्यंभवताकिल ॥ नगोकुलंविद्धिचैनांकंसराज्येमहाभये ॥ २३ ॥ तथास्तुचोक्त्वाभग
वान्वृद्धैर्नन्दप्रणोदितैः ॥ गोपालैर्बालकैःसार्द्धंसबलोगतवान्पुरीम् ॥ २४ ॥ प्रासादैर्गगनस्पर्शैर्हैमरत्नखचिद्गृहैः ॥ शोभितांदुर्गसंयुक्तां
देवधानीमिवस्थिताम् ॥ २५ ॥ कालिन्दीरत्नसोपानैश्चलदूर्मिकुतूहलैः ॥ अलकामिवशोभाढ्यांदिव्यनारीनरैर्युताम् ॥ २६ ॥ प्रेक्षञ्छ्री
मथुरांकृष्णोधनिनांमन्दिराणिच ॥ पश्यन्गोपालकैःसार्द्धंराजमार्गंविवेशह ॥ २७ ॥ श्रुत्वागतंतंवसुदेवनन्दनंबह्वश्रुतावैमथुरापुरीगताः ॥
त्यक्त्वाथकर्माणिविसृज्यताःशिशून्द्रष्टुंव्यधावन्नुदधिंयथापगाः ॥ २८ ॥ काश्चित्तुहर्म्यात्किलजालदेशात्कुड्यात्तुकाश्चित्पटतोगवाक्षात् ॥
विनिर्गताद्वारकपाटदेशात्तच्चत्त्वरात्तंददृशुःपुरंध्र्यः ॥ २९ ॥ एकंचलत्कुंतलमाननेस्वेकिमग्रगानांतुमनांसिहर्तुम् ॥ पश्चात्कृतंमौ
लितलेदधानंकिम्पृष्ठगानांहरणंद्वितीयम् ॥ ३० ॥ पीताम्बरार्द्धंबलिनंस्फुरत्कटावर्द्धंतदंसेजलदेयथातडित् ॥ पद्मंकरेस्वांह्रदिवैजयंतीं
स्रजंदधानंवसुदेवनन्दनम् ॥ ३१ ॥ विलोक्यसर्वामुमुहुःपुरस्त्रियोविलोलपाठीननवीनकुण्डलम् ॥ बालार्कहेमांगदबाहुमण्डलंराजन्नसं
ख्याण्डपतिंपरात्परम् ॥ ३२ ॥ ॥ पुरन्ध्र्यऊचुः ॥ ॥ अहोवृन्दावनंरम्यंयत्रसन्निहितोह्ययम् ॥ धन्यागोपगणाःसर्वेपश्यंत्येनंमनोहरम् ॥
॥ ३३ ॥ धन्यागोपरमण्यस्तास्ताभिःकिंसुकृतंकृतम् ॥ पिबन्तियारासरङ्गेमुहुश्चास्याधरामृतम् ॥ ३४ ॥ ॥ नारदउवाच ॥ ॥ रा
जमार्गेरंगकारंरजकंयान्तमुन्मदम् ॥ गोपालानुमतेनैवप्राहतम्मधुसूदनः ॥ ३५ ॥ देहिनोमित्रवासांसिरुचिराणिमहामते ॥ दातुस्तेहि
परंश्रेयोभविष्यतिनसंशयः ॥ ३६ ॥ प्रज्वलन्कृष्णवाक्येनघृतेनाग्निर्यथाभृशम् ॥ कंसभृत्योमहादुष्टःप्राहेदंपथिमाधवम् ॥ ३७ ॥

॥ रजकउवाच ॥ ॥ ईदृशान्येववस्त्राणिपितृभिर्वःपितामहैः ॥ धारितानिकिमुद्वृत्तास्तेनकौपीनधारकाः ॥ ३८ ॥ याताशुवन्यानगरात्सर्वेवैजीवितेच्छया ॥ कारागारेकारयामियुष्मान्वस्त्रहरानहम् ॥ ३९ ॥ ॥ नारदउवाच ॥ ॥ एवंप्रवदतस्तस्यरजकस्ययदूत्तमः ॥ जहारमस्तकंसद्यःकराग्रेणैवलीलया ॥ ४० ॥ तज्ज्योतिःश्रीघनश्यामेलीनंजातंविदेहराट् ॥ सद्यस्तदनुगाःसर्वेवासःकोशान्विसृज्यवै ॥ ४१ ॥ दुद्रुवुःसर्वतोराजञ्छरत्कालेयथाघनाः ॥ गृहीत्वात्मप्रियेवस्त्रेस्थितयोरामकृष्णयोः ॥ जगृहुर्गोपबालास्तेराजमार्गेजनाअपि ॥ ४२ ॥ तद्धारणाविदोबालावासांसिरुचिराणिच ॥ अस्तव्यस्तंपरिदधुःश्रीकृष्णस्यप्रपश्यतः ॥ ४३ ॥ वीक्ष्यतौबालकःकश्चिच्छ्रीकृष्णबलदेवयोः ॥ विचित्रवर्णैर्वासोभिर्दिव्यंवेषंचकारह ॥ ४४ ॥ तथान्येषांशिशूनाञ्चयथायोग्यंविधायसः ॥ राजन्परमयाभक्त्यापुनःकृष्णंददर्शह ॥ ४५ ॥ प्रसन्नोभगवांस्तस्मैप्रादात्सारूप्यमात्मनः ॥ बलंश्रियंतथैश्वर्य्यंबलदेवोददौपुनः ॥ ४६ ॥ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायां श्रीमथुराखण्डेश्रीनारदबहुलाश्वसंवादेश्रीमथुराप्रवेशोनामपञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥

॥ नारदउवाच ॥ ॥ अथगोपालकैःसार्द्धंश्रीकृष्णोनन्दनन्दनः ॥ गृहंजगामसबलःसुदाम्नोदाममालिनः ॥ १ ॥ दृष्ट्वातौससमुत्थायनमस्कृत्यकृतांजलिः ॥ पुष्पसिंहासनेस्थाप्यप्राहगद्गदयागिरा ॥ २ ॥ ॥ सुदामोवाच ॥ ॥ धन्यंकुलंमेभवनंचजन्मत्वय्यागतेदेवकुलानिसप्त ॥ मातुःपितुःसत्ततथाप्रियायावैकुंठलोकंगतवंतिमन्ये ॥ ३ ॥ भूभारमाहर्तुमलंयदोःकुलेजातौयुवांपूर्णतमौपरेश्वरौ ॥ नमोयुवाभ्यांममदीनदीनगृहंगताभ्यांजगदीश्वरौपरौ ॥ ४ ॥ ॥ नारदउवाच ॥ ॥ इत्युक्त्वापुष्परचनालंकारंमधुपध्वनिम् ॥ निवेद्यमकरंदांश्चमालाकारोननामह ॥ ५ ॥ धृत्वातत्पुष्पनिचयंसबलोभगवान्हरिः ॥ दत्त्वागोपेभ्यआरात्तंप्राहप्रहसिताननः ॥ ६ ॥ गरीयसीमत्पदाब्जेभक्तिर्भूयात्सदातव ॥ मद्भक्तानांतुसंगःस्यान्मत्स्वरूपमिहैवहि ॥ ७ ॥ बलदेवोददौतस्मैश्रियंचान्वयवर्द्धिनीम् ॥ उत्थायतौततोराजन्नन्यांवीथींप्रजग्मतुः ॥ ८ ॥ यांतींस्त्रियंपद्मनेत्रांपाटीरालेपभाजनम् ॥ बिभ्रतींयुवतींकुब्जांपथिपप्रच्छमाधवः ॥ ९ ॥ श्रीभगवानुवाच ॥ ॥ कात्वंकस्यप्रियासुभ्रूःकस्यार्थंचन्दनंत्विदम् ॥ देह्यावयोर्येनतवचिरंश्रेयोभविष्यति ॥ १० ॥ ॥ ८७ ॥

॥ सैरन्ध्र्युवाच ॥ ॥ दास्यस्मिसुन्दरवरकुब्जानाममहामते ॥ मद्धस्तोत्थंचपाटीरंजातंभोजपतेःप्रियम् ॥ ११ ॥ अद्यापिकंसदास्य
स्मिसांप्रतंतवचाग्रतः ॥ हस्तिशुंडादंडसमेभुजदंडेस्तिमेमनः ॥ १२ ॥ युवांविनाकोन्यतमोऽनुलेपंकर्तुमर्हति ॥ युवयोस्तुसमंरूपंत्रै
लोक्येनहिविद्यते ॥ १३ ॥ ॥ नारदउवाच ॥ ॥ उभाभ्यांसाददौसांद्रंहर्षिताह्यनुलेपनम् ॥ अथतावंगरागेणरामकृष्णौविरेजतुः ॥
॥ १४ ॥ जगृहुश्चन्दनंदिव्यंकिंचित्किंचिद्व्रजार्भकाः ॥ त्रिवक्रामथतांकृष्णऋज्वींकर्तुंमनोदधे ॥ १५ ॥ आक्रम्यपद्भ्यांप्रपदेंगुलिद्व
यंप्रोत्तानहस्तेनविभुःपरेश्वरः ॥ प्रगृह्यनूर्णांचिबुकेप्रपश्यतांवक्रांतनुंतामुदनीनमद्धरिः ॥ १६ ॥ तदैवसायष्टिसमानविग्रहादीप्त्या
चरंभांक्षिपतीवरूपिणी ॥ भूत्वागृहीत्वाहहरिंतुवाससिशुचिस्मिताजातमनोजविह्वला ॥ १७ ॥ ॥ सैरन्ध्र्युवाच ॥ ॥ गच्छाशुहे
सुन्दरवर्यमद्गृहंत्यक्तुंभवंतंकिलनोत्सहेहम् ॥ प्रसीदसर्वज्ञरसज्ञमानदत्वयाभृशंप्रोन्मथितंमनोमम ॥ १८ ॥ ॥ नारदउवाच ॥ ॥ तदै
वगोपाजहसुःपरस्परमहोकिमेतत्करतालनिःस्वनैः ॥ प्रहस्यरामस्यहरिःप्रपश्यतस्तयाच्यमानोह्यवदत्परंवचः ॥ १९ ॥ ॥ श्रीभ
गवानुवाच ॥ ॥ अहोतिधन्यामथुरापुरीयंवसंतियत्रैवजनास्तुसौम्याः ॥ येऽज्ञातपांथान्स्वगृहंनयंतिदृष्ट्वापुरींधामतवागमिष्ये ॥ २० ॥
॥ नारदउवाच ॥ ॥ एवंमुक्त्वोत्तरीयांतंसमाकृष्णगिरार्द्रया ॥ राजमार्गंव्रजन्कृष्णोवैश्यानाढ्यान्ददर्शह ॥ २१ ॥ पुष्पताम्बूलगंधा
ढ्यैःफलैर्दुग्धफलैर्हरिम् ॥ सम्पूज्यस्वासनेस्थाप्यनेमुरग्रधियोविशः ॥ २२ ॥ ॥ वैश्याऊचुः ॥ ॥ भवेच्चेदत्रतेराज्यंतावकान्स्म
रतात्सदा ॥ वयंतत्रप्रजादेवराज्येप्राप्तेनकःस्मरेत् ॥ २३ ॥ ॥ नारदउवाच ॥ ॥ पप्रच्छसुस्मितोवैश्यान्कोदंडस्थानमच्युतः ॥ नतेत
मूचुःसुधियःकोदंडेभंगशंकया ॥ २४ ॥ तद्रूपगुणमाधुर्य्यमोहितायेचमाथुराः ॥ कुमारपश्यैहिधनुरित्यूचुस्तद्दिदृक्षवः ॥ २५ ॥
तैर्दृष्टेनपथाकृष्णःप्रविष्टोधनुषःस्थलम् ॥ मैत्रींकुर्वन्वयस्यैश्चमाथुरैःपुरबालकैः ॥ २६ ॥ यथैंद्रंहेमचित्राढ्यंकोदंडंसप्ततालकम् ॥
पुरुषैःपंचसाहस्रैर्नेतुंयोग्यंबृहद्गुरम् ॥ २७ ॥ अष्टधातुमयंक्लिष्टंलक्षभारसमंपरम् ॥ चतुर्दश्यांपौरजनैरर्चितंयज्ञमंडले ॥ २८ ॥
भार्गवेणपुरादत्तंयदुराजायमाधवः ॥ ददर्शकुंडलीभूतंसाक्षाच्छेषमिवस्थितम् ॥ २९ ॥ वार्य्यमाणोनृभिःकृष्णःप्रसह्यधनुराददे ॥

पश्यतांतत्रपौराणांसज्यंकृत्वाथलीलया ॥ ३० ॥ आकृष्यकर्णपर्यंतंदोर्दंडाभ्यांहरिर्धनुः ॥ बभंजमध्यतोराजन्निक्षुदंडंगजोयथा ॥ ३१ ॥
भज्यमानस्यधनुषष्टंकारोभूत्तडित्स्वनः ॥ ननादतेनब्रह्माण्डंसप्तलोकैर्बिलैःसह ॥ ३२ ॥ विचेलुर्दिग्गजास्ताराराजद्भूखण्डमंडलम् ॥
तदैवबधिरीभूतापृथिव्यांजनमंडली ॥ ३३ ॥ कंसस्यहृदयंशब्दोविददारघटीद्वयम् ॥ तद्रक्षिणःप्रकुपिताउत्थिताआततायिनः ॥ ३४ ॥
गृहीतुकामाःश्रीकृष्णंप्रत्यूचुर्बध्यतामिति ॥ अथतानागतान्वीक्ष्यसशस्त्रान्बलकेशवौ ॥ ३५ ॥ कोदंडशकलेनीत्वाजघ्नतु
दुर्मदान्भृशम् ॥ शकलातिप्रहारेणकेचिद्वीरास्तुमूर्च्छिताः ॥ ३६ ॥ भिन्नपादाभिन्ननखाःकेचिच्छिन्नांसबाहवः ॥ वीराःपंचसह
स्राणिनिपेतुर्भूमिमंडले ॥ ३७ ॥ विचेलुर्माथुराःसर्वेदुद्रुवुस्तद्दिदृक्षवः ॥ पुर्य्यांकोलाहलेजातेनृणांजातंमहद्भयम् ॥ ३८ ॥ भोजराज
सभाछत्रमकस्मान्निपपातह ॥ गोपालैःसबलःकृष्णोधावंश्चापस्थलान्नृप ॥ आययौनन्दनिकटंसंध्याकालेऽतिभीतवत् ॥ ३९ ॥ निरी
क्ष्यगोविन्दसुरूपमद्भुतंविमोहितावैमथुरापुरांगनाः ॥ विस्रस्तवासःकबराःस्मराधयःपरस्परंप्राहुरिदंसखीजनम् ॥ ४० ॥
॥ पुरन्ध्र्यऊचुः ॥ ॥ कंदर्पकोटिद्युतिमाहरंस्त्वरंस्वैरंचरन्वैमथुरांपुरंहरिः ॥ निरीक्ष्यतेकाभिरतीवसाक्षादंगेषुसर्वेष्वपिनःसमादिशत् ॥
॥ ४१ ॥ ॥ कुशलाऊचुः ॥ ॥ क्रूराःस्त्रियःकिंनहिसंतिपत्तनेनिरीक्ष्यतेयाभिरनंगमोहनः ॥ अंगेषुसर्वेष्वपिसर्वसुन्दरोनास्माभिरान
न्दमयोनिरीक्ष्यते ॥ ४२ ॥ कस्यैकदेशेमधुरत्वमीक्ष्यतेतत्रास्तिनेत्रंप्रपतत्पतंगवत् ॥ यस्त्वेवसर्वांगमनोहरःसखिसएवनेत्रेणकथंसमी
क्ष्यते ॥ ४३ ॥ अंगेह्यंगेसुन्दरेनन्दसूनोःप्रातंप्रातंयत्रयत्रापिनेत्रम् ॥ तस्मात्तस्मान्नाभवल्लंघसौख्यंलावण्याब्धौमग्नवल्लग्नचित्तम् ॥ ४४ ॥
दृष्ट्वादिनेयंव्रजराजनन्दनंस्वप्नेपितद्ददृशुःपुरस्त्रियः ॥ गोप्यःकथंतंमधुरंनसस्मरुर्याभिःकृतंमैथिलरासमंडलम् ॥ ४५ ॥ ॥ इति श्रीम
द्गर्गाचार्यसंहितायांश्रीमथुराखण्डे नारदबहुलाश्वसंवादे श्रीमथुरादर्शनं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥
॥ नारदउवाच ॥ ॥ रजकस्यशिरश्छेदंकंसोवैरक्षिणांवधम् ॥ धनुर्भंगंततःश्रुत्वापरंत्रासमुपागमत् ॥ १ ॥ तत्क्षणाद्दुर्निमित्तानिवा

मांगस्फुरणानिच ॥ प्रपश्यन्नंगभंगानिननिद्रांप्रापदैत्यराट् ॥ २ ॥ स्वप्नप्रेतैःसमायुक्तस्तैलभ्यिक्तोदिगंबरः ॥ जपास्रङ्महिषारूढोदक्षि

णाशांजगामसः ॥ ३ ॥ प्रातःकालेसमुत्थायकार्यभारकराज्ञनात् ॥ आहूयकारयामासमल्लक्रीडामहोत्सवम् ॥ ४ ॥ विशालाजिरसंयु
क्तेहेमस्तंभसमन्विते ॥ ॥ सभामंडपदेशाग्रेरंगभूमिर्बभूवह ॥ ५ ॥ वितानैर्हैमसंकाशैर्मुक्तादामविलंबिभिः ॥ सोपानैर्हैममंचैश्चरंगभूमि
र्बभौनृप ॥ ६ ॥ राजमंचेरत्नमयेमकरन्दार्चितेशुभे ॥ शक्रसिंहासनंतत्रसोपबर्हणमण्डलम् ॥ ७ ॥ आतपत्रेणदिव्येनचन्द्रमंडलचारुणा ॥
हंसाभैर्व्यजनैर्युक्तैश्चामरैर्वज्रमुष्टिभिः ॥ ८ ॥ दशहस्तोच्छ्रितंशश्वद्विश्वकर्मविनिर्मितम् ॥ तदारुह्यबभौकंसोऽद्रिशृंगंमृगराडिव ॥
॥ ९ ॥ गायकाःप्रजगुस्तत्रननृतुर्वारयोषितः ॥ नेदुर्मृदंगपटहतालभेर्य्यानकादयः ॥ १० ॥ राजानोमंडलेशाश्चपौराजानपदानृप ॥
ददृशुर्मल्लयुद्धंतेमंचेमंचेसमास्थिताः ॥ ११ ॥ चाणूरोमुष्टिकःकूटःशलस्तोशलएवच ॥ व्यायामयुद्धदैर्युक्तायुयुधुस्तेपरस्परम् ॥ १२ ॥
नन्दराजादयोगोपाःकंसाहूतानताननाः ॥ दत्त्वाबलिंपरंतस्मादेकस्मिन्मंचआश्रिताः ॥ १३ ॥ बाणासुरजरासंधनरकाणांपुरान्नृप ॥
अन्येषांशंबरादीनांसकाशाद्भूभुजांतथा ॥ बलयश्चाययूराजन्यदुराजायतत्रवै ॥ १४ ॥ अथतौरामकृष्णौद्वौमायाबालकविग्रहौ ॥ मल्ल
लीलादर्शनार्थंययतूरंगमंडल ॥ १५ ॥ गोमूत्रचयसिन्दूरकस्तूरीपत्रभृन्मुखम् ॥ स्रवन्मदंमहामत्तंरत्नकुंडलमंडितम् ॥ १६ ॥ गजं
कुवलया पीडंरंगद्वारमवस्थितम् ॥ वीक्ष्यकृष्णोमहामात्रंप्राहगंभीरयागिरा ॥ १७ ॥ आकर्षयांगनागेन्द्रंमार्गंकुरुममेच्छया ॥ नचेत्त्वां
पातयिष्यामिसनागंभूमिमण्डले ॥ १८ ॥ महामात्रस्तदाक्रुद्धोनोदयामासतंगजम् ॥ चीत्कारमुत्कटंदिक्षुकुर्वंतंनन्दसूनवे ॥ १९ ॥
गृहीत्वातंहरिंसद्यः शुंडादंडेननागराट् ॥ उज्जहारततस्तस्मान्निर्गतोभारभृद्धरिः ॥ २० ॥ तत्पादेषुविलीनोभूत्प्रभ्रमन्सन्नितस्ततः ॥
वृन्दावननिकुंजेषुवृक्षेषुचयथाहरिः ॥ २१ ॥ करेजग्राहतन्नागःशुंडादंडेनचांघ्रिपु ॥ निष्पीडचशुंडांहस्ताभ्यांहरिःपश्चाद्विनिर्गतः ॥
॥ २२ ॥ तियग्भूतश्चतंनागोग्रहीतुमुपचक्रमे ॥ मुष्टिनातंघातयित्वापुरोदुद्रावमाधवः ॥ २३ ॥ तमन्वधावन्नागेन्द्रोमथुरायांविदेहराट् ॥
कोलाहलेतदाजातेहरिस्तस्मादितोययौ ॥ २४ ॥ पुच्छेगृहीत्वातन्नागंबलदेवोमहाबलः ॥ चकर्षभुजदंडाभ्यांफणिनंगरुडोयथा ॥
॥ २५ ॥ प्रहसन्भगवान्कृष्णोगृहीत्वातंकरेबलात् ॥ चकर्षभुजदंडाभ्यांकूपरज्जुंयथानरः ॥ २६ ॥ द्वयोराकर्षणान्नागोविह्वलोभून्न

पेश्वर ॥ महामात्रास्तदासप्तरुरुधुस्तंगजंबलात् ॥ २७ ॥ नीतागजास्तथाचान्यैःकृष्णंहंतुंशतत्रयम् ॥ अंकुशास्फालनात्क्रुद्धंमत्तेभं
पुनरागतम् ॥ २८ ॥ श्रीकृष्णोभगवान्साक्षाद्बलदेवस्यपश्यतः ॥ २९ ॥ शुंडादंडेसंगृह्णीत्वाभ्रामयित्वात्वितस्ततः ॥ पातयामासभू
पृष्ठेकमंडलुमिवार्भकः ॥ ३० ॥ दूरेप्रपतितास्तस्यमहामात्राइतस्ततः ॥ सतांप्रपश्यतांनागःसद्योवैनिधनंगतः ॥ ३१ ॥ तज्ज्योतिः
श्रीघनश्यामेलीनंजातंविदेहराट् ॥ दंतावुत्पाट्यतस्यापिरामकृष्णौमहाबलौ ॥ निजघ्नतुर्महामात्रान्मृगान्केसरिणौयथा ॥ ३२ ॥ द्विपे
हतेपियेचान्येमहामात्राइतस्ततः ॥ विदुद्रुवुर्यथामेघावर्षाकालेगतेसति ॥ ३३ ॥ एवंहत्वाद्विपंगोपैःशेषैस्तैःप्रेक्षणोत्सुकैः ॥ जयारावै
रामकृष्णौश्रमवारिमदांकितौ ॥ ३४ ॥ परिश्रमारुणमुखौरंगंविविशतुस्त्वरम् ॥ दंतपाणीमहावेगौयथाशामनिलानलौ ॥ ३५ ॥ मल्लाश्च
मल्लंचनरानरेंद्रंस्त्रियःस्मरंगोपगणाव्रजेशम् ॥ पितासुतंदंडधरंह्यसंतोमृत्युंचकंसोविबुधाविराजम् ॥ ३६ ॥ तत्त्वंपरंयोगिवराश्चभोजा
देवंतदारंगगतंबलेन ॥ पृथक्पृथग्भावनयाह्यपश्यन्सर्वेजनास्तंपरिपूर्णदेवम् ॥ ३७ ॥ हतंद्विपंवीक्ष्यचतौमहाबलौकंसोमनस्वीभयमा
पचेतसि ॥ मंचस्थिताहर्षितमानसाश्चयौचंद्रंचकोराइवतेसुखंययुः ॥ ३८ ॥ कर्णेचकर्णविनिधायनागरामहोत्सुकास्तेह्यवदन्परस्परम् ॥
एतौहिसाक्षात्परमेश्वरौपरौबभूवतुर्वैवसुदेवनन्दनौ ॥ ३९ ॥ अहोतिरम्यंव्रजमंडलंपरंयत्रैषसाक्षाद्विचचारमाधवः ॥ कृत्वाहियद्दर्शनम
ह्यदुर्लभंवयंकृतार्थास्तुभवेमसर्वतः ॥ ४० ॥ ॥ नारदउवाच ॥ ॥ वदत्सुपौरलोकेषुनदत्तूर्येषुमैथिल ॥ चाणूरस्तावुपव्रज्यरामकृष्णा
वुवाचह ॥ ४१ ॥ ॥ चाणूरउवाच ॥ ॥ हेरामहेकृष्णयुवांमहाबलौराज्ञःपुरोवैकुरुतंमृधंबलात् ॥ प्रहर्षितेराजनिचेद्यदूत्तमेकिंकिंन
भद्रंभवतीहवश्चनः ॥ ४२ ॥ ॥ श्रीभगवानुवाच ॥ ॥ पुरैवभद्रंनृपतेःप्रसादतोबालावयंतुल्यबलैश्चबालकैः ॥ भूयान्मृधोनोबलवान्य
थोचितमधर्मयुद्धंकिलमाभवेदिह ॥ ४३ ॥ ॥ चाणूरउवाच ॥ ॥ भवान्नबालोनचवाकिशोरोबलश्चसाक्षाद्बलिनांबलीयान् ॥ सहस्रमत्ते
भबलंदधानोद्विपोभवद्भ्यांनिहतःसलीलम् ॥ ४४ ॥ ॥ श्रीनारदउवाच ॥ ॥ ... भगवान्वृजिनार्दनः ॥ चाणूरेणापियु
युधेमुष्टिकेनबलोबली ॥ ४५ ॥ आकर्षणंनोदनंचभुजाभ्यांभुजदंडयोः ॥ चक्रतुःपश्यतान्नृणांगजाविवजिगीषया ॥ ४६ ॥ हस्ताभ्यां

वपुरुत्थाप्यचाणूरस्यहरिःस्वयम् ॥ अतोलयद्देहभारंपुण्यभारंयथाविधिः ॥ ४७ ॥ चाणूरस्तंहरिंदेवंकरेणैकेनलीलया ॥ उज्जहारमहा
वीरोभूखंडंनागराडिव ॥ ४८ ॥ ग्रीवायांकिलचाणूरंभुजवेगेनमाधवः ॥ कट्यांचोद्धृत्यसहसापातयामासभूतले ॥ ४९ ॥ मुष्टिकश्चत
थायुद्धेबलदेवोमहाबलः ॥ जानुदेशेसमुत्थाप्यपातयामासभूतले ॥ ५० ॥ हस्तैश्चजानुभिःपादैर्भुजोरोंगुलिमुष्टिभिः ॥ जघ्नतुःकृष्णचा
णूरौतथैवबलमुष्टिकौ ॥ ५१ ॥ श्रमवारियुतेदृष्ट्वाश्रीमुखेरामकृष्णयोः ॥ सानुकंपास्तदाप्राहुर्गवाक्षस्थानृपस्त्रियः ॥ ५२ ॥ ॥ स्त्रिय
ऊचुः ॥ अहोअधर्मःसुमहत्सभायांजातःपुरोराजनिवर्तमाने ॥ क्ववज्रतुल्यांगवृतौहिमल्लौक्वपुष्पतुल्यौबतरामकृष्णौ ॥ ५३ ॥ अहोअभा
ग्यंहिपुरौकसांनोयुद्धेतयोर्दर्शनमद्यजातम् ॥ अहोतिधन्यंबतभूरिभाग्यंवनौकसांरासरसेनजातम् ॥५४॥ अहोस्थितेराजनिदुष्टचित्तेनको
पिवक्तुंक्षमएवसख्यः ॥ तस्माद्धिनःपुण्यबलेनचेत्तौत्वरंमृधेवैजयतामरीन्स्वान् ॥५५॥ इ०ग०सं०श्रीम०ना०ब०संधे०सप्तमोऽध्यायः ॥७॥
॥ श्रीनारदउवाच ॥ ॥ आर्द्रचित्तंनन्दराजंवनितानांमनोरथम् ॥ स्मृत्वाशत्रून्हन्तुकामश्चक्रेयुद्धंबलाद्धरिः ॥ १ ॥ गृहीत्वाभुजद
ण्डाभ्यांचाणूरङ्गगनेबलात् ॥ चिक्षेपसहसाकृष्णोवातःपद्ममिवोद्धतम् ॥ २ ॥ आकाशात्पतितःसोपितारकेवह्यधोमुखः ॥ उत्थाय
मुष्टिनाकृष्णंताडयामासवेगतः ॥ ३ ॥ तस्यमुष्टिप्रहारेणनचचालपरात्परः ॥ सद्योगृहीत्वाचाणूरंपातयामासभूतले ॥ ४ ॥ भिन्नदन्तस्तु
चाणूरःक्रोधयुक्तोमदोत्कटः ॥ मुष्टिद्वयेनश्रीकृष्णंतताडहृदिमैथिल ॥ ५ ॥ गृहीत्वाकरयोस्तंवैकराभ्यांभगवान्स्वयम् ॥ कंसस्याग्रेभ्रा
मयित्वासर्वेषांपश्यतांनृप ॥ ६ ॥ पातयामासभूपृष्ठेकमण्डलुमिवार्भकः ॥ श्रीकृष्णस्यप्रचारेणचाणूरोभिन्नमस्तकः ॥ ७ ॥ उद्वमन्रु
धिरंराजन्सद्योवैनिधनंगतः ॥ तथैवमुष्टिकंमल्लंमुष्टिभिर्युधिदुर्गमम् ॥ ८ ॥ धृत्वांघ्रौभ्रामयित्वाखेबलदेवोमहाबलः ॥ पातयामासभूपृ
ष्ठेफणिनंगरुडोयथा ॥ मुष्टिकोनिधनंप्रापप्रोद्वमन्रुधिरंमुखात् ॥ ९ ॥ कूटंसमागतंवीक्ष्यबलदेवोमहाबलः ॥ मुष्टिनापातयामासवज्रेणे
न्द्रोयथागिरिम् ॥ १० ॥ प्राप्तंशलंनन्दसूनुर्लत्तयातन्तताडह ॥ तीक्ष्णयातुण्डयाराजन्कद्रुजङ्गरुडोयथा ॥ ११ ॥ गृहीत्वातोशलं
कृष्णोमध्यतःसंविदार्यच ॥ प्राक्षिपत्कंसमञ्चाग्रेविटपंसिंधुरोयथा ॥ १२ ॥ एतेनिपातितारङ्गेसद्योवैनिधनङ्गताः ॥ तेषांज्योतींषिवैकु

ण्ठेविविशुःपश्यतांसताम् ॥ १३ ॥ एवंश्रीरामकृष्णाभ्यांमल्लेषुनिहितेषुच ॥ शेषाःप्रदुद्रुवुर्मल्लाभयार्ताजीवनेच्छया ॥ १४ ॥ श्रीदामा
दीन्वयस्यांश्चगोपानाकृष्यमाधवः ॥ तैःसार्द्धंयुद्धमारेभेसर्वेषांपश्यतांसताम् ॥ १५ ॥ किरीटकुण्डलधरौरामकृष्णौसहार्भकैः ॥ वि
हरन्तौवीक्ष्यरंगेविसिष्मुःपुरवासिनः ॥ १६ ॥ कंसंविनासर्वमुखाज्जयशब्दोविनिर्गतः ॥ साधुसाध्वितिवादोभून्नेदुर्दुंदुभयस्ततः ॥ १७ ॥
स्वस्याऽजयंवीक्ष्यकंसोमहाक्रोधसमाकुलः ॥ वर्जयित्वातूर्यघोषंप्राहप्रस्फुरिताधरः ॥ १८ ॥ ॥ कंसउवाच ॥ ॥ दुर्बुद्धियुक्तौवसु
देवनन्दनौप्रसह्यनिःसारयताशुमत्पुरात् ॥ हरंतुसर्वंव्रजवासिनांधनंबध्नीतनन्दंसहसातिदुर्मतिम् ॥ १९ ॥ अद्योग्रसेनस्यपितुःकुबुद्धेः
शौरेःशिरश्चाशुहिछिंधिछिंधि ॥ कौयत्रतत्रापितथात्रवृष्णिजातान्सुरांशान्किलसूदयध्वम् ॥ २० ॥ ॥ नारदउवाच ॥ ॥ एवंविकत्थ
मानस्यकंसस्ययदुनंदनः ॥ सहसोत्पत्यतंमञ्चमारुह्यक्रोधपूरितः ॥ २१ ॥ मृत्युंसमागतंवीक्ष्यमञ्चादुत्थायसत्वरम् ॥ मदोद्धतोभर्त्स
यंस्तंजगृहेखड्गचर्म्मणी ॥२२ ॥ अग्रहीत्सहसाकंसंदोर्भ्यांचर्मासिसंयुतम् ॥ यथातुण्डविभागाभ्यांसविषंफणिनंविराट् ॥२३॥ पतत्खड्ग
श्चलच्चर्माभुजबन्धाद्बलाद्बली ॥ विनिर्ययौतार्क्ष्यतुण्डात्पुण्डरीकोयथाफणी ॥ २४ ॥ मञ्चेतौबलिनौवेगान्मर्दयन्तौपरस्परम् ॥ शैलशृंगे
यथासिंहौशुशुभातेयथातथम् ॥ २५ ॥ उत्पतन्तम्बलात्कंसंशतहस्तंमहाम्बरे ॥ अग्रहीच्चोत्पतन्कृष्णःश्येनंश्येनोयथाम्बरे ॥ २६ ॥ गृही
त्वाभुजदण्डाभ्यांप्रचण्डंदैत्यपुङ्गवम् ॥ त्रैलोक्यबलधृग्देवोभ्रामयित्वात्वितस्ततः ॥ २७ ॥ आकाशात्पातयामासमञ्चोपरिरुषान्वितः ॥
भग्नदण्डोभवन्मञ्चस्तडित्पातेयथाद्रुमः ॥ २८ ॥ पतितोपिसवज्राङ्गःकिञ्चिद्व्याकुलमानसः ॥ सहसोत्थाययुयुधेश्रीकृष्णेनमहात्मना ॥
॥ २९ ॥ नीत्वातंभुजदण्डाभ्यांमञ्चेक्षिप्त्वापुनःप्रभुः ॥ आरुह्यहृदयंतस्यमौलिंजग्राहमाधवः ॥ ३० ॥ सद्यःप्रगृह्यकेशेषुरंगोपरिहरिः
स्वयम् ॥ मञ्चात्तंपातयामासशैलाद्गण्डशिलामिव ॥ ३१ ॥ तस्योपरिष्टाच्छ्रीकृष्णःसर्वाधारःसनातनः ॥ निपपातस्वयंवेगादनंतोनन्त
विक्रमः ॥ ३२ ॥ इत्थंद्वयोर्निपातेननिम्नं [illegible] यम् ॥ ३३ ॥ सम्परेतम्भोजराजंभूमितं ॥९०॥
विचकर्षह ॥ यथामृगेन्द्रोनागेन्द्रंसर्वेषांपश्यतांनृप ॥३४॥हाहाकारस्तदैवासीद्धावतांभूभुजांनृप॥वैरभावेनदेवेशंभजन्कंसोमहाबलः ॥३५॥

हींतेभगवानेवदास्यति ॥ १७ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्तस्तुतदानर्तोराजानंप्राहमानदः ॥ यत्रतत्रमहाराजेयतव्रजासो
नमेभवेत् ॥ १८ ॥ पित्रानिःसारितोराज्ञात्वानर्तोऽब्धितटंगतः ॥ वेलामेत्यतपस्तेपेवर्षाणामयुतंजले ॥ १९ ॥ प्रेमलक्षणयाभ
क्त्यासन्तुष्टोभगवान्हरिः ॥ तस्मैस्वंदर्शनंदत्त्वावरंब्रूहीत्युवाचह ॥ २० ॥ कृतांजलिपुटोभूत्वानर्तउत्थायशीघ्रतः ॥ ननामकृष्णपादा
ब्जंरोमांचीप्रेमविह्वलः ॥ २१ ॥ ॥ आनर्त्तउवाच ॥ ॥ नमस्तेवासुदेवायनमःसंकर्षणायच ॥ प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः
॥ २२ ॥ पित्रानिष्कासितोदेवत्वामहंशरणंगतः ॥ देहिमह्यंभूमिमन्यांयत्रवासोहिमेभवेत् ॥२३॥ भुवोप्यियत्प्रसादेनययौसर्वोत्तमंपदम् ॥
तस्मैनमोभगवतेप्रणतक्लेशहारिणे ॥ २४ ॥ ॥ श्रीनारदउवाच ॥ ॥ आनर्तमानतंदीनंभगवान्दीनवत्सलः ॥ प्रसन्नःश्रीमुखेनाहमेघ
गंभीरयागिरा ॥ २५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ अन्यानमेदिनीलोकेकिंकर्तव्यंमयानृप ॥ स्ववचस्तदृतंकर्तुंत्वद्भक्त्यापरितोषितः ॥
॥ २६ ॥ तस्माद्देवस्यलोकस्यवैकुंठस्यपरंतपः ॥ भूखंडंयोजनशतंददामिविमलंशुभम् ॥२७॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्त्वानर्तंनृप
तिंभगवान्भक्तवत्सलः ॥ वैकुंठाच्चसमुत्पाट्यभूखंडंशतयोजनम् ॥ २८ ॥ चक्रंसुदर्शनंधृत्वासमुद्रेभीमनादिनि ॥ दधारभगवान्देवस्त
स्योपरिविदेहराट् ॥ २९ ॥ आनर्तोलक्षवर्षांतंतत्रराज्यंचकारह ॥ पुत्रपौत्रसमायुक्तोराजन्वैकुंठसंपदम् ॥ ३० ॥ इदंश्रुत्वाथशर्यातिःपि
तावैविस्मितोभवत् ॥ आनर्तोनामदेशोभूदानर्तस्यप्रसादतः ॥ ३१ ॥ रेवतस्तस्यपुत्रोभूच्छ्रीशैलस्यगिरेःसुतम् ॥ समुत्पाट्यस्वहस्ता
भ्यामानर्तेषुन्यपातयत् ॥ ३२ ॥ सोभूद्रेवतनाम्नापिरैवतोनामपर्वतः ॥ कुशस्थलींविनिर्मायराज्यंकृत्वाथरेवतः ॥ ३३ ॥ समादायस्वकां
कन्यांब्रह्मलोकंजगामह ॥ बलदेवविवाहेपितत्कथाकथितामया ॥ तस्माद्द्वारावतींपुण्यांमोक्षद्वारंविदुःसुराः ॥ ३४ ॥ इति श्रीमद्गर्गाचार्य
संहितायां श्रीद्वारकाखण्डे नारदबहुलाश्वसंवादे द्वारकागमनकारणंनामनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ छ ॥
॥ श्रीनारदउवाच ॥ ॥ इत्थंमयातेकथितंद्वारकागमकारणम् ॥ सर्वपापहरंपुण्यंकिंभूयःश्रोतुमिच्छसि ॥ १ ॥ ॥ बहुलाश्वउ
वाच ॥ ॥ सर्वतीर्थमयीभूमिर्द्वारकानगरीशुभा ॥ तत्रमुख्यानितीर्थानिवदमांमुनिसत्तम ॥ २ ॥ ॥ श्रीनारदउवाच ॥ ॥ आप्रभासात्ती
र्थमयीमर्यादीकृत्यपुण्यदा ॥ भूमिर्मोक्षप्रदाराजन्द्वारकायोजनैःशतम् ॥ ३ ॥ द्वारकांनगरींदृष्ट्वानरोनारायणोभवेत् ॥ द्वारकायांमृतःको

पिगदर्भोपिचतुर्भुजः ॥ ४ ॥ पश्यन्छृण्वन्कथांतस्याद्वारकेतिवदन्कचित् ॥ दृष्ट्वादद्यात्तृणंमृत्युंगतोयातिपरांगतिम् ॥ ५ ॥ एकदारे
वतंभक्तंप्रेमानंदसमाकुलम् ॥ प्रेक्ष्यस्वंदर्शनंदत्वाहरिरश्रुमुखोभवत् ॥ ६ ॥ तन्नेत्रबिंदुसंभूतागोमतीसामहानदी ॥ यस्यादर्शनमात्रेण
ब्रह्महत्याप्रमुच्यते ॥ ७ ॥ गोमतीतीरजंपुण्यंरजोयोधारयेन्नरः ॥ शतजन्मकृतात्पापान्मुच्यतेनात्रसंशयः ॥ ८ ॥ स्नानकालेगोमतीति
वदत्यपिनरःक्वचित् ॥ गोमत्यांस्नानजंपुण्यंलभतेवैनसंशयः ॥ ९ ॥ मकरस्थेरवौमाघेप्रयागेस्नानमाचरेत् ॥ शताश्वमेधजंपुण्यंसंप्राप्नो
तिविदेहराट् ॥ १० ॥ तत्सहस्रगुणंपुण्यंगोमत्यांमकरेरवौ ॥ गोमत्याश्चैवमाहात्म्यंवक्तुंनालंचतुर्मुखः ॥ ११ ॥ गोमत्यांचक्रतीर्थेषुपाषा
णनिचयाश्चये ॥ तेसर्वेचक्रतांयांतिपूजनीयाःप्रयत्नतः ॥ १२ ॥ चक्रचिह्नेचक्रतीर्थेद्वादश्यांस्नानमाचरेत् ॥ चक्रपाणिपदंयातिपापानां
भाजनोपिहि ॥ १३ ॥ कोटिजन्मकृतैःपापैःपतितोयोपिपातकी ॥ चक्रतीर्थस्यसोपानमेत्यमुक्तिंसमाप्नुयात् ॥ १४ ॥ बहुलाश्वउवाच ॥
गोमत्यांहिमहानद्यांचक्रतीर्थंशुभार्थदम् ॥ कथंजातंबहुमतंतन्मेब्रूहिमहामुने ॥ १५ ॥ ॥ नारदउवाच ॥ ॥ अत्रैवोदाहरंतीममितिहासंपु
रातनम् ॥ यस्यश्रवणमात्रेणपापहानिःपरंभवेत् ॥ १६ ॥ अलकेशोराजराजोनिधीशोधर्मभृत्प्रभुः ॥ वैष्णवंयज्ञमारेभेकैलासोत्तमभूमि
षु ॥ १७ ॥ तस्ययज्ञेस्वयंविष्णुरागतोवैस्वधामतः ॥ ब्रह्माशिवोजंभभेदीवरुणोयादसांपतिः ॥ १८ ॥ वायुर्यमोरविःसोमःक्षितिःसर्वजनेश्व
री ॥ गंधर्वाप्सरसःसिद्धाःसर्वेतत्रसमाययुः ॥ १९ ॥ देवर्षयःसमाजग्मुस्तथाब्रह्मर्षयोनृप ॥ धनाध्यक्षोऽभवत्तस्यपुत्रस्तुनलकूबरः ॥२०॥
रक्षायांवीरभद्रोभूत्सत्सेवायांगजाननः ॥ तथामरुद्गणाःसर्वेपरिवेषणकारिणः ॥ २१ ॥ बाहुलेयःसभापूजामकरोद्धर्मतत्परः ॥ घंटाना
दःपार्श्वमौलिःकुबेरस्यतुमंत्रिणौ ॥ २२ ॥ सर्वशास्त्रविदांश्रेष्ठौदानाध्यक्षौबभूवतुः ॥ एवंहिविधिवद्यज्ञोबभूवपरमोत्सवः ॥ २३ ॥ अध्वरा
वभृथस्नातोराजराजोमहामनाः ॥ परंभागंचदेवेभ्योविप्रेभ्योदक्षिणामदात् ॥ २४ ॥ एवंपूर्णेध्वरेमुख्येतुष्टेदेवर्षिसत्तमे ॥ आजगामाथदु
र्वासादंडीछत्रीजटाधरः ॥ २५ ॥ क्रोधीकृशःपादुकाग्निर्दीर्घश्मश्रुःकृशोदरः ॥ दर्भासनसमित्पात्रमृगचर्मधरःपरः ॥ २६ ॥ तमागतंसमा ॥११८॥
गम्यपूजयित्वाविधानतः ॥ भयभीतःपरिक्रम्यकुबेरःप्रणनामह ॥ २७ ॥ अद्यमेसफलंजन्मसफलंमंदिरंचमे ॥ अद्यमेसफलोयज्ञोजनं

स्त्वय्यागतेसति ॥२८॥इत्थंसंतोषितस्तेनदुर्वासाभगवान्मुनिः ॥ देवंमनुष्यधर्माणंप्राहप्रहसिताननः ॥ २९॥ त्वंराजराजोधर्मात्मादानी
विप्रपरायणः ॥ कृतस्तेवैष्णवोयज्ञोविष्णुसंतोषकारणः ॥ ३० ॥ नयाचितोमयात्वंवैकापिवैश्रवणप्रभो ॥ अद्यवैयाचनांकुर्वेज्ञात्वात्वांदा
निसत्तमम् ॥३१॥मद्याञ्चांसफलीकुर्यास्तुभ्यंदास्यामिसद्वरम् ॥ नचेत्त्वांभस्मसात्कुर्वेशापेनातिभयेनवै ॥३२॥ वर्ततेत्वद्गृहेसर्वेत्रैलोक्यनि
धयोनव ॥ तान्मेप्रयच्छभद्रंतेतदर्थंगतवानहम् ॥ ३३ ॥ नारदउवाच ॥ एतच्छ्रुत्वाराजराजोदानशीलउदारधीः ॥ ओमितिप्रतिगृ
ह्णीष्वप्राहतंगुह्यकेश्वरः ॥ ३४ ॥ एवंनिधीन्प्रदास्यंतंदानाध्यक्षौनिधीश्वरम् ॥ घंटानादःपार्श्वमौलिरूचतुर्लोभमोहितौ ॥ ३५ ॥ ॥
॥ द्वावूचतुः ॥ ॥ एकोयंब्राह्मणोलोभीनिधिभिःकिंकरिष्यति ॥ लक्षदिव्यंदेहिचास्मैवृत्तिंरक्षतथोत्तराम् ॥ ३६ ॥ ॥ नारदउवाच ॥
॥ तद्वचःपरुषंश्रुत्वादुर्वासाःक्रोधविग्रहः ॥ भ्रूभंगकुटिलीभूतेरक्तनेत्रेचकारह ॥ ३७ ॥ स्थलीवसर्वब्रह्मांडंचचालनिमिषद्वयम् ॥ प्रणतंध
नदंवीक्ष्यताभ्यांशापंमहामुनिः ॥ ३८ ॥ ॥ मुनिरुवाच ॥ ॥ घंटानादमहादुष्टपापबुद्धेतिलुब्धक ॥ ग्राहवत्त्वंधनग्राहीग्रहोभवमहा
खल ॥ ३९ ॥ पार्श्वमौलेपापबुद्धेधनलोभमदान्वितः ॥ गजवत्प्रेरणांकुर्वंस्त्वंगजोभवदुर्मते ॥ ४० ॥ नारदउवाच ॥ ॥ ताभ्यांशा
पंमुनिर्दत्त्वानिधीन्नीत्वाकुबेरतः ॥ वरंददौपुनस्तस्मैदुर्वासादुर्लभंपरम् ॥४१॥ अस्माद्दानाच्चद्विगुणाभवंतुनिधयोनव ॥ इत्युक्त्वासनिधिः
प्रागादहोतेजीयसाम्बलम् ॥ ४२ ॥ इ० श्रीग० संहि० द्वा० ना० ब० गोमत्युपाख्याने चक्रतीर्थमाहात्म्यन्नामदशमोध्यायः ॥ १० ॥
॥ श्रीनारदउवाच ॥ ॥ कुबेरमंत्रिणौदीनौविप्रशापविमोहितौ ॥ तत्रसाक्षात्स्वयंविष्णुःप्राहतौशरणंगतौ ॥ १ ॥ ॥ श्रीभगवानुवाच ॥
॥ मदर्चासंयुतेयज्ञेभवतांदुःखसंयुतौ ॥ ब्राह्मणानांवचोहंवैदूरीकर्तुंनचक्षमः ॥ २ ॥ भवतांग्राहमातंगौयुद्धंहियुवयोर्यदा ॥ तदावैमत्प्रसा
देनप्रकृतिंस्वांगमिष्यथः ॥ ३ ॥ ॥ नारदउवाच ॥ ॥ इत्युक्तौहरिणातौद्वौराजराजस्यमंत्रिणौ ॥ बभूवतुर्ग्राहगजौजातिस्मरणसंयुतौ ॥
॥ ४ ॥ घंटानादोभवद्ग्राहोगोमत्यांचशतंसमाः ॥ विकरालोमहाभीमःशतहस्तवपुर्द्धरः ॥ ५ ॥ पार्श्वमौलिर्गजेंद्रोभूद्रैवतस्यगिरेर्वने ॥
चतुर्दंतःकज्जलाभःपृष्ठप्राच्योधनुःशतम् ॥ ६ ॥ वंजुलैःकुरवैःकुंदैर्बदरैर्वेत्रवेणुभिः ॥ रंभाभूर्जवटैर्युक्तेकोविदारासनार्जुनैः ॥ ७ ॥ मंदारपा

टलाशोकचूतचंपकचन्दनैः ॥ पनसोदुंबराश्वत्थखर्जूरैर्बीजपूरकैः ॥ ८ ॥ प्रियालाम्रातकाम्रैश्चक्रमुकैःपरिमंडिते ॥ रैवतस्यवनेदीर्घेविचचार
महागजः ॥ ९ ॥ एकदामाधवेमासिगजेन्द्रोगिरिगह्वरात्॥ स्नातुंतांगोमतींगंगामाययौसगणोनदन् ॥ १० ॥ चिरंसमवगाह्याप्सुशुंडादंडै
रितस्ततः ॥ करेणुकलभान्सर्वान्स्नापयामासनागराट् ॥ ११ ॥ महान्ग्राहोपितत्रस्थोबलीयान्दैवनोदितः ॥ अग्रहीच्चरणेनागंक्रोधपूरित
विग्रहः ॥ १२ ॥ तेनैवतद्ध्रदेनीतोगजेंद्रोबलदर्पितः ॥ तमाकृष्यबहिःप्राप्तंपुनस्तेनविकर्षितः ॥ १३ ॥ करेणवश्चकलभास्तंतारयितुम
क्षमाः ॥ एवंतयोर्युध्यतोश्चकर्षतोंतर्बहिर्मिथः ॥१४॥ पंचाशत्पंचवर्षाणिव्यतीयुःपश्यतांसताम्॥ एवंकश्मलमापन्नोगजोजातिस्मरोमहान्॥
॥ १५ ॥ प्रेमलक्षणयाभक्त्याहरिपादकृताश्रयः ॥ सस्मारश्रीहरिंदेवंमृत्युपाशवशंगतः ॥ १६ ॥ ॥ गजेंद्रउवाच ॥ ॥ श्रीकृष्णकृष्ण
सखकृष्णवपुर्दधानकृष्णायतेप्रणतिरस्तुसुरेशविष्णो ॥ पूर्णप्रभोपरमपावनपुण्यकीर्तेमांपाहिपाहिपरमेश्वरपापपाशात् ॥ १७ ॥ नारद
उवाच ॥ ॥ एवंग्राहगृहीतांगंस्मरंतंचहरिंहरिः ॥ ज्ञात्वारुह्यखगंवेगादधावद्दीनवत्सलः ॥१८॥ स्वयंखगात्समुत्तीर्य्यधावंश्चक्रंसमाक्षिपत् ॥
चक्रेप्राप्तेपूर्वमेवग्राहस्यापिशिरोद्धृतम् ॥ १९ ॥ दैन्यंप्राप्तेधनमिवदेहाद्भिन्नंबभूवह ॥ पश्चात्प्रपतितंचक्रंगोमत्यांचह्रदेनदत् ॥ पाषाण
निचयान्सर्वांश्चक्राकारांश्चकारह ॥ २० ॥ तन्नेमिसंघर्षभवंचक्रतीर्थंशुभावहम् ॥ तच्चक्रदर्शनाद्राजन्ब्रह्महत्याप्रमुच्यते ॥ २१ ॥ ग्राहश्छिन्न
शिराभूत्वापूर्वरूपंदधारह ॥ श्रीकृष्णानुग्रहाद्धस्तीदिव्यरूपोबभूवसः ॥ २२ ॥ परिक्रम्यहरिंनत्वास्तुत्वादेवंकृतांजलिः ॥ कुबेरंमं
त्रिणौतौद्वौजग्मतुःस्वपदंपुनः ॥ २३ ॥ देवेषुपुष्पंवर्षत्सुजयध्वनिनदत्सुच ॥ जगामभगवान्साक्षात्स्वंधामप्रकृतेःपरम् ॥ २४ ॥ चक्रती
र्थकथामेनांयःशृणोतिनरोत्तमः ॥ चक्रतीर्थस्नानफलंसंप्राप्नोतिनसंशयः ॥ २५ ॥ गजग्राहकथांपुण्यांयःशृणोतिसमाहितः ॥ दुःस्वप्नंन
श्यतेतस्यसुस्वप्नंभवतिध्रुवम् ॥ २६ ॥ ॥ इति श्रीमद्गर्गा० श्रीद्वार०नारद०चक्रतीर्थोत्पत्तौगजग्राहमोक्षोनामैकादशोऽध्यायः ॥ ११ ॥
॥ श्रीनारदउवाच ॥ ॥ शंखोद्धारेतीर्थमुख्येस्वर्णदानंददातियः ॥ सगच्छेद्वैष्णवंलोकंसर्वोपद्रववर्जितम् ॥ १ ॥ श्रीकृष्णभक्तःशांता



त्माश्रितोनाममहामुनिः ॥ तीर्थयात्राप्रसंगेनप्राप्तआनर्तभूमिषु ॥ २ ॥ दृष्ट्वाशुभंसरःस्नात्वाहरेःपूजांचकारह ॥ तत्पूजायांमहाशंखंसुंद

रैर्लक्षणैर्वृतम् ॥ ३ ॥ चोरयामासकक्षीवांस्तस्यशिष्योतिलोभतः ॥ पूजाशंखंगतंवीक्ष्यक्रुद्धःप्राहत्रितोमुनिः ॥ ४ ॥ येननीतस्तुमेशंखःस
शंखोभवतुध्रुवम् ॥ तदैवशंखरूपोभूत्कक्षीवाञ्छापपीडितः ॥ ५ ॥ तत्पादयोर्निपतितःपाहिमामित्युवाचह ॥ शीघ्रंशांतस्त्रितःप्राहदुर्मे
तेकिंकृतंत्वया ॥ स्तेयदोषाद्भुंक्ष्वपापंमद्वचोनोमृषाभवेत् ॥ ६ ॥ भजश्रीकृष्णपादाब्जंसतेमोक्षंकरिष्यति ॥ इत्युक्त्वाथगतेराजंस्त्रिते
देवेमहामुनौ ॥ ७ ॥ सरोवरेनिपतितः कक्षीवाञ्छंखरूपधृक् ॥ प्रवदन्कृष्णकृष्णेतिशतवर्षस्थितोभवत् ॥ ८ ॥ परिपूर्णतमःसाक्षा
द्भगवान्भक्तवत्सलः ॥ आगत्यसरसस्तीरंमाभैरित्यभयंददौ ॥ ९ ॥ तांमेवनादगंभीरांगिरं श्रुत्वाजलेचरः ॥ चुक्रोशपाहिपाहीतिदेवदेवज
गत्पते ॥ १० ॥ भुजगेंद्रभोगरुचाभुजेनभगवान्प्रभुः ॥ शंखंभक्तंगजमिवप्रोज्जहारदयापरः॥ ११॥ तदैवदिव्यरूपोभूच्छंखरूपंविहायसः ॥
कृतांजलिर्हरिंनत्वास्तुतिंचक्रेतदाचसः ॥ १२ ॥ ॥ कक्षीवानुवाच ॥ ॥ वासुदेवनमस्तेस्तुगोविंदपुरुषोत्तम ॥ दीनवत्सलदीनेशद्वा
रकेशपरेश्वर ॥ १३ ॥ ध्रुवेध्रुवपदंदात्रेप्रह्लादस्यार्तिहारिणे ॥ गजस्योद्धारिणेतुभ्यंबलेर्बलिविदेनमः ॥ १४ ॥ द्रौपदीचीरसन्तानकारि
णेहरयेनमः ॥ गराग्निवनवासेभ्यःपाण्डवानांसहायिने ॥ १५ ॥ यादवत्राणकर्त्रेचशक्रादाभीररक्षिणे ॥ गुरुमातृद्विजानांचपुत्रदात्रेनमो
नमः ॥ १६ ॥ जरासन्धनिरोधार्तनृपाणांमोक्षकारिणे॥नृगस्योद्धारिणेसाक्षात्सुदाम्नोदैन्यहारिणे ॥ १७ ॥ वासुदेवायकृष्णायनमःसंकर्ष
णायच ॥ प्रद्युम्नायानिरुद्धायचतुर्व्यूहायतेनमः ॥ १८ ॥ त्वमेवमाताचपितात्वमेवत्वमेवबन्धुश्चसखात्वमेव ॥ त्वमेवविद्याद्रविणंत्वमेव
त्वमेवसर्वंममदेवदेव ॥ १९ ॥ ॥ श्रीनारदउवाच ॥ ॥ एवंस्तुत्वाहरिंराजन्कक्षीवान्प्रेमपूरितः ॥ विमानवरमास्थाययादवानांचपश्य
ताम् ॥ २० ॥ बिभ्राजयन्दशदिशःशतसूर्यसमप्रभः ॥ जगामवैष्णवंलोकंसर्वोपद्रववर्जितम् ॥ २१ ॥ शंखोद्धारःकृतोयस्मिन्हरिणामै
थिलेश्वर ॥ तस्मात्तीर्थंमहापुण्यंशंखोद्धारंप्रथांगतम् ॥ २२ ॥ शंखोद्धारकथामेतांयःशृणोतिनरोत्तमः ॥ शंखोद्धारस्नानफलंलभतेवैन
संशयः ॥ २३ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायां श्रीद्वारकाखण्डेनारदबहुलाश्वसंवादे शंखोद्धारमाहात्म्यंनामद्वादशोऽध्यायः ॥१२॥
॥ श्रीनारदउवाच ॥ ॥ प्रभासस्यापिमाहात्म्यंशृणुराजन्महामते ॥ सर्वपापहरंपुण्यंतेजसांवर्द्धनंपरम् ॥ १ ॥ गोदावर्यांगुरौसिंहेहरक्षेत्रेच

कुंभगे ॥ रविग्रहेकुरुक्षेत्रेकाश्यांचंद्रग्रहेतथा ॥ २ ॥ यत्पुण्यंलभतेराजन्स्नानतोदानतोनरः ॥ तस्माच्छतगुणंपुण्यंप्रभासेचदिनेदिने ॥ ॥ ३ ॥ यत्रस्नात्वादक्षशापाद्गृहीतोयक्ष्मणोडुराट् ॥ विमुक्तःकिल्बिषात्सद्योभेजेभूयःकलोदयम् ॥ ४ ॥ महापुण्यतमाराजन्यत्रप्रत्यक्सरस्वती ॥ तस्यांस्नात्वानरःपापीसाक्षाद्ब्रह्ममयोभवेत् ॥ ५ ॥ तत्तीरेवर्ततेराजन्नाम्नावैबोधपिप्पलः ॥ कृष्णेनयत्रोद्धवायदत्तंभागवतंशुभम् ॥ ६ ॥ तन्नत्वाभ्यर्च्यविधिवत्स्पृष्ट्वाश्रीबोधपिप्पलम् ॥ शृणोतियोभागवतंपुराणंब्रह्मसंमितम् ॥७॥ श्लोकार्धंश्लोकपादंवामौनीनियतमानसः ॥ तस्यपाणौभवेद्राजन्वैष्णवंपरमंपदम् ॥ ८॥ प्रौष्ठपद्यांपूर्णिमायांहेमसिंहसमन्वितम् ॥ ददातियोभागवतंसयातिपरमांगतिम् ॥ ॥ ९ ॥ पुराणंनश्रुतंयैस्तुश्रीमद्भागवतंक्वचित् ॥ तेषांवृथाजन्मगतंनराणांभूमिवासिनाम् ॥ १० ॥ यैर्नश्रुतंभागवतंपुराणंनाराधितोयैःपुरुषःपुराणः ॥ हुतंमुखेनैवधरामराणांतेषांवृथाजन्मगतन्नराणाम् ॥ ११ ॥ द्वारावत्यांतीर्थराजंगोमतीसिन्धुसङ्गमम् ॥ यत्रस्नात्वानरोयातिवैकुण्ठंविमलंपदम् ॥ १२ ॥ शताश्वमेधजंपुण्यंगङ्गासागरसङ्गमे ॥ तत्सहस्रगुणंप्रोक्तंगोमतीसिन्धुसगङ्गमे ॥ १३ ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ यस्यश्रवणमात्रेणपापतापात्प्रमुच्यते ॥१४॥ आसीद्गजाह्वयेवैश्योराजमार्गपतिःपरः ॥ महागौरवसंयुक्तोनिधिःशोधनदोयथा ॥ १५ ॥ वेश्याप्रसङ्गनिरतोविटगोष्ठीविशारदः ॥ द्यूतक्रीडनकासक्तोलोभमोहमदान्वितः ॥ १६ ॥ मृषावादीमहादुष्टःकुकर्मनिरतःसदा ॥ ब्राह्मणेभ्योनपितृभ्योनदेवेभ्योधनंददौ ॥१७॥ हरेःकथांप्रेक्ष्यदूराद्दूरंवैनिर्ययौत्वरम् ॥ पित्रोःसेवापिनकृतानपुत्रेभ्योधनंददौ ॥ १८ ॥ त्यक्त्वाभार्यांसभिन्नोभूद्धनाढ्योदुर्मतिःखलः ॥ वेश्याप्रसङ्गात्तस्यापिधनार्धंप्रक्षयङ्गतम् ॥ १९ ॥ अर्धन्तुतस्करैर्नीतंकिञ्चित्पृथ्व्यागतंस्वतः ॥ पुण्येनवर्द्धतेलक्ष्मीःपापेनक्षीयतेध्रुवम् ॥ २० ॥ एवंसनिर्धनोजातोवेश्यासक्तोमहाखलः ॥ तस्मिन्गजाह्वयेरम्येचौरकर्मचकारह ॥२१॥ चौर्यकर्मप्रकुर्वन्तंबद्ध्वातंदामभिर्नृपः ॥ देशान्निःसारयामासशन्तनुर्नृपतीश्वरः ॥२२॥ वनेपिनिवसन्सोपिजीवहिंसाञ्चकारह ॥ समाद्द्वादशसाहस्रंनववर्षसुदारुणः ॥ २३ ॥ पश्चिमान्तदिशंगत्वावैश्योदुर्भिक्षपीडितः ॥ वनेवैमारितःसोपिसिंहेनतलघाततः ॥ २४ ॥ तदैवयमदूतास्तंबद्ध्वापाशैरधोमुखम् ॥ कशाघातैस्ताडयन्तोनिन्युर्मार्गंयमस्यच ॥ २५ ॥ अथकश्चिन्महायशोमां

सन्तस्यभुजस्यच ॥ गृहीत्वाखङ्गतःसद्यःखादंश्चंचुपुटेनतम् ॥ २६ ॥ निरामिषाःखगाश्चान्येसामिषंजग्मुरातुराः ॥ एवंकोलाहलेजाते
शंखचिह्नादिभिःकृते ॥ २७ ॥ नजहौमुखतोमांसंपश्चिमाशांजगामह ॥ तत्समेनापिगृध्रेणतीक्ष्णतुण्डेनताडितात् ॥ २८ ॥ तन्मुखात्प्रापत
न्मांसंगोमतीसिन्धुसंगमे ॥ तीर्थप्लुतेतस्यमांसेवैश्योयंपातकीमहान् ॥ २९ ॥ तेषांपाशान्स्वयंछित्त्वाभूत्वादेवश्चतुर्भुजः ॥ पश्यतांयमदू
तानांविमानमधिरुह्यसः ॥ ३० ॥ विराजयन्दिशःसर्वाःपरंधामहरेर्ययौ ॥ ३१ ॥ गोमतीसिन्धुसंगस्यमाहात्म्यंशृणुतेनरः ॥ सर्वपापविनि
र्मुक्तोविष्णुलोकंप्रयातिसः ॥ ३२ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायां श्रीमद्द्वारकाखण्डे नारदबहुलाश्वसंवादे प्रभाससरस्वतीबोधपि
प्पलगोमतीसिंधुसंगममाहात्म्यंनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ नारदउवाच ॥ ॥ द्वारावत्याःसमुद्रस्यमाहात्म्यंशृणुमानद ॥ सर्वं
पापहरंपुण्यंतत्स्नानंफलदंस्मृतम् ॥ १ ॥ माधव्यांपौर्णमास्यांयोव्रतीस्नात्वानदीपतिम् ॥ नत्वासंपूज्यविधिवद्रत्नदानंकरोतिच ॥ २ ॥
तस्यदेहेत्रयोदेवानिवसंतिमहीपते ॥ यस्यदर्शनमात्रेणनरोयातिकृतार्थताम् ॥ ३ ॥ तद्देहस्पर्शनात्सद्योब्रह्महत्याप्रमुच्यते ॥ यत्रयत्रगतःसोपित
त्रतत्रतनुःशुभा ॥ ४ ॥ दृष्ट्वातंचमृतःपापीजगद्वधकरोपिहि ॥ छिनत्तिपापपटलंपरंमोक्षंप्रयातिहि ॥ ५ ॥ रैवतस्याथशैलस्यमाहात्म्यंशृणु
मानद ॥ सर्वपापहरंपुण्यंभुक्तिमुक्तिप्रदायकम् ॥ ६ ॥ गौतमस्यसुतोधीमान्मेधावीनामवैष्णवः ॥ विंध्याचलेतपस्तेपेवर्षाणामयुतंशतम् ॥ ७ ॥
तंद्रष्टुमागतःसाक्षादपांतरतमोमुनिः ॥ नोच्चचालासनात्सोपिमेधावीतपसोत्कटः ॥ ८ ॥ अपांतरतमस्तंवैशशापक्रोधपूरितः ॥ सताममभ
क्तपापात्मंस्तपोबलविगर्वितः ॥ ९ ॥ शैलवत्तेस्थितिश्चात्रत्वंशैलोभवदुर्मते ॥ इत्युक्त्वाथगतेसाक्षादपांतरतमेमुनौ ॥ १० ॥ मेधावी
शैलतांप्राप्तःश्रीशैलस्यसुतोऽभवत् ॥ जातिस्मरोमहाबुद्धिर्विष्णुभक्तिप्रभावतः ॥ ११ ॥ एकदामन्मुखाच्छ्रुत्वामाहात्म्यंद्वारकापुरः ॥
प्रोवाचसोपिराजानंरैवतंगच्छसत्वरम् ॥ १२ ॥ वदमत्प्रार्थनामुक्तांत्वंमहादीनवत्सलः ॥ सोयंमहाबलोराजाप्रसन्नोयदिवाभवेत् ॥ १३ ॥
तेननीतस्यमेवासोभविष्यतिहरेःपुरि ॥ इतिश्रुत्वामयाविष्णुभक्तानांशांतिकारिणा ॥ १४ ॥ रैवतायाशुकथितंतथोक्तंपरमंवचः ॥ सप्र
सन्नःप्राहराजन्नत्रकोपिनपर्वतः ॥ १५ ॥ त्वत्स्थापनांकरिष्यामिसमुत्पाट्यभुजाबलात् ॥ समुन्नीयद्वारकायांप्रतिज्ञामकरोदिमाम् ॥ १६ ॥

एतस्मिंस्तंचोरयितुंप्रयातेनृपसत्तमे ॥ तत्पूर्वस्मादहंप्राप्तःश्रीशैलस्यपुरेनृप ॥ १७॥ कलिप्रियेणापिमयाश्रीशैलायमहात्मने ॥ कथि
तःसर्ववृत्तांतोनृपचौर्यसमन्वितः ॥ १८ ॥ श्रीशैलपुत्रमोहेननिर्भर्त्स्यश्वक्रयासिहि ॥ सुमेरुगिरिराजंचहिमवंतंनगेश्वरम् ॥ १९ ॥ श्री
शैलःप्राहधर्मात्मापुत्रस्नेहसमाकुलः ॥ एकोदैवेनदत्तोयंनपुत्राबहवश्वमे ॥ २० ॥ तंहर्तुमागतेराज्ञिरैवतेवैमहाबले ॥ विदेशंयातिपुत्रोमेते
नराज्ञामहात्मना ॥ २१ ॥ पुत्रस्नेहाभिभूतोहंयुवयोःशरणंगतः ॥ जित्वातंरैवतंशीघ्रंपुत्रमादातुमर्हथ ॥ २२ ॥ जातेश्वकारणात्तौद्वौसुमे
रुश्चहिमाचलः ॥ शैललक्षैःपरिवृतौयोद्धुमाजग्मतुर्द्रुतम् ॥ २३ ॥ ततोभुजाभ्यामुत्पाट्यहनुमानिवतंगिरिम् ॥ ऊर्ध्वंकृत्वाबलाद्राजाय
दागंतुंमनोदधे ॥ २४ ॥ तदैवचागतान्वीक्ष्यगिरीञ्छस्त्रास्त्रधारिणः ॥ अट्टहासंचकारोच्चैस्तडित्पातमिवात्मनः ॥२५॥ ननादतेनब्रह्मांडं
सप्तलोकैर्बिलैःसह ॥ तदैवतेषांशस्त्राणिहस्तेभ्योन्यपतन्स्वतः ॥ २६ ॥ निःशस्त्रास्तेयदाशैलाः कुर्वंतःप्रध्वनिंमुहुः ॥ गच्छंतंसगि
रिंजग्मुर्मुष्टिभिर्जानुभिःपथि ॥ २७ ॥ यथापुराहनूमंतमनुयातामहाबलम् ॥ तैस्ताडितोपिनजहौगिरिंराजाकराग्रतः ॥ २८ ॥मन्मुखाच्छ्री
हरिःश्रुत्वाशैलोद्योगंनृपोपरि ॥ सद्योभक्तसहायार्थंभगवान्भक्तवत्सलः ॥ २९ ॥ आगत्याकाशमार्गेपिदत्त्वातेजःस्वकंपरम् ॥ माभै
षीरिभयंदत्त्वात्वरमंतरधीयत ॥ ३० ॥ गतेहरौभगवतिभगवत्तेजसान्वितः ॥ एकहस्तेगिरिंधृत्वामुष्टिनावज्रघातिना ॥ ३१ ॥ सुमेरुंसं
तताडाशुवज्रीवबलवत्तरः ॥ तस्यमुष्टिप्रहारेणमेरुर्विह्वलतांगतः ॥ ३२ ॥ हिमवंतंबाहुवेगात्पातयित्वामहीतले ॥ ममर्दपद्भ्यांचान्यांश्व
विंध्यादीन्रणदुर्मदः ॥ ३३ ॥ विंध्यादयश्वतेसर्वेपादघातेनमर्दिताः ॥ भयभीतारणंत्यक्त्वादुद्रुवुस्तेदिशोदश ॥ ३४ ॥ एवंजित्वाशैल
संघंतंशैलंशैलसन्निभः ॥ रैवतोपिजयारावैरानर्तेषुन्यपातयत् ॥ ३५ ॥ सोभूद्रैवतनामापिराजन्रैवतकोऽचलः ॥ हरिभक्तःशैलमुख्यो
द्वारावत्यांविराजते ॥ ३६ ॥ तस्यदर्शनमात्रेणब्रह्महत्याप्रमुच्यते ॥ स्पर्शनाच्छतयज्ञानांफलमाप्नोतिमानवः ॥ ३७ ॥ यात्रांकृत्वापिय
स्यापिपरिक्रम्यनताननः ॥ भोजनंब्राह्मणेदत्त्वायातिविष्णोःपरंपदम् ॥ ३८ ॥ इति श्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडे नारदबहु
लाश्वसंवादेरत्नाकररैवतकाचलमाहात्म्यंनामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ श्रीनारदउवाच ॥ ॥ तस्मिन्गिरौयज्ञतीर्थेरैवते

नकृतंपुरा ॥ यत्रकृत्वायज्ञमेकंकोटियज्ञफलंलभेत् ॥१॥कपिटंकंनामतीर्थंकपिपातसमुद्भवम् ॥ गिरौरैवतकेराजन्सर्वपापप्रणाशनम् ॥२॥
भौमासुरसखोदुष्टोद्विविदोनामवानरः ॥ मारितोयत्ररामेणमुष्टिनावज्रपातिना ॥ ३ ॥ सद्योमुक्तिंगतःसोपिसतांहेलनवानपि ॥ तत्रस्नातुं
सदादेवाआगच्छंतिनरेश्वर ॥४॥ कलविंकस्ययात्रायांकोटिगोदानजंफलम् ॥ एतच्चद्विगुणंपुण्यंदंडकाख्येवनेशुभे ॥५॥ तस्माच्चतुर्गुणंपुण्यं
सैंधवाख्येमहावने ॥ जंबुमार्गेपंचगुणंपुण्यंप्राप्नोतिमानवः ॥ ६ ॥ तस्माद्दशगुणंपुण्यंपुष्कराख्येवनेस्मृतम् ॥ तस्माद्दशगुणंपुण्यमुत्पलावर्त
यात्रया ॥ ७ ॥ तस्माच्चनैमिषारण्येपुण्यंदशगुणंस्मृतम् ॥ तस्माच्छतगुणंपुण्यंकपिटंकेविदेहराट् ॥ ८ ॥ नृगकूपंद्वारकायांतीर्थानांतीर्थ
मुत्तमम् ॥ यस्यदर्शनमात्रेणविप्रवध्यात्प्रमुच्यते ॥ ९॥अज्ञानाद्ब्राह्मणस्यापिगांददौब्राह्मणायसः॥तेनपापेनकूपेवैकृकलासवपुर्द्धरः ॥१०॥
नृगोपिदानिनांश्रेष्ठःपतितोथचतुर्युगम् ॥ श्रीकृष्णेनतदुद्धारःकृतोवैपश्यतांसताम् ॥ ११ ॥ तद्दिनान्नृगकूपस्तुतीर्थीभूतोमहीपते ॥ कार्तिके
पूर्णिमायांतुतस्मिन्स्नानंसमाचरेत् ॥ १२ ॥ कोटिजन्मकृतात्पापान्मुच्यतेनात्रसंशयः ॥ एकंयत्रापिगोदानंकरोतिविधिवन्नरः॥१३॥ को
टिगोदानजंपुण्यंलभतेवैनसंशयः ॥ गोपीभूमेश्चमाहात्म्यंशृणुपापहरंपरम् ॥ १४ ॥ यस्यश्रवणमात्रेणकर्मबंधात्प्रमुच्यते ॥ गोपीनांयत्रवा
सोभूत्तेनगोपीभुवःस्मृताः ॥ १५ ॥ गोप्यंगरागसंभूतंगोपीचंदनमुत्तमम् ॥ गोपीचंदनलिप्तांगोगंगास्नानफलंलभेत् ॥१६॥ महानदीनां
स्नानस्यपुण्यंतस्यदिनेदिने ॥ गोपीचंदनमुद्राभिर्मुद्रितोयःसदाभवेत् ॥ १७ ॥ अश्वमेधसहस्राणिराजसूयशतानिच ॥ सर्वाणितीर्थदा
नानिव्रतानिचतथैवच ॥ कृतानितेननित्यंवैसकृतार्थोनसंशयः ॥ १८ ॥गंगामृद्द्विगुणंपुण्यंचित्रकूटरजःस्मृतम् ॥ तस्माद्दशगुणंपुण्यंरजःपं
चवटीभवम् ॥१९॥ तस्माच्छतगुणंपुण्यंगोपीचंदनकंरजः॥ गोपीचंदनकंविद्धिवृंदावनरजःसमम्॥२०॥ गोपीचन्दनलिप्तांगोयदिपापशतै
र्युतः ॥ तंनेतुंनयमःशक्तोयमदूतःकुतःपुनः ॥ २१ ॥ नित्यंकरोतियःपापीगोपीचन्दनधारणम् ॥ सप्रयातिहरेर्धामगोलोकंप्रकृतेःपरम् ॥
॥ २२ ॥ सिंधुदेशस्यराजाभूद्दीर्घबाहुरितिश्रुतः ॥ अन्यायवर्तीदुष्टात्मावेश्यासंगरतःसदा ॥ २३ ॥ तेनवैभारतेवर्षेब्रह्महत्याशतंकृतम् ॥
दशगर्भवतीहत्याकृतातेनदुरात्मना ॥ २४ ॥ मृगयायांतुबाणौघैःकपिलागोवधःकृतः ॥ सैंधवंहयमारुह्यमृगयार्थीगतोभवत् ॥ २५ ॥

एकदाराज्यलोभेनमंत्रीक्रुद्धोमहाखलम् ॥ जघानारण्यदेशेततंतीक्ष्णधारेणचासिना ॥ २६ ॥ भूतलेपतितंमृत्युगतंवीक्ष्ययमानुगाः ॥ बद्ध्वा
यमपुरींनिन्युर्हर्षयन्तःपरस्परम् ॥ २७ ॥ संमुखेवस्थितंवीक्ष्यपापिनंयमराड्बली ॥ चित्रगुप्तंप्राहतूर्णंकायोग्यायातनास्यवै ॥२८॥ चित्र
गुप्तउवाच ॥ ॥ चतुरशीतिलक्षेषुनरकेषुनिपात्यताम् ॥ निःसंदेहंमहाराजयावच्चंद्रदिवाकरौ ॥२९॥ अनेनभारतेवर्षेक्षणंनसुकृतंकृतम् ॥ द
शगर्भवतीघातःकपिलागोवधःकृतः ॥३०॥प्रजापीडाबहुकृतावेश्यासंगःकृतोऽनिशम् ॥ अनेनधनलोभेनब्रह्महत्याशतंकृतम् ॥३१॥ तथा
वनमृगाणांचकृताहत्याःसहस्रशः ॥ तस्मादयंमहापापीदेवताद्विजनिंदकः ॥३२॥ ॥ नारदउवाच ॥ ॥ तदैवमाज्ञयादूतानीत्वातंपापरूपि
णम् ॥ सहस्रयोजनायामेतप्ततैलेमहाखले ॥ ३३ ॥ स्फुरदत्युच्छलत्फेनेकुंभीपाकेन्यपातयन् ॥ प्रलयाग्निसमोवह्निःसद्यःशीतलतांगतः
॥ ३४ ॥ वैदेहतन्निपतनात्प्रह्लादक्षेपणाद्यथा ॥ तदैवचित्रमाचख्युर्यमदूतामहात्मने ॥ ३५ ॥ अनेनसुकृतंभूमौक्षणवन्नकृतंक्वचित् ॥
चित्रगुप्तेनसततंधर्मराजोव्यचिंतयत् ॥ ३६ ॥ सभायामागतंव्यासंसम्पूज्यविधिवन्नृप ॥ नत्वापप्रच्छधर्मात्माधर्मराजोमहामतिः ॥ ३७॥
यमउवाच ॥ ॥ अनेनपापिनापूर्वंनकृतंसुकृतंक्वचित् ॥ स्फुरदत्युच्छलत्फेनेकुम्भीपाकेमहाखले ॥ ३८ ॥ अस्यक्षेपणतोवह्निःसद्यः
शीतलताङ्गतः ॥ इतिसन्देहतश्चेतःखिद्यतेमेनसंशयः ॥ ३९ ॥ ॥ श्रीव्यासउवाच ॥ ॥ सूक्ष्मागतिर्महाराजविदितापापपुण्ययोः ॥
तथाब्रह्मगतिःप्राज्ञैःसर्वशास्त्रविदांवरैः ॥४०॥ दैवयोगादस्यपुण्यंप्राप्तंवैस्वयमर्थवत् ॥ येनपुण्येनशुद्धोसौतच्छृणुत्वंमहामते॥४१॥कस्यापि
हस्ततोयत्रपतिताद्वारकामृदः ॥ तत्रैवायंमृतःपापीशुद्धोभूत्तत्प्रभावतः ॥ ४२ ॥ गोपीचन्दनलिप्तांगोनरोनारायणोभवेत् ॥ एतस्यदर्शना
त्सद्योब्रह्महत्याप्रमुच्यते ॥ ४३ ॥ श्रीनारदउवाच ॥ इतिश्रुत्वाधर्मराजस्तमानीयविशेषतः ॥ विमानेकामगेस्थाप्यवैकुण्ठम्प्रकृतेःपरम्
॥४४॥ प्रेषयामाससहसागोपीचन्दनकीर्त्तिवित् ॥ एवंतेकथितंराजन्गोपीचन्दनकंयशः॥४५॥गोपीचन्दनमाहात्म्यंयःशृणोतिनरोत्तमः॥
सयातिपरमन्धामश्रीकृष्णस्यमहात्मनः ॥ ४६ ॥ इति श्रीमद्ग०सं०द्वा०कपिटङ्कनृगकूपगोपीभूमिमाहात्म्यंनामपञ्चदशोऽध्यायः ॥ १५ ॥ ॥१२२॥

॥ श्रीनारदउवाच ॥ ॥ सिद्धाश्रमस्यमाहात्म्यंशृणुराजन्महामते ॥ यस्यस्मरणमात्रेणसर्वपापैःप्रमुच्यते ॥ १ ॥ यत्स्पर्शनाद्धरेःसाक्षान्न

वियोगोभवेत्कचित् ॥ तंचसिद्धाश्रमंनामवदंतीहपुराविदः ॥ २ ॥ दर्शनाद्यस्यसालोक्यंसामीप्यंस्पर्शनात्तथा ॥ सारूप्यंस्नानतोया
तिसायुज्यंतन्निवासतः ॥ ३ ॥ तत्तीर्थस्यापिमाहात्म्यंश्रुत्वाचंद्राननामुखात् ॥ राधास्नातुंमनश्चक्रेकृष्णविक्षेपविह्वला ॥ ४ ॥ श्रीसि
द्धाश्रमयात्रायांसूर्यपर्वणिमाधवे ॥ राधागंतुंमनश्चक्रउत्थायकदलीवनात् ॥ ५ ॥ गोपीनांशतयूथेनसर्वगोपगणैःसह ॥ शतवर्षेव्यतीते
तुश्रीदाम्नःशापकारणात् ॥ ६ ॥ श्रीराधाशिबिकारूढाछत्रचामरवीजिता ॥ आनर्तेषुमहातीर्थंययौसिद्धाश्रमंसती ॥ ७ ॥ तत्रैवभगवा
न्साक्षाद्यादवैःपरिमण्डितः ॥ स्त्रीणांषोडशसाहस्रैर्यात्रार्थंचाययौनृप ॥८॥ बलिष्ठायेचगोपालाःकोटिशःशस्त्रपाणयः ॥ सिद्धाश्रमंतेजुगुपुः
सर्वतोराधिकाज्ञया ॥ ९ ॥ शतयूथास्तथागोप्योवेत्रहस्तामहाबलाः ॥ सिद्धाश्रमेचविधिवत्स्नातींराधांसिषेविरे ॥ १० ॥ द्वारकावा
सिनांतेषांस्थितानांस्नानमिच्छताम् ॥ शस्त्रवेत्रैस्ताडितानांविविशुर्भगवत्स्त्रियः ॥ ११ ॥ केयंस्नातीतिपप्रच्छुर्यस्यावैभवमद्भुतम् ॥
यद्गौरवात्रसंतीहसर्वेयादवपुङ्गवाः ॥ १२ ॥ अहोकस्यप्रियाचेयंकानामकुत्रवासिनी ॥ त्वंसर्वज्ञोहिभगवान्वदनोदेवकीसुत ॥ १३ ॥
॥ श्रीभगवानुवाच ॥ ॥ वृषभानुसुतासाक्षाद्राधेयंकीर्तिनन्दिनी ॥ व्रजेश्वरीमद्दयितागोपिकाधीश्वरीवरा ॥ १४ ॥ स्नातुंसिद्धा
श्रमंप्राप्तात्रजाद्गोपीगणैःसह ॥ यद्गौरवात्रसंत्येतेतस्यावैभवमद्भुतम् ॥ १५ ॥ श्रीकृष्णस्यवचःश्रुत्वासत्यभामाथमानिनी ॥ शनैःप्राह
सपत्नीनांरूपयौवनगर्विता ॥ १६॥ किंनुराधारूपवतीनाहंरूपवतीकिमु ॥ बहुभिर्याचितापूर्वंरूपौदार्यगुणार्चिता ॥१७॥ मद्रूपकारणात्स
ख्यःशतधन्वामृतोभवत् ॥ अक्रूरःकृतवर्माचपुरात्तौद्वौपलायितौ॥१८॥दिनेदिनेस्वर्णभारानष्टौससृजतिस्वतः॥ दुर्भिक्षमार्यरिष्टानिसर्पादि
व्याधयोऽशुभाः॥१९॥नसंतिमायिनस्तत्रयत्रास्तेभ्यर्चितोमणिः ॥ मत्पित्रापारिबर्हेपिदत्तःसाक्षात्स्यमंतकः ॥२०॥ तेनजातंमद्गृहेपिसर्वं
वैभवमद्भुतम् ॥ प्रेम्णापरेणश्रीकृष्णगरुडोपरिगामिनी ॥ २१ ॥ भौमासुरमहायुद्धंदृष्टंप्राग्ज्योतिषंपुरम् ॥ ममापिकृपयायूयंतत्पुराच्चसमा
गताः ॥ २२ ॥ प्राप्ताःश्रीकृष्णपत्नीत्वंसमाएवनसंशयः ॥ मद्गौरवाच्चशक्रायछत्रंदत्तमनेनवै ॥ २३ ॥ कुंडलेदेवमात्रेचदत्तेवैमत्प्रियेच्छ
या ॥ ऐरावतभवानागाभौमासुरसमृद्धयः॥२४॥मदिच्छयासमानीताःश्रीकृष्णेनमहात्मना॥मत्कारणान्महावैरंशक्रेपिकृतवान्हरिः॥२५॥

मद्वारेवर्ततेनित्यंवृक्षेंद्रःपारिजातकः ॥ पातिव्रत्येनैवमयाश्रीकृष्णोयंवशीकृतः ॥ २६ ॥ सर्वोपस्करसंयुक्तोनारदायसमर्पितः ॥
मत्समानंनकस्यास्तुगौरवंवैभवंतथा ॥ २७ ॥ रूपौदार्यंनकस्यास्तुराधायाःकिमुवर्णनम् ॥ यद्रूपोपरिचैद्याद्याअनेनयुयुधुर्युधि ॥ २८ ॥
॥ हेसुभ्रूरुक्मिणीसात्वंकथंरूपवतीनहि ॥ सागोपकन्यकासख्योयूयंवैराजकन्यकाः ॥ धन्यामान्याश्चसर्वावैयूयंमानवतीवराः ॥ २९ ॥
एवंतुसत्यभामायांवदंत्यांमैथिलेश्वर ॥ भूत्वामानयुताःसर्वारुक्मिण्याद्याःस्त्रियोवराः ॥ ३० ॥ कुलकौशलशीलार्थरूपयौवनगर्विताः ॥
श्रीकृष्णंमानदंप्राहुरष्टपट्टमहास्त्रियः ॥ ३१ ॥ ॥ राज्ञ्यऊचुः ॥ ॥ श्रुतंतवमुखात्पूर्वंराधारूपंपरंस्मृतम् ॥ यस्यांरक्तःसदात्वंवैत्वयि
रक्ताचयासदा ॥३२॥ तांराधांद्रष्टुमिच्छामस्त्वत्प्रियांव्रजवासिनीम् ॥ त्वद्वियोगेनसंखिन्नांस्नातुंचात्रसमागताम् ॥३३॥ ॥ नारदउवाच ॥
॥ तथास्तुचोक्त्वाश्रीकृष्णःपट्टस्त्रीपरिवेष्टितः ॥ षोडशस्त्रीसहस्राढ्योद्रष्टुंराधांजगामह ॥ ३४ ॥ श्रीहेमशिबिरेरम्येपताकाध्वजमं
डिते ॥ चंद्रमंडलशोभाढ्यवितानततनितेशुभे ॥ ३५ ॥ मुक्ताजवनिकायत्रवस्त्रैरास्तरणंशुभम् ॥ मालतीमकरंदाढ्यसर्वतोगंधिसंकुलम् ॥
॥ ३६ ॥ तेनभृंगावलीचक्रेकलंकोलाहलंपरम् ॥ तत्रराधापट्टराज्ञीश्रीकृष्णहृतमानसा ॥ ३७ ॥ हंसाभैर्व्यजनैर्दिव्यैर्वीज्यमानासखीज
नैः ॥ छत्रदोलाधरैस्तत्रव्रजद्भिस्तामितस्ततः ॥ ३८ ॥ बालार्ककुंडलधराविद्युद्दाममनोहरा ॥ कोटिचंद्रप्रतीकाशातन्वीकोमलविग्रहा
॥ ३९ ॥ अंगुल्यग्रैःशोभनैःस्वैःपुष्पभूमिंमनोहराम् ॥ शनैःशनैःपादपद्मंधारयंत्यतिकोमलम् ॥ ४० ॥ दूरात्तांराधिकांप्रेक्ष्यकृष्णपत्न्यः
सहस्रशः ॥ जग्मुर्मूर्च्छांमहाराजतद्रूपेणातिमोहिताः ॥ ४१ ॥ तत्तेजसाहतरुचःसूर्यात्ताराराणायथा ॥ गतरूपाभिमानास्ताऊचुःसर्वाः
परस्परम् ॥ ४२ ॥ अहोएतादृशंरूपंत्रिलोक्यांनहिचाद्भुतम् ॥ श्रुतंयथातथादृष्टमद्वितीयंमनोहरम् ॥ ४३ ॥ एवंवदंत्यस्तांप्राप्ताःश्री
कृष्णस्यपुरःसराः ॥ गोपीनांराजपुत्रीणांनेत्राणिपरिरेभिरे ॥ ४४ ॥ ॥ इतिश्रीमद्गर्गाचार्यसंहितायां श्रीद्वारकाखण्डेनारदबहुला
श्वसंवादे सिद्धाश्रममाहात्म्येराधारूपदर्शनंनामषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ श्रीनारदउवाच ॥ ॥ श्रीकृष्णमागतंवी ॥१२३॥
क्ष्यपट्टराज्ञीसमन्वितम् ॥ तदाजयजयारावं[illegible] ॥ १ ॥ [illegible]परिक्रम्यकृतांजलिः ॥ पद्माभाभ्यांतुनेत्राभ्या

मानंदाश्रूणिमुंचती ॥२॥ स्यमंतकखचित्पादांचिंतामणिखचित्तटम् ॥ पद्मरागलसन्मध्यंचंद्रमंडलवर्तुलम् ॥३॥ कौस्तुभैःप्रखचित्पृष्ठंकुंभमं
डलमंडितम् ॥ पारिजातकपुष्पाढ्यंपीयूषस्राविछत्रमत् ॥ ४ ॥ दत्त्वासिंहासनंतस्मैप्राहप्रहसितानना ॥ अद्यमेसफलंजन्मअद्यमेसफलंत
पः ॥ ५ ॥ अद्यमेसफलोधर्मोहरेत्वय्यागतेसति ॥ धन्यंसिद्धाश्रमस्नानंसफलीभूतमद्भुतम् ॥ मयापिनकृताभक्तिस्तवभक्तसहायिनः॥६॥
॥ बहवश्चसहायान्मेत्वयादेवहताभुवि ॥ कंसोपिलोकविजयीयेनभीतोबभूवह ॥ ७ ॥ समारितोमद्वचनाच्छंखचूडस्त्वयाहरे ॥ मत्प्रेम्णा
पित्वयादेववैभवंदर्शितंव्रजे ॥ ८ ॥ शक्रस्यमानभंगोपिकृतोदेवत्वयाबलात् ॥ मत्कारणाद्व्रजंरक्षन्धृत्वागोवर्द्धनाचलम् ॥ ९ ॥ यथेच्छा
लिंगितोरासेगोपीभिस्त्वंवशीकृतः ॥ इदंतेचरितंदेवनरलोकविडंबनम् ॥ १० ॥ ॥ श्रीनारदउवाच ॥ ॥ एवंवदंतीसाराधात्वरंचंद्रा
ननाज्ञया ॥ सादरेणहरेःपत्नीर्वीक्ष्यतागौरवंददौ ॥११॥ भैष्मींजांबवतींभामांसत्यांभद्रांचलक्ष्मणाम् ॥ कालिंदींमित्रविंदांचमिलित्वासाप
रस्परम् ॥ १२ ॥ षोडशस्त्रीसहस्रंचरोहिणीमुखमेवच ॥ प्रेमानंदमयीदोर्भ्यांपरिरेभेमुदान्विता ॥ १३ ॥ ॥ श्रीराधोवाच ॥ ॥ चंद्रोय
थैकोबहवश्चकोराःसूर्योयथैकोबहवोदृशःस्युः ॥ श्रीकृष्णचन्द्रोभगवांस्तथैकोभक्ताभगिन्योबहवोवयंच ॥१४॥ पद्मप्रभावंमधुपोयथाहि
रत्नप्रभावंकिलतत्परीक्षकः ॥ विद्याप्रभावंचयथाहिविद्वान्काव्यप्रभावंचयथाकवींद्रः ॥ १५ ॥ यथासहस्रेषुजनेषुसत्सुरसप्रभावंरसिक
स्तथाहि ॥ जानातितत्त्वेननरेंद्रपुत्र्यःकृष्णप्रभावंसुविकृष्णभक्तः ॥ १६ ॥ ॥ नारदउवाच ॥ ॥ राधावाक्यंतदाश्रुत्वारुक्मिणीभीष्मनं
दिनी ॥ सपत्नीसहिताप्राहराधांकमललोचनाम् ॥ १७ ॥ ॥ रुक्मिण्युवाच ॥ ॥ धन्यासिराधेवृषभानुपुत्रित्वद्भक्तिभावेनवशीकृतोयम् ॥
वदत्यलंयस्यकथांत्रिलोकीसएववार्तांवदतित्वदीयाम् ॥१८॥ श्रुतंयथातेहरिभावलक्षणंतथाहिदृष्टंनहिचित्रमेवहि ॥ गच्छाशुचास्मच्छिबि
राणियत्रहित्वांनेतुमत्रागतवत्यआदृताः ॥ १९ ॥ ॥ नारदउवाच ॥ ॥ एवमुक्त्वाभीष्मसुताराधांकीर्तिसुतांतदा ॥ समानीयस्वशिबि
रेसादरेणमहात्मना ॥ २० ॥ शिबिरेसर्वतोभद्रेपद्मकिंजलकवासिते ॥ हैमेशिरीषमृदुलेपर्य्यंकेसोपबर्हणे ॥ २१ ॥ सुखंनिवासयामासवा
सःस्रङ्मंडनादिभिः ॥ संपूज्यविधिवद्रात्रौसपत्नीसहितासती ॥ २२ ॥ गोपीनांशतयूथंचसंपूज्यचपृथक्पृथक् ॥ वार्तालापान्बहुविधा

न्कृत्वाकृष्णप्रियास्ततः ॥ २३ ॥ स्वापयित्वाथतांजग्मुःस्वंस्वंवैशिबिरंमुदा ॥ २४ ॥ कृष्णपार्श्वंगताभैष्मीदृष्ट्वाजाग्रदुपस्थितम् ॥ कथंन
शेषेभोस्वामिन्निति कृष्णमुवाचह ॥ २५ ॥ रुक्मिणीवचनंश्रुत्वाभगवान्वृजिनार्दनः ॥ तूष्णींभूत्वाक्षणंराजन्प्राहप्रहसिताननः ॥ २६ ॥
॥ श्रीभगवानुवाच ॥ प्रत्युद्गमप्रस्रवणैराश्वासेनव्रजेश्वरी ॥ अर्चिताहित्वयासुभ्रूःप्रसन्नासाभवत्परम्॥२७॥साचनित्यंहिपिबतीशयनादौपयः
शुभम् ॥ पयःपानंतुनकृतमद्यसुभ्रूस्तयाकिल॥ २८ ॥ तेननिद्रानयनयोर्नजातास्यामहामते॥तस्मान्ममापिप्रस्वापोनजातोभीष्मकन्यके
॥२९॥ ॥ नारदउवाच॥ ॥इतिश्रुत्वापरंभैष्मीसपत्नीभिःसमन्विता ॥ नीत्वादुग्धंतत्समीपंप्रययौपरमादरात् ॥३०॥ उष्णंदुग्धंसितायुक्तं
कचोलेहैमनेकृतम्॥ अपाययत्परंप्रीत्याराधांभीष्मकनंदिनी ॥ ३१ ॥ एवमभ्यर्च्यविधिवद्दत्त्वातांबूलवीटकम् ॥ सत्यभामादिभिःशश्वत्स
पत्नीभिःसमन्विता ॥ ३२ ॥ आगत्यकृष्णसामीप्यंवदंतीस्वकृतंशुभम् ॥ भेजेश्रीरुक्मिणीसाक्षाच्छ्रीकृष्णपदपंकजम्॥३३॥ संलालयंती
सततंकोमलैःकरपल्लवैः ॥ कृष्णपादतलोच्छालान्वीक्ष्यसाविस्मिताभवत् ॥ ३४ ॥ उच्छालकाःकथंजातास्तवपादतलेप्रभो ॥ अद्यैव
भूताभगवन्नवेद्म्यत्रहिकारणम् ॥ ३५ ॥ षोडशस्त्रीसहस्राणांशृण्वंतीनांहरिःस्वयम्॥राधाभक्तिप्रकाशार्थंप्रसन्नःप्राहरुक्मिणीम्॥३६॥ श्रीभग
वानुवाच ॥ श्रीराधिकायाहृदयारविंदेपदारविंदंहिविराजतेमे ॥ अहर्निशंप्रश्रयपाशबद्धंलवंलवार्द्धंनचलत्यतीव ॥३७॥ अद्योष्णदुग्धप्रति
पानतोंघ्रावुच्छालकास्तेममप्रोच्छलंति ॥ मंदोष्णमेवंनहिदत्तमस्यैयुष्माभिरुष्णंतुपयःप्रदत्तम्॥३८॥ ॥ श्रीनारदउवाच ॥ ॥ श्रीकृष्णस्य
वचःश्रुत्वारुक्मिण्याद्याःस्त्रियोवराः ॥ प्रेम्णापादंविमृज्याथविसिष्मुःसर्वतोनृप॥३९॥श्रीराधायाःपराप्रीतिर्माधवेमधुसूदने ॥ तत्समानान
चैकैषाअद्वितीयामहीतले॥४०॥ इति श्रीमद्गर्गा०सं०श्रीद्वा०ना०सिद्धाश्रमे श्रीराधाकृष्णसमागमोराधाप्रेमप्रकाशोनामसप्तदशो०॥१७॥
॥ श्रीनारदउवाच ॥ श्रीराधायांपरांप्रीतिंज्ञात्वागोपीगणेषुच ॥ ऊचुर्हरिंराजपुत्र्यस्तद्रासप्रेक्षणोत्सुकाः ॥ १ ॥ ॥ पट्टराज्ञ्यऊचुः ॥
धन्यागोप्यस्तुतेभक्त्याप्रेमलक्षणसंयुताः ॥ याःप्राप्तारासरंगेवैतासांकिंवर्ण्यतेतपः ॥ २ ॥ वृन्दावनेकृतोरासोविधिनायेनमाधव ॥ तंवि
धिंद्रष्टुमिच्छामोयदित्वंमन्यसेप्रभो ॥ ३ ॥ [illegible] देवेशरासोयोग्योभवेदिह ॥ ४ ॥ पूर्णी

कुरुजगन्नाथअस्माकंतुमनोरथम् ॥ कृतोमनोरथोन्योपिरासक्रीडांविनाहरे ॥ ५ ॥ इतितासांवचःश्रुत्वाभगवान्प्रहसन्निव ॥ प्राहताःप्रेमसं
युक्तोगीर्भिःसंमोहयन्निव ॥ ६ ॥ ॥ श्रीभगवानुवाच ॥ ॥ रासेश्वर्यास्तुराधायामनश्चेद्रंतुमंगनाः ॥ तदारासोभवेदत्रभवतीभिस्तुपृच्छ्य
ताम् ॥ ७ ॥ इतिश्रुत्वावचस्तस्यरुक्मिण्याद्यानृपात्मजाः ॥ राधामेत्यपरप्रेम्णाप्राहुःप्रहसिताननाः ॥ ८ ॥ ॥ श्रीराज्ञ्यऊचुः ॥ ॥
रंभोरुचंद्रवदनेव्रजसुंदरीशेरासेश्वरिप्रियतमेसखिशीलरूपे ॥ राधेसुकीर्तिकुलकीर्तिकरेशुभांगेत्वांप्रष्टुमागतवतीःसकलावयंस्म ॥ ९ ॥
रासेश्वरोपिकिलचात्ररसप्रदायीरासेश्वरीत्वमपिगोपवरांगनाश्च ॥ एवंवयंस्मइतिसर्वविधौरसार्थेरासंकुरुप्रियतमेचतथाप्रियंनः ॥ १० ॥
॥ श्रीराधोवाच ॥ ॥ रासेश्वरस्यपरमस्यसतांकृपालोरंतुंमनोयदिभवेत्तुतदात्ररासः ॥ शुश्रूषयापरमयापरयाचभक्त्यासंपूज्यतंकिलवशी
कुरुतप्रियेष्टाः ॥११॥ ॥ श्रीनारदउवाच ॥ ॥ राधायावचनंश्रुत्वाश्रीकृष्णोक्तंतथावदन् ॥ तथास्तुचोक्त्वासाराधाप्रसन्नाभून्महामनाः ॥१२॥
माधवेपूर्णिमायांतुपुण्येसिद्धाश्रमेशुभे ॥ प्रदोषकालेचंद्राभेरासारंभोबभूवह ॥ १३ ॥ रासेश्वरस्यरासार्थेरासेश्वर्यासमन्वितः ॥ रराजरासेर
सिकोयथारत्यारतीश्वरः ॥१४॥ यावत्योगोपिकाःसर्वायावत्योराजकन्यकाः ॥ तावद्रूपधरोरेजेएकःकृष्णोद्वयोर्द्वयोः ॥१५॥ तालवेणुमृदं
गानांकलकंठैःसखीजनैः ॥ कलनूपुरकांचीनांमिश्रशब्दोमहानभूत् ॥ १६ ॥ कोटिकंदर्पलावण्यःस्रग्वीकुंडलमंडितः ॥ पीतांबरधरोराजन्
किरीटकटकांगदः ॥१७॥ रासेश्वर्यासमंगायन्रासेरासेश्वरःस्वयम् ॥ स्त्रीगणैःसहितोराजंश्चंद्रस्तारागणैर्यथा ॥ १८ ॥ एवंसर्वानिशाराजन्क्ष
णवद्रासमंडले ॥ व्यतीताभून्महाराजमहानंदमयीशुभा ॥ १९ ॥ श्रीरासमंडलंदृष्ट्वारुक्मिण्याद्यास्त्रियोवराः ॥ जग्मुस्ताःपरमानंदंसर्वाः
पूर्णमनोरथाः ॥ २० ॥ परिपूर्णतमंसाक्षाच्छ्रीकृष्णंपुरुषोत्तमम् ॥ रासांतेरुक्मिणीमुख्याःप्राहुःप्रेमपरायणाः ॥ २१ ॥ ॥ राज्ञ्यऊचुः ॥
॥ ॥ दृष्ट्वात्वद्रूपमाधुर्यंरासरंगेमनोहरे ॥ गतंमनोनःस्वानंदंब्रह्मानंदंयथामुनिः ॥ २२ ॥ एतादृशोपिरासोन्योनभूतोनभविष्यति ॥ शत
यूथस्तुगोपीनामत्रमाधववर्तते ॥ २३ ॥ पत्न्यःषोडशसाहस्रंसखीभिःसहितावयम् ॥ सखीकोट्यियुताश्चात्रअष्टपट्टमहास्त्रियः ॥ २४ ॥
वृन्दावनेपिनैतादृक्भूतोवामाधवेश्वर ॥ ॥ नारदउवाच ॥ ॥ एवंकृताभिमानानांराज्ञीनांप्रहसन्हरिः ॥ प्राहेदंपृच्छ्यतांराधाभवती

गर्गसं० भिःपरस्परम् ॥ २५ ॥ सत्यभामादिकाःसर्वाःपृच्छंतितांमनोहराम् ॥ किंचिद्धसंतीमनसिप्राहराधापरंवचः ॥ २६ ॥ ॥ श्रीराधोवाच ॥ द्वा० खं०
॥ ॥ ननुरासःपरंचात्रबहुस्त्रीगणसंकुलः ॥ पूर्वरासससमोनस्याद्यस्तुवृंदावनेऽभवत् ॥ २७ ॥ क्व चात्रवृंदारण्यंतद्दिव्यद्रुमलताकुलम् ॥ अ० १९
॥१२५॥ प्रेमभारानतलतंमधुमत्तमधुव्रतम् ॥ २८ ॥ पुष्पव्यूहान्वहंतीयायथोष्णिङ्मुद्रिताशुभा ॥ हंसपद्मसमाकीर्णाक्वचात्रयमुनानदी ॥ २९ ॥
माधव्यस्तुलताःक्वात्रपुष्पभारनताःपराः ॥ क्वपक्षिणःप्रेमपरागायंतिमधुरस्वनम् ॥ ३० ॥ लोलालिपुंजाःकुञ्जाःक्वनिकुंजादिव्यमंदिराः॥
क्ववायुःशीतलोमंदोवातिपद्मरजोहरन् ॥ ३१ ॥ शृंगैर्मनोहरैरुच्चैर्गिरिर्गोवर्द्धनोचलः ॥ सर्वत्रफलपुष्पाढ्योदरीभिःक्वकरीवसः ॥ ३२ ॥
कालिंदीपुलिनेरम्येवायुनाचितसैकते ॥ वंशीवेत्रधरोमल्लपरिबर्हविराजितः ॥ ३३ ॥ क्वचात्रकृष्णशृंगारोवनमालाविभूषितः ॥ श्यामानाम-
लकानांचवक्राणांगंधवारिणाम् ॥ ॥ ३४ ॥ चलितंहलितंक्वात्रकुंडलाभ्यांपरस्परम् ॥ श्रीमुखेकृष्णचंद्रस्यगंडस्थलमनोहरे ॥ ३५ ॥ पत्रावलींगं-
धलोभाद्भ्रमद्भृंगावलीयुते ॥ क्वप्रेम्णादर्शनंचैवस्पर्शनंहर्षणंतथा ॥ ३६ ॥ कामेषुतिग्मकोणैश्चनेत्रैःक्वापांगजोरसः ॥ आकर्षणंक्वहस्ताभ्यांह-
स्ताद्धस्तविसर्जनम् ॥ ३७ ॥ विलीनत्वंनिकुंजेषुसंमुखेनतुदर्शनम् ॥ ग्रहणंक्वात्रचीराणांहरणंवेणुवेत्रयोः ॥ ३८ ॥ क्वप्रेम्णाचात्रबाहु-
भ्यांकर्षणंचपरस्परम् ॥ पुनःपुनस्तद्ग्रहणंभुजेचंदनचर्चिते ॥ ३९ ॥ यत्रयत्रचयालीलातत्रतत्रैवशोभते ॥ यत्रवृंदावनंनास्तितत्रमेनमनः-
सुखम् ॥ ४० ॥ ॥ नारदउवाच ॥ ॥ राधावाक्यंततःश्रुत्वासर्वाःपट्टमहास्त्रियः ॥ जहुर्मानंस्वरासस्यविस्मिताहर्षिताश्चताः ॥ ४१ ॥
एवंसिद्धाश्रमेरासंकृत्वाश्रीराधिकेश्वरः ॥ ॥ नीत्वागोपीगणान्सर्वान्राधयासहितोहरिः ॥ ४२ ॥ सभार्योभगवान्साक्षाद्द्वारकांप्रविवेशह ॥
कारयामासराधायैमंदिराणिपराणिच ॥ ४३ ॥ निवासयित्वासुसुखंसर्वास्ताश्चव्रजौकसः ॥ इत्थंसिद्धाश्रमकथामयातेकथितानृप ॥ ४४ ॥
सर्वपापहरापुण्यासर्वेषांचैवमोक्षदा ॥ ४५ ॥ ॥ इतिश्रीमद्ग० श्रीद्वारकाखंडे० सिद्धाश्रमेरासोत्सवोनामाष्टादशोऽध्यायः ॥ १८ ॥
॥ श्रीनारदउवाच ॥ द्वारावतीमंडलन्तुशतयोजनविस्ततम् ॥ तस्यप्रदक्षिणासर्वायोजनानाञ्चतुःशतम् ॥ १ ॥ तन्मध्येकृष्णरचि- ॥१२५॥
तंदुर्गंद्वादशयोजनम् ॥ द्वितीयंचबहिर्दुर्गंनवत्याचतदुत्तरैः ॥ क्रोशैःसंघट्टितंराजन्श्रीकृष्णेनमहात्मना ॥ २ ॥ तृतीयंचतथादुर्गंद्व्यूनैश्चद्वि-

शतैर्नृप ॥ क्रोशैः संघट्टितं राजत्रत्नप्रासादसंयुतम् ॥३॥ तेषामन्तरदुर्गोपि श्रीकृष्णस्य महात्मनः॥ मंदिराणि विचित्राणि नवलक्षाणि संति हि
॥ ४ ॥ तत्र राधामन्दिरस्य द्वारे लीलासरोवरम् ॥ सर्वतीर्थोत्तमं राजन्गोलोकाच्च समागतम् ॥ ५ ॥ यस्मिन्स्नात्वा नरः पापी व्रती भूत्वा स
माहितः ॥ अष्टम्यां हेमदानं च दत्त्वा नत्वा विधानतः ॥ ६ ॥ कोटिजन्मकृतैः पापैर्मुच्यते नात्र संशयः ॥ प्राणांते तं नरं नेतुं गोलोकाच्च महार
थः ॥ ७ ॥ सहस्रादित्यसंकाश आगच्छति न संशयः ॥ दशकन्दर्पलावण्यो रत्नकुण्डलमण्डितः ॥ ८ ॥ स्रग्वी पीताम्बरः श्यामः सहस्रार्क
स्फुरद्द्युतिः ॥ सहर्षः पार्षदैर्युक्तश्चामरान्दोलराजितः ॥ ९ ॥ जयध्वनिसमायुक्तो वेणुदुन्दुभिनादितः ॥ भूत्वैवं रथमास्थाय गोलोकं यात्य
संशयम् ॥ १० ॥ अथ तीर्थानि चान्यानि शृणु राजन्महामते ॥ शतोत्तराणि तत्रैव सहस्राणि च षोडश ॥ ११ ॥ अष्टभिः सहितान्येव पत्नी
नां भवनानि च ॥ तानि प्रदक्षिणीकृत्य नत्वा नत्वा पृथक्पृथक् ॥१२॥ ज्ञानतीर्थं समाप्लुत्य स्पृशेद्यः पारिजातकम्॥ तस्य ज्ञानं च वैराग्यं भक्तिर्भ
वति तत्क्षणम् ॥ १३ ॥ श्रीकृष्णो हृदये तस्य वसेद्धृष्टमनाः सदा ॥ समृद्धिसिद्धयः सर्वास्तं भजंति निसर्गतः ॥१४॥ समुक्तः सकृतार्थः स्याद्यः
पश्येद्धरिमंदिरम् ॥ तत्समो वैष्णवो नास्ति तीर्थं च तत्समं न हि ॥ १५ ॥ पंचयोजनविस्तीर्णाद्भगवन्मंदिरात्ततः ॥ धनुःशते कृष्णकुंडः कृष्ण
तेजःसमुद्भवः ॥ १६ ॥ यं स्नात्वा कुष्ठतो मुक्तः सांबो जांबवतीसुतः ॥ तस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥ १७ ॥ तस्माद्दष्टादशपदे पूर्व
स्यां दिशि मैथिल ॥ सर्वतीर्थोत्तमं पुण्यं बलभद्रसरो महत् ॥ १८ ॥ पृथ्वीप्रदक्षिणां कृत्वा बलदेवो महाबलः ॥ यज्ञं यत्र विनिर्माय रेवत्या विर
राज ह ॥ १९ ॥ तत्र स्नात्वा नरः सद्यो मुच्यते सर्वपातकात् ॥ पृथ्वीप्रदक्षिणायाश्च फलं तस्य न दुर्लभम् ॥ २० ॥ भगवन्मंदिराद्राजन्सहस्र
धनुरग्रतः ॥ दक्षिणस्यां महातीर्थं गणनाथस्य वर्तते ॥ २१ ॥ अनिर्देशे गते राजन्प्रद्युम्ने स्वसुते तदा॥ गणेशपूजनं यत्र कारयामास रुक्मिणी ॥
॥ २२ ॥ यत्र स्नात्वा हेमदानं यो ददाति नृपेश्वर ॥ पुत्रप्राप्तिर्भवेत्तस्य वंशस्तस्य विवर्धते ॥ २३ ॥ भगवन्मंदिराद्राजन्दिग्विभागे च पश्चिमे ॥
धनुषि द्विशते चास्ते दानतीर्थं परं शुभम् ॥ २४ ॥ तत्र श्रीकृष्णचंद्रस्य नित्यं दानं करोति यः ॥ तत्र स्नात्वा नरो राजन्द्विपलं कांचनं तथा ॥२५॥
चतुर्गुणं तु रजतं पट्टांबरशतं तथा ॥ तथा सहस्रमौल्यानि नवरत्नानि यानि च ॥ २६ ॥ यो ददाति नरश्रेष्ठस्तस्य पुण्यफलं शृणु ॥ अश्वमेधसह

स्नाणिराजसूयशतानिच ॥२७॥दानतीर्थस्यपुण्यस्यकलांनार्हतिषोडशीम् ॥ बंद्रिकाश्रमयात्रायांयत्फलंलभतेनरः ॥ २८ ॥ तस्माच्छतगुणंपुण्यंदानतीर्थेपरात्मनः ॥ सैंधवारण्ययात्रायांमेषस्थेचदिवाकरे ॥ २९ ॥ उत्पलावर्त्तयात्रायांवृषस्थेभास्करेसति ॥ स्नानंदानंलक्षगुणंभवतीहनसंशयः ॥ ३० ॥ तस्मात्कोटिगुणंपुण्यंदानतीर्थेविदेहराट् ॥ मासमेकंचयःस्नानंदानतीर्थेकरोतिहि ॥ ३१ ॥ तस्यजातंचयत्पुण्यंचित्रगुप्तोनवेत्तितत् ॥ तस्यतीर्थस्यमाहात्म्यंवक्तुंनालंचतुर्मुखः ॥ ३२ ॥ सर्वेषांचैवदानानामश्वदानंपरंस्मृतम् ॥ अश्वदानाद्गजस्यापिगजदानाद्रथस्यच ॥ ३३ ॥ रथदानात्परंराजन्भूमिदानंविशिष्यते ॥ भूमिदानादन्नदानंमहादानंप्रकथ्यते ॥ ३४ ॥ अन्नदानसमंदानंनभूतंनभविष्यति ॥ देवर्षिपितृभूतानांतृप्तिरन्नेनजायते ॥ ३५ ॥ दानतीर्थेह्यन्नदानंयःकरोतिमहामनाः ॥ ऋणत्रयंविमुच्याथयातिविष्णोःपरंपदम् ॥ ३६ ॥ दशैवमातृकेपक्षेराजेंद्रदशपैतृके ॥ प्रियायादशपक्षेतुपुरुषानुद्धरेन्नरः ॥ ३७ ॥ चतुर्भुजादिव्यरूपानागारिकृतकेतनाः ॥ स्रग्विणःपीतवस्त्रास्तेप्रयांतिहरिमंदिरम् ॥ ३८ ॥ भगवन्मंदिराद्राजन्नुत्तरस्यांदिशिश्रुतम् ॥ क्रोशार्द्धंनृपशार्दूलमायातीर्थंमनोहरम् ॥ ३९ ॥ विराजतेयत्रनित्यंदुर्गादुर्गार्तिनाशिनी ॥ सिंहारूढाभद्रकालीचंडमुंडविनाशिनी ॥ ४० ॥ स्यमंतकंसमाहर्तुमृक्षराजबिलंगते ॥ पुत्रेचदेवकीदेवींपूजयामाससत्फलैः ॥ ४१ ॥ तदाजगामप्रियया:समणिर्भगवान्हरिः ॥ तद्दिलात्तत्प्रसिद्धंस्यान्मायातीर्थंफलप्रदम् ॥ ॥ ४२ ॥ मायातीर्थेचयःस्नात्वामायांसंपूज्यमानवः ॥ सर्वांमनोरथप्राप्तिंप्राप्नुयान्नात्रसंशयः ॥४३॥ इति श्रीमद्गर्गा०सं०श्रीद्वा०नारद०सं०प्रथमदुर्गेलीलासरोवरहरिमंदिरज्ञानतीर्थकृष्णकुंडबलभद्रसरोगणेशतीर्थदानस्थलमायातीर्थमाहात्म्यंनामैकोनविंशोऽध्यायः ॥१९॥

॥ श्रीनारदउवाच ॥ ॥ द्वितीयस्यापिदुर्गस्यपूर्वद्वारेविदेहराट् ॥ इन्द्रतीर्थंमहापुण्यंकामदंसिद्धिदायकम् ॥ १ ॥ तत्रस्नात्वानरोराजन्निन्द्रलोकंप्रयातिहि ॥ इहैवचन्द्रसादृश्यंवैभवंप्राप्यतेनरैः ॥ २ ॥ तदावैदक्षिणेद्वारेसूर्यकुण्डोभिधीयते ॥ यत्रसत्राजितेनापिपूजितोभूत्स्यमन्तकः ॥ ३ ॥ तत्रस्नात्वापद्मरागंयोददातिनृपेश्वर ॥ सूर्यप्रभविमानेनसूर्यलोकंप्रयातिहि ॥ ४ ॥ तथावैपश्चिमेद्वारेब्रह्मतीर्थंविशिष्यते ॥ तत्रस्नात्वानरोराजन्स्वर्णपात्रेणपायसम् ॥ ५ ॥ योददातिमहाबुद्धिस्तस्यपुण्यफलंश्रृणु ॥ ब्रह्महापितृहागोघ्नोमातृहा

चायहाघवान् ॥ ६ ॥ इन्द्रलोकेपदंधृत्वाबिभ्रद्ब्रह्ममयंवपुः ॥ चन्द्राभेनविमानेनयातिब्रह्मपदंसच ॥ ७ ॥ तथावैउत्तरेद्वारिक्षेत्रंस्यात्रैलल्लो
हितम् ॥ यत्रसाक्षान्महादेवोराजतेनीललोहितः ॥८॥ देवतामुनयःसर्वेतथासप्तर्षयःपरे ॥ वसंतियत्रवैदेहतथासर्वेमरुद्गणाः ॥ ९॥ नीलल्लो
हितलिंगंतुयत्रसंपूज्ययत्नतः ॥ ऐश्वर्यमतुलंलेभेरावणोलोकरावणः ॥१०॥ कैलासस्यापियात्रायांयत्फलंलभतेनृप ॥ तस्माच्छतगुणंपुण्यं
नीलल्लोहितदर्शनात् ॥११॥ नीलल्लोहितकुण्डेवैस्नातोयस्त्रिदिनंनरः ॥ सयातिशिवलोकाख्यंपापायुतयुतोपिहि ॥ १२ ॥ सप्तसामुद्रकन्ना
मतीर्थंयत्रविराजते ॥ तत्रस्नात्वानरःपापीपापसंघैःप्रमुच्यते ॥ १३ ॥ सप्तानाञ्चसमुद्राणांस्नानपुण्यंलभेत्त्वरम् ॥ विष्णुर्विरिंचोगिरिश
इन्द्रोवायुर्यमोरविः ॥ १४ ॥ पर्जन्योधनदःसोमःक्षितिरग्निरपांपतिः ॥ तत्पार्श्वेषुसदाह्येतेतिष्ठन्तिमनुजेश्वर ॥ १५ ॥ सप्तकोटीनिती
र्थानिब्रह्माण्डेयानिकानिच ॥ सर्वाणितत्रतिष्ठन्तिसप्तसामुद्रकेनृप ॥ १६ ॥ तत्रस्नात्वानरःपश्चात्कृत्वासर्वपरिक्रमम् ॥ प्राप्नोतिद्वार
कायाश्चयात्रायाःसकलंफलम् ॥ १७ ॥ सप्तसामुद्रकमृतेनयात्राफलदास्मृता ॥ सप्तसामुद्रकंतीर्थंविष्णुरूपंविदुःसुराः ॥ १८ ॥ ॥इति
श्रीमद्गर्गाचार्यसंहितायां श्रीद्वारकाखण्डेनारदबहुलाश्वसंवादेद्वितीयदुर्गेइन्द्रतीर्थसूर्यकुण्डब्रह्मतीर्थनैलल्लोहितसप्तसामुद्रकमाहात्म्यंनामविं
शतितमोऽध्यायः ॥ २० ॥ ॥ श्रीनारदउवाच ॥ ॥ तृतीयस्यापिदुर्गस्यपूर्वद्वारेमहाबलः ॥ रक्षत्यहर्निशंराजन्हनूमानंजनीसुतः॥१॥
तंप्रेक्ष्यभगवद्भक्तंहनूमंतंमहाबलम् ॥ जायतेभगवद्भक्तोहनूमानिवमानवः ॥ २ ॥ तथावैदक्षिणद्वारंचक्रंनामसुदर्शनम् ॥ रक्षत्यहर्निशं
राजञ्छ्रीकृष्णगतमानसम् ॥ ३ ॥ तस्यदर्शनमात्रेणभवेद्भक्तोहरेःपरः ॥ भक्तस्यापिसदारक्षांकरोतिहिसुदर्शनम् ॥ ४ ॥ तथावैपश्चि
मंद्वारंजांबवानृक्षराड्बली ॥ रक्षत्यहर्निशंराजन्भगवद्भक्तिसंयुतः ॥ ५ ॥ तंप्रेक्ष्यभगवद्भक्तंजांबवंतंमहाबलम् ॥ चिरजीवीहरेर्भक्तोभवती
हचमानवः ॥ ६ ॥ तथावैचोत्तरंद्वारंविष्वक्सेनोमहाबलः ॥ रक्षत्यहर्निशंराजञ्छ्रीकृष्णहृदयोमहान् ॥ ७ ॥ तस्यदर्शनमात्रेणनरो
यातिकृतार्थताम् ॥ शृणुराजन्बहिर्दुर्गात्तीर्थंपिंडारकंस्मृतम् ॥ ८ ॥ पिंडारकस्यमाहात्म्यंशृणुताद्राजसत्तम ॥ यस्यस्मरणमात्रेणमहा
पापात्प्रमुच्यते ॥ ९ ॥ अर्थसिद्धिचोरिवद्वारैरैवताद्रिसमुद्रयोः ॥ मध्येपिंडारककक्षेत्रंतीर्थानांतीर्थमुत्तमम् ॥ १० ॥ क्रतुराजंराजसूयंय

२२

दुराजोमहाबलः ॥ चकारयत्रैवैदेहपरिपूर्णतमाज्ञया ॥ ११ ॥ सर्वाणियत्रतीर्थानिसमाहूतानिसर्वतः ॥ निवासंचक्रिरेराजन्नुग्रसेनक्रतूत्तमे ॥ १२ ॥ तेनपिंडारकंनामसर्वतीर्थस्यपिण्डतः ॥ तत्रस्नात्वानरःसद्योराजसूयफलंलभेत् ॥ १३ ॥ यत्रैवत्रिदिनंस्नात्वाव्रतीभूत्वासमाहितः ॥ ब्राह्मणेभ्यःस्वर्णदानंदत्त्वायःप्रणतोभवेत् ॥ १४ ॥ इहैवनरदेवःस्यात्समहात्मानसंशयः ॥ नित्यंशृणोतिसततंबंदिवाग्भिर्यशःस्वयम् ॥ १५ ॥ सुवर्णरत्नवस्त्राद्यैःसुचंद्रवदनैःपरैः ॥ स्त्रीसंघःसेवितोनित्यंहृष्टपुष्टोमहाबलः ॥ १६ ॥ अहोरात्रप्रताडयंतेद्वारिदुंदुभयोघनैः ॥ करींद्राणांचचीत्कारैरश्वहेषैस्समन्वितम् ॥१७॥ विराजतेराजसंघैःप्रेक्षयन्प्राङ्गणाजिरम् ॥ रत्नप्रसादनिचयंध्वजमंडलमंडितम् ॥ ॥ १८ ॥ मत्तकुंजरकर्णाभ्यांताडिताभृंगमंडली ॥ अलंकरोतितद्द्वारंमंडितंमंडलेश्वरैः ॥ १९ ॥ पिंडारकस्नानमृतेकथंराज्यंभवेदिह ॥ अंतेमोक्षंकथंयातिनरःपापयुतोपिहि ॥ २० ॥ पिण्डारकस्नानमृतेनवर्मपिंडारकस्नानमृतेनकर्म ॥ पिंडारकस्नानमृतेनधर्मःपिंडारकस्नानमृतेनशर्म ॥ २१ ॥ पिंडारकस्नानमृतेवियोगीपिंडारकस्नानकरस्तुयोगी ॥ पिंडारकस्नानकरःसुभोगीपिंडारकस्नानकरोनरोगी ॥ २२ ॥ द्वारावतींमाधवमासमध्येप्रदक्षिणीकृत्यनमस्करोति ॥ सर्वाइहामुत्रचसिद्धयोपिवैदेहतत्पाणितलेभवंति ॥ २३ ॥ तीर्थाप्लुतोधःशयनःशुचिश्चमौनीव्रतीवायवभोजनेन ॥ आरभ्यचैत्रींकिलपौर्णमासींयोमाधवीमेत्यकरोतियात्राम् ॥२४॥ तत्पुण्यसंख्यांगदितुंनशक्यश्चतुर्मुखोवेदमयोविधाता ॥ योमेघधारांगणयेत्कदाचित्कालेनपुण्यानिनकृष्णपुर्याः ॥२५॥ यथातिथीनांहरिवासरश्चयथाहिशेषःफणिनांफणीन्द्रः ॥ यथागरुत्मान्दिविपक्षिणांचयथापुराणेषुचभारतंच ॥ २६ ॥ यथाहिदेवेषुचदेवदेवःश्रीवासुदेवोयदुदेवदेवः ॥ तथापुरीक्षेत्रसमस्तमध्येद्वारावतीपुण्यवतीप्रशस्ता ॥ २७ ॥ अहोतिधन्यायदुमंडलीभिर्विराजतेभूमितलेमनोहरा ॥ वैकुंठलीलाधिकृताकुशस्थलीयथातडिद्विर्जलदावलिर्दिवि ॥ २८ ॥ यत्रैवसाक्षात्पुरुषःपरेश्वरोधृत्वाचतुर्व्यूहमलंविराजते ॥ यस्तूग्रसेनायददौनृपेशतांकृष्णायतस्मैहरयेनमोनमः ॥ २९ ॥ यदास्वलोकंभगवान्गमिष्यतिसंप्लावयिष्यत्यथवांतदार्णवे ॥ वैदेहदिव्यंहरिमंदिरंविनातस्मिन्निवासंभगवान्करिष्यति ॥ ३० ॥ शृण्वंतितत्रैवकलौजनाध्वनिंकृष्णोक्तमित्थंसततंदिनेदिने ॥ भवेदविद्योयदिवासविद्योयोब्राह्मणोवैसतुमामकीतनुः ॥ ३१ ॥

भूत्वाथविप्रोऽन्धितटादगाधंगत्वागृहीत्वाप्रतिमांपरस्य ॥ कृत्वाप्रतिष्ठांचविधायसार्धंकरिष्यतेस्थापनमर्कएषः ॥ २२ ॥ श्रीद्वारकानाथमि
तिस्वरूपंपश्यंतियेभक्तजनाःकलौयुगे ॥ गच्छंतितेविष्णुपदंनृदेवयोगीश्वराणामपिदुर्लभंयत् ॥ २३ ॥ इदंमयातेकथितंनृदेवमाहात्म्यमे
तत्किलकृष्णपुर्याः ॥ शृणोतियःश्रावयतेचभक्त्याश्रीद्वारकावासफलंलभेत्सः ॥ २४ ॥ श्रीद्वारकायानृपखंडमेतन्मयातवाग्रेकथितंसुपु
ण्यम् ॥ कीर्तिंकुलंभक्तिमतीवमुक्तिंददातिराज्यंचसदैवशृण्वताम् ॥२५॥इति श्रीमद्गर्गा० तृतीयदुर्गेपिंडारकमाहात्म्यंनामैकविंशति०२१॥
॥ ॥ श्रीनारदउवाच ॥ ॥ श्रीकृष्णस्यसखाकश्चित्सुदामानामब्राह्मणः ॥ सउवासस्वपुर्य्यांतुसत्याचभार्ययावृतः ॥ १ ॥ विरक्तोघन
हीनश्चवेदवेदांगपारगः ॥ समानशीलयापत्न्याचक्रेवृत्तिमयाचिताम् ॥ २ ॥ सकदाचित्प्रियांप्राहसीदमानांदरिद्रतः ॥ श्रीकृष्णोद्वारकाना
थोमित्रंममपतिव्रते ॥ ३ ॥ मयातेनापिपठिताविद्यासांदीपनेर्गृहे ॥ पुनर्नदृष्टःश्रीकृष्णोभोजवृष्ण्यंधकेश्वरः ॥ ४ ॥ त्रैलोक्यनाथोभग
वान्दुःखहादीनवत्सलः ॥ इतिश्रुत्वावचस्तस्यशुष्कवक्रापतिव्रता ॥ ५ ॥ जीर्णवस्त्रधरादीनापतिंप्राहबुभुक्षिता ॥ यदिब्रह्मन्ननुहरिः
सखातेकमलापतिः ॥ ६ ॥ बुभुक्षितःकथंभूतोजीर्णकर्पटधारणः ॥ द्वारकायांजनागत्वादृष्ट्वासाक्षाच्छ्रियःपतिम् ॥ धनयुक्ताःसमायां
तितस्मात्त्वंगंतुमर्हसि ॥ ७ ॥ ॥ सुदामोवाच ॥ ॥ सर्वेषांशिक्षकोहंत्वंतस्मैशिक्षांप्रदास्यसि ॥ विप्रस्यविदुषोभिक्षाधनंप्रकथितंप्रिये ॥
॥ ८ ॥ प्रियोवाच ॥ सखातुश्रीपतिर्यस्यनातिदूरेप्रवर्तते ॥ तमुपेहिसतेदुःखंदारिद्र्यंनाशयिष्यति ॥ ९ ॥ गताअवस्थाममतेदुःखदारिद्र
भुंजतोः ॥ दातुःकृपानिधेःकांतमित्रतायाश्चकिंफलम् ॥१०॥ सुदामोवाच ॥ विधिनालिखितंभाग्यंतत्तथैवभविष्यति ॥ यातायातेनकिंभ
द्रेहरेध्यानंकरोम्यहम् ॥११॥ यद्वारिदेशेराजानोदेवगंधर्वकिन्नराः ॥ आज्ञांविनानयास्यंतिदीनस्यममकाकथा ॥१२॥ प्रियोवाच ॥ विना
ज्ञांनैवयास्यंतिदेवगन्धर्वकिन्नराः ॥ अंतर्यामीहरिःशीघ्रंदूतैस्त्वामाह्वयिष्यति ॥१३॥ विप्रउवाच ॥ दयालुरीदृशःकृष्णोपरंतुशृणुभामिनि॥
विपत्तिकालेमित्रस्यनगच्छेद्गृहमुत्तमम् ॥ १४ ॥ कथंतुयाचनांकुर्वेचिराद्दृष्ट्वास्वकंप्रियम्॥निर्लोभात्तुभवेत्प्रीतिर्याचनात्तुगमिष्यति ॥१५॥
॥ प्रियोवाच ॥ दुःखदारिद्रहरणंश्रीहरेर्दर्शनंकुरु ॥याचनानैवकर्तव्यासतेर्थंबहुदास्यति ॥ एवंतुप्रिययाविप्रोबहुधैवंप्रभाषितः ॥१६॥ अयंहि

परमोलाभःकृत्वामित्रस्यदर्शनम् ॥ उपायनंतुकिंदास्येलज्जितोहंदरिद्रतः ॥ १७ ॥ इत्युक्त्वासागताशीघ्रंपरगेहंतदासती ॥ तंडुलांश्चतुरो
मुष्टीन्याचित्वास्वगृहंययौ ॥ १८ ॥ जीर्णकर्पटखंडेचबद्ध्वातान्पतयेददौ ॥ १९ ॥ ततोगृहीत्वापृथुकांश्चतंडुलान्कुचैलधारीमलिनश्च
दुर्बलः ॥ जगामकृष्णस्यपुरींशनैःशनैर्ब्रह्मण्यदेवंमनसाचसंस्मरन् ॥ २० ॥ सोत्तीर्यसिंधुमुडुपेनददर्शतत्रश्रीद्वारकांहरिपुरींकनकै
र्विचित्राम् ॥ श्रेणीसभाविविधदुर्गगृहैःपताकैःशृंगाटकैरतिबलैर्यदुभिश्चगुप्ताम् ॥२१॥ दृष्ट्वाकृष्णपुरींविप्रोजनानापृच्छ्यश्रीहरेः ॥ श्रीमंदिरं
तुकुत्रास्तेसर्वेवदतसांप्रतम् ॥ २२ ॥ इतिश्रुत्वामाधवस्यभवनानांचरक्षकाः ॥ ऊचुस्तेवर्ततेकृष्णःसर्वेषुमंदिरेषुच ॥ २३ ॥ इत्युपश्रुत्यसद
नंप्रविश्यैकतमंद्विजः ॥ ब्रह्मानंदंगतःकृष्णंपर्यंकस्थंविलोक्यच ॥२४॥ सखायमागतंज्ञात्वासहसोत्थायमाधवः ॥ दोर्भ्यांमिलित्वाचान्यो
न्यंप्रेम्णाह्यश्रुकलाकुलः ॥ २५ ॥ स्वर्णपात्रेणतस्यापिपादौप्रक्षाल्यतज्जलम् ॥ गृहीत्वाशिरसातंतुपर्यंकउपवेश्यच ॥ २६ ॥ अर्चनंकृतवा
न्गंधचंदनागुरुकुंकुमैः ॥ पक्वान्नैर्धूपदीपैश्चमधुपर्कैर्विधानतः ॥२७॥ पश्चादावेद्यतांबूलंगांचस्वागतमब्रवीत् ॥ वृद्धंकुचैलंमलिनंदुर्बलंश्वे
तमूर्द्धजम् ॥२८॥ मित्रविंदापर्यंचरद्व्यजनेनस्मितान्विता ॥ श्रीकृष्णस्यप्रियाःसर्वाविस्मिताजहसुस्तदा ॥२९॥ ऊचुःपरस्परंनार्यः प्रेक्ष्य
विप्रंसमर्चितम् ॥ भिक्षुणाह्यवधूतेनकिमनेनकृतंतपः ॥३०॥ येनत्रैलोक्यनाथेनसत्कृतश्चाग्रजोयथा ॥ एतस्मिन्नंतरेतौद्वौकथयांचक्रतुःकथाः ॥
पूर्वांगुरुकुलेजाताहस्तौगृह्यपरस्परम् ॥ ३१ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुब्रह्मन्प्रपठितासर्वविद्यात्वयामया ॥ गुरवेदक्षिणांदत्त्वापुनस्त्वंनैवदृ
श्यसे ॥ ३२ ॥ अहंतुद्वारकांयातोजरासंधभयात्सखे ॥ कुत्रस्थलेतवविभोनिवासोवदमेखलु ॥ ३३ ॥ कदाचिदिंधनार्थेवैगुरुदारैःप्रणोदि
ताः ॥ विद्यार्थिनोवयंसर्वेवनंजग्मुर्भयंकरम् ॥ ३४ ॥ विपत्तिरभवत्तत्रवातवर्षभयंकरी ॥ रविरस्तंगतोरात्र्यामंधकारोभवन्महान् ॥३५॥
सर्वंजलमयंजातंस्थलंनैवतुदृश्यते ॥ वयंपरस्परंसर्वेगृहीतकरपंकजाः ॥ ३६ ॥ विद्युत्प्रकाशेपश्यंतोदिक्षुसर्वासुबभ्रमुः ॥ ततःसूर्योदयेजा
तेगुरुःसांदीपनिर्महान् ॥ ३७ ॥ जलेशिष्यांश्चशीतार्तान्वनंगत्वाददर्शह ॥ जलात्सर्वान्स्थलेकृत्वागुरुरश्रुपरिप्लुतः ॥ ३८ ॥ उवाचबालका
यूयमस्मदाज्ञापरायणाः ॥ प्रेष्ठस्तुप्राणिनामात्मातमनादृत्यमत्पराः ॥ ३९ ॥ तस्माद्वकेभ्यःसंतुष्टोवरंदास्यामिदुर्लभम् ॥ भवतांचा

पिसर्वत्रपूर्णाःसंतुमनोरथाः ॥ ४० ॥ वेदशास्त्रपुराणानिकंठस्थानिभवंतिहि ॥ तस्माद्गुरोश्चकृपयापूर्णोहंसर्वसौख्यतः॥४१॥सुदामोवाच ॥
देवदेवगुरुस्त्वंतुकोटिब्रह्मांडनायकः ॥ श्रीपतेस्तस्यगुरुषुवासोऽत्यंतविडंबनम् ॥ ४२ ॥ ततःसुदामाविप्रस्तुकृष्णायपरमात्मने ॥
पृथुकाँस्तंडुलान्राजन्प्रायच्छदवाङ्मुखः ॥ ४३ ॥ सर्वात्माभगवांस्तस्यज्ञात्वागमनकारणम् ॥ नायंविप्रस्तुश्रीकामोमुक्त्यर्थेमांतुसे
वते ॥ ४४ ॥ भार्यापतिव्रतादुःखाद्धनाशांचास्यकुर्वती ॥ तस्माद्धनंकथंदास्येअदात्रोश्वतयोरहम् ॥ ४५ ॥ इतिब्रुवन्पुनर्ज्ञात्वाहेतोर्ममस
तंडुलान् ॥ प्रगृह्यगतवानत्रलज्जयानैवदास्यति ॥ ४६ ॥ तस्मात्तुयाचनांकुर्वेविदित्वैवंवचोब्रवीत् ॥ ४७ ॥ श्रीकृष्णउवाच ॥ गृहान्मदर्थे
भवताकिमानीतमुपायनम् ॥ अण्वप्युपाहृतंयच्चभक्त्याभूरिभविष्यति ॥ ४८ ॥ पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति ॥ तदहंभक्त्युप
हृतमश्नामिप्रयतात्मनः ॥ ४९ ॥ इत्थमाभाष्यभगवानदातुश्चद्विजन्मनः ॥ चीरखंडात्तंडुलांश्चजहारकिमिदंस्वयम् ॥ ५० ॥ एतत्त्वयोप
नीतंमेसखेपरमप्रीणनम् ॥ विश्वंमांतर्पयिष्यंतिब्रह्मन्नेतेचतंडुलाः ॥ ५१ ॥ ईदृशागोकुलेभुक्ताःश्रेष्ठाःपृथुकतंडुलाः ॥ मात्रायशोदयादत्ताःपु
नस्तान्नैवदृष्टवान् ॥ ५२ ॥ इत्येकमुष्टिंजग्ध्वाचभूमिजांसंपदंददौ ॥ द्वितीयांजग्धुमारेभेदातुंपातालसंपदाम् ॥ ५३ ॥ तावद्वक्षस्थलाच्छी
घ्रंजगृहेश्रीःकरंहरेः ॥ अपराधाद्विनानाथकथंमांत्यक्तुमिच्छसि ॥५४॥ एतावतालंश्रीकृष्णशक्रतुल्योद्विजोभवेत् ॥ द्विजेननिर्धनेनापिन
ज्ञातंतद्रहस्यकम् ॥५५॥ संपूर्णंचधनंप्राप्तंस्वगृहेविष्णुमायया ॥ उषित्वारजनीमेकांभुक्त्वापीत्वासुखंगतः॥५६॥ श्वोभूतेस्वगृहान्गंतुंकृष्णंन
त्वामनोदधे ॥ सचाज्ञतोभगवतावंदितःपरिरंभितः ॥ ५७ ॥ याचनानकृतायेनव्रीडितःस्वगृहान्ययौ ॥ ब्रह्मण्यतामयादृष्टाविप्रदेव
स्यश्रीपतेः ॥ ५८ ॥ अहंदरिद्रीकृष्णस्यबाहुभ्यांपरिरंभितः ॥ प्रियाजुष्टेचपर्यंकेभ्रातेवस्थापितोद्विजः ॥ ५९ ॥ वीजितोव्यजनेनापिरु
क्मिण्यासत्यभामया ॥ निर्द्धनस्तुधनंलब्ध्वाश्रीपतिंनैवसंस्मरेत् ॥६०॥ इत्थंकरुणयामह्यंधनंकृष्णोनदत्तवान् ॥ इत्थंविचारयन्गच्छन्सं
स्मरन्ब्राह्मणींरुषा ॥ ६१ ॥ गृहाणधनकोटिंचगृहंगत्वाब्रवीम्यहम् ॥ ब्रह्मण्यदेवोदाताचश्रीकृष्णोयंमयाश्रुतः ॥६२॥ प्रत्यक्षदृष्टःकृपणोग
र्वितोधनपूरितः ॥ शापंदास्येकथंमित्रेधनलोभादहंवृथा ॥ ६३ ॥ यादृशीमेकृताप्रीतिस्तादृशींप्रापयिष्यति ॥ पितरावस्यकंसेनका

रागारेकृतौपुरा ॥ ६४ ॥ कृष्णस्तुनंदसदनेपरगेहेचवर्द्धितः ॥ सदास्यतिकथंद्रव्यंधनयुक्तोपिनिर्धनः ॥ ६५ ॥ रत्नैःप्रपूरितान्गेहान्दृष्ट्वा
वाञ्छांनकारयेत् ॥ ललाटेलिखितंयद्यन्नतन्न्यूनंभविष्यति ॥ ६६ ॥ इतिसंकथयन्विप्रोनिजपुर्य्यंतकेगतः ॥ सुवर्णदुर्गसंयुक्तांकपाट
ध्वजमंडिताम्॥६७॥तोरणैःकलशैश्चित्रैःप्रासादैःसुजनैर्वृताम् ॥ द्वारकामिवशोभाढ्यांसर्वरत्नैःप्रपूरिताम् ॥६८॥ दृष्ट्वाविप्रस्तुकिमिदंकस्य
स्थानमितिब्रुवन् ॥ रथ्यांरथ्यांभ्रमंतंतंप्रत्यगृह्णन्स्त्रियोनराः ॥ ६९ ॥ नागच्छंतंद्विजंदृष्ट्वाकिंकर्य्यःकिंकरास्तथा ॥ स्वामिन्यैकथयामासुः
श्रुत्वासाविस्मयंगता ॥ ७० ॥ भर्तारमागतंश्रुत्वापत्नीसंभ्रमसंयुता ॥ निश्चक्रामालयात्तूर्णंसाक्षाच्छ्रीरिवरूपिणी ॥ ७१ ॥ ब्राह्मणीशि
बिकारूढादासीदासगणैर्वृता ॥ भ्रमंतमग्रहीद्विप्रंदर्शयित्वास्वकंमुखम् ॥ ७२ ॥ दृष्ट्वास्फुरंतींतरुणींचभार्यांस्वर्णांबरैरत्नविभूषणाढ्याम् ॥
यथेंदिरारूपवतींविमानेमुदान्वितःकृष्णकृपांचमेने ॥ ७३ ॥ निजगेहंतयायुक्तःश्रीकृष्णभुवनोपमम् ॥ भोजनैर्द्रव्यरत्नैश्चपर्यंकव्यजनास
नैः ॥ ७४ ॥ वितानैःस्वर्णपात्रैश्चतोरणैःसमलंकृतम् ॥ दृष्ट्वाकृष्णस्यकृपयासुदामातरुणोऽभवत् ॥ ७५ ॥ बुभुजेऽलंपटोविप्रःसमृद्धिं
स्वामहैतुकीम् ॥ मनसाजाययात्यक्ष्यञ्ज्ञानवैराग्यभक्तितः ॥ ७६ ॥ चकारतर्कणांविप्रःकुतोममसमृद्धयः ॥ दत्ताब्रह्मण्यदेवेनदेवानामपि
दुर्लभाः॥७७॥ईदृशींसंपदंदत्त्वानावोचत्किमपिस्वयम् ॥ ममतंडुलमुष्टिंचप्रीत्याप्रत्यग्रहीद्धरिः ॥७८॥ तस्यसख्यंचदास्यंचभूयान्मेजन्मज
न्मनि ॥ तत्पदांबुरुहध्यानात्तरिष्येहंभवार्णवम् ॥ ७९॥ विचिंत्यचेत्थंमनसासुदामापत्न्यावृतःकृष्णपदारविंदे ॥ मनश्चकृत्वाधनमेवविप्रा
न्दत्त्वाहरेर्धामपरंजगाम ॥ ८० ॥ एतच्छ्रीकृष्णदेवस्यचरितंशृणुयान्नरः ॥ दारिद्र्यान्मुच्यतेशीघ्रंभक्तोभगवतोभवेत् ॥ ८१ ॥ श्रीद्वारका
यानृपखंडमेतन्मयातवाग्रेकथितंसुपुण्यम् ॥ कीर्तिंकुलंभक्तिमतीवमुक्तिंददातिराज्यंचसदैवशृण्वताम् ॥ ८२ ॥ इति श्रीमद्गर्गाचार्यसंहिता
यांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादेसुदामविप्रोपाख्यानवर्णननामद्वाविंशोध्यायः ॥ २२ ॥

इति श्रीमद्गर्गसंहितायां द्वारकाखंडं समाप्तम् ।

इदं श्रीमद्गर्गाचार्यसंहितायां द्वारकाखंडं श्रीकृष्णदासा-
त्मज—खेमराजेन स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये
मुद्रितम् । सं० १९६६, शके १८३१.

इति श्रीमद्गर्गाचार्यसंहितायां द्वारकाखंडः समाप्तः ।

श्रीगणेशायनमः ॥ ॥ श्रीराधाकृष्णायनमः ॥ ॥ ॐनमोभगवतेतुभ्यंवासुदेवायसाक्षिणे ॥ प्रद्युम्नायानिरुद्धायनमःसंकर्षणा
यच ॥ १ ॥ अज्ञानतिमिरांधस्यज्ञानांजनशलाकया ॥ चक्षुरुन्मीलितंयेनतस्मैश्रीगुरवेनमः ॥ २ ॥ गर्गउवाच ॥ इत्थंश्रीकृष्णचरितंमया
तेकथितंमुने ॥ चतुष्पदार्थदंनॄणांकिम्भूयःश्रोतुमिच्छसि ॥ ३ ॥ ॥ शौनकउवाच ॥ ॥ बहुलाश्वोमैथिलेन्द्रःश्रीकृष्णेष्टोहरिप्रियः ॥
किंपप्रच्छाथदेवर्षिंतन्मेब्रूहितपोधन ॥ ४ ॥ ॥ श्रीगर्गउवाच ॥ ॥ उग्रसेनंयादवेन्द्रंश्रीकृष्णेनकृतंमुने ॥ श्रुत्वातिविस्मितोराजाना
रदंप्राहमैथिलः ॥ ५ ॥ ॥ बहुलाश्वउवाच ॥ ॥ कोवायंमरुतोराजाकेनपुण्येनभूतले ॥ यादवेंद्रोमहाबुद्धिरुग्रसेनोबभूवह ॥ ६ ॥
यस्यश्रीकृष्णचन्द्रोपिसहायोभूद्धरिःस्वयम् ॥ तस्याहोमहिमानंमेब्रूहिदेवर्षिसत्तम ॥ ७ ॥ ॥ श्रीनारदउवाच ॥ ॥ सूर्यवंशोद्भवोरा
जाचक्रवर्तीकृतेयुगे ॥ यज्ञंचकारविधिवन्मरुतोयोजगज्जितम् ॥ ८ ॥ महासम्भृतसम्भारैर्हिमाद्रेःपार्श्वउत्तरे ॥ संवर्तंमुनिशार्दूलंगुरुंकृत्वा
हिदीक्षितः ॥ ९ ॥ पंचयोजनविस्तीर्णःकुण्डोभूद्यस्यचाध्वरे ॥ योजनंब्रह्मकुण्डस्तुगव्यूतिःपञ्चकुण्डकाः ॥ १० ॥ मेखलागर्तविस्तारवेदि
भिर्निर्मितादश ॥ सहस्रहस्तमुत्तुङ्गोयज्ञस्तंभोबभौमहान् ॥ ११ ॥ विंशद्योजनविस्तीर्णःसौवर्णोयज्ञमण्डपः ॥ वितानतोरणैरेजेकदली
खण्डमण्डितः ॥ १२ ॥ ब्रह्मरुद्रादयोदेवाःसगणास्तत्रचागताः ॥ ऋषयोमुनयःसर्वेतस्ययज्ञंसमाययुः ॥ १३ होतारोदशलक्षाणिदशल
क्षाणिदीक्षिताः ॥ अध्वर्यवःपञ्चलक्षमुद्गातारस्तथापरे ॥ १४ ॥ आहूतास्तत्रविद्वांसश्चतुर्वेदविदोद्विजाः ॥ सर्वेशास्त्रार्थतत्त्वज्ञाःकोटिशोन्ये
प्रपूजिताः ॥ १५ ॥ हस्तिशुंडसमांधारांभुक्त्वाज्यस्यहुताशनः ॥ अजीर्णंप्रापतद्येनविचित्रंविद्धिमैथिल ॥ १६ ॥ येभ्योभागंवदंतीहवि
श्वेदेवाःसभासदः ॥ तेभ्यस्तेभ्योददुर्वाताःपरिवेष्टारएवते ॥ १७ ॥ केपिजीवास्त्रिलोक्यांतुनबभूवुर्बुभुक्षिताः ॥ सर्वेदेवास्तुसोमेनह्य
जीर्णत्वमुपागताः १८ ॥ संवर्तायददौराज्यंजंबुद्वीपस्यचाध्वरे ॥ गजानांहेममाराणांनियुतानिचतुर्दश ॥ १९ ॥ शतार्बुदंहयानांतु
यज्ञांतेदक्षिणांनृप ॥ कोटिशोनवरत्नानांमहार्घाणांमहात्मने ॥ २० ॥ [illegible]नांशतमेवच ॥ शतभारंसुवर्णानांब्राह्मणे
ब्राह्मणेददौ ॥ २१ ॥ जलभोजनपात्राणिहैमानिप्रस्फुरंतिच ॥ भुक्त्वातानिविसृज्याशुगतास्तुष्टाद्विजातयः ॥ २२ ॥ विप्रत्यक्तैःस्वर्ण

पात्रैरुच्छिष्टैर्नृपवर्जितैः ॥ हिमाद्रिपार्श्वेशैलोभूद्द्यापिशतयोजनम् ॥ २३ ॥ मरुतस्ययथायज्ञोनतथान्यस्यकर्हिचित ॥ त्रिलोक्यांशृणु
राजेंद्रनभूतोनभविष्यति ॥ २४ ॥ यज्ञकुण्डाद्विनिर्गत्यपरिपूर्णतमःस्वयम् ॥ आत्मानंदर्शयामासमरुतायमहात्मने ॥ २५ ॥ तमालो
क्यहरिंनत्वाकृतांजलिपुटोनृपः ॥ गदितुंनसमर्थोभूद्रोमांचीप्रेविह्वलः ॥ २६ ॥ तंप्रेमपूरितंदृष्ट्वापतितंपादयोर्नतम् ॥ उवाचभगवा
न्साक्षान्मेघगम्भीरयागिरा ॥ २७ ॥ ॥ श्रीभगवानुवाच ॥ ॥ राजंस्त्वयाहंविनयेनतोषितोनिष्कारणैर्यज्ञवरैःसमर्चितः ॥ वरंपरंब्रू
हिमहामतेत्वरंदास्यामिदेवैरपिदुर्लभंदिवि ॥ २८ ॥ ॥ श्रीनारदउवाच ॥ ॥ श्रुत्वातुराजामरुतःकृतांजलिःप्रदक्षिणीकृत्यहरिंपरे
श्वरम् ॥ सम्पूज्यभक्त्याविशदोपचारकैर्नत्वाभृशंगद्गदयागिराब्रवीत् ॥ २९ ॥ ॥ मरुतउवाच ॥ ॥ नवेद्म्यहंत्वच्चरणारविन्दतोवरंपरंश्री
पुरुषोत्तमोत्तम ॥ समेत्यगङ्गांतृषिताश्चदुर्धियःखनंतिकूपंहियथानरेतराः ॥ ३० ॥ ॥ तथापियाचेतववाक्यगौरवात्पादारविन्दंहृदयार
विन्दात् ॥ कदापिमेमाव्रजतुव्रजेश्वरमूलश्चतुर्णांविदुरर्थसम्पदाम् ॥ ३१ ॥ श्रीभगवानुवाच ॥ ॥ धन्योसिराजंस्तवनिर्मलामतिःप्रलो
भितस्यापिवरैर्नकामभृत् ॥ तथापिमत्तोवरयेप्सितंवरंविनाफलंभक्तसुखान्नमेसुखम् ॥ ३२ ॥ ॥ मरुतउवाच ॥ ॥ देयंयदामेवरमीप्सितं
प्रभोवैकुण्ठलोकंकुरुताद्धरातले ॥ रक्षस्थितंमांनिजभक्तवत्सलतस्मिन्पुरेभक्तजनैःपरैःसह ॥ ३३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ अस्मि
न्मनोदैवमनोरथाब्धिगतेषुविंशेषुयुगेषुचाष्टसु ॥ गत्वाथनाकंधरणींसमेत्यमयाहिगोवत्सपदंकरिष्यसि ॥ ३४ ॥ ॥ श्रीनारदउवाच ॥ ॥
॥ ॥ इत्युक्त्वाभगवान्साक्षात्तत्रैवान्तरधीयत ॥ सोयंतुमरुतोराजाउग्रसेनोबभूवह ॥ ३५ ॥ तंयज्ञंकारयामासराजसूयंहरिःस्वयम् ॥
किंदुर्लभंत्रिलोक्यांतुभक्तानांमैथिलेश्वर ॥ ३६ ॥ मरुतस्यापिचरितंयःशृणोतिनृपोत्तम ॥ तस्यज्ञानंसवैराग्यंभक्तियुक्तंप्रजायते ॥ ३७ ॥
॥ ॥ इति श्रीगर्गाचार्यसंहितायां श्रीविश्वजित्खंडे नारदबहु॰सं॰श्रीमरुतोपाख्याननामप्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥
॥ ॥ बहुलाश्वउवाच ॥ ॥ कथंचकारविधिवद्राजसूयाध्वरंनृपः ॥ श्रीकृष्णेनसहायेनवदैतन्नितरांमुने ॥ १ ॥ श्रीनारदउवाच ॥ ॥ उग्र
सेनःसुधर्मायांकृष्णंसंपूज्यचैकदा ॥ नत्वाप्राहप्रसन्नात्माकृतांजलिपुटःशनैः ॥ २ ॥ ॥ उग्रसेनउवाच ॥ ॥ भगवन्नारदमुखाच्छ्रुतंय

स्यमहत्फलम् ॥ तंयज्ञंराजसूयाख्यंकरिष्यामितवाज्ञया ॥ ३ ॥ त्वत्पादसेवयापूर्वेमनोरथमहार्णवे ॥ तेरुर्जगत्तृणीकृत्यनिर्भयाःपुरुषोत्तम ॥
॥ ४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ सम्यग्व्यवसितंराजन्भवतायादवेश्वर ॥ यज्ञेनतेजगत्कीर्तिस्त्रिलोक्यांसंभविष्यति ॥ ५ ॥ आहूय
यादवान्सर्वान्सभांकृत्वाथसर्वतः ॥ तांबूलवीटिकांधृत्वाप्रतिज्ञांकारयप्रभो ॥ ६ ॥ ममांशायादवाःसर्वेलोकद्वयजिगीषवः ॥ जित्वारीना
गमिष्यंतिहरिष्यंतिबालिंदिशाम् ॥ ७ ॥ ॥ श्रीनारदउवाच ॥ ॥ अथांधकादीनाहूयशक्रसिंहासनेस्थितः ॥ सुधर्मायांप्राहनृपोधृत्वातां
बूलवीटिकाम् ॥ ८ ॥ ॥ उग्रसेनउवाच ॥ योजयेत्समरेसर्वाञ्जंबूद्वीपस्थितान्नृपान् ॥ मनस्वीशक्रकोदण्डीसोत्तितांबूलवीटिकाम् ॥
॥ ९ ॥ ॥ श्रीनारदउवाच ॥ ॥ नृपेषुतूष्णींभ्रगतेषुसत्सुश्रीरुक्मिणीनन्दनएवमग्रात् ॥ जग्राहतांबूलचयंमहात्मानत्वानृपंमैथिलश
म्बरारिः ॥ १० ॥ ॥ प्रद्युम्नउवाच ॥ ॥ विजित्यसमरेसर्वाञ्जंबूद्वीपस्थितान्नृपान् ॥ गृहीत्वाचबलिंतेभ्यआगमिष्याम्यहंबलात् ॥ ११ ॥
अगम्यागमनंबभ्रोर्ब्राह्मणस्यगुरोस्तथा ॥ हत्याभ्रूणस्यमेभूयान्नकुर्यांकर्मचेदिदम् ॥ १२ ॥ ॥ श्रीनारदउवाच ॥ ॥ श्रुत्वावचःशंबरारेःसाधुसा
ध्वितियूथपाः ॥ ऊचुस्तेषांपश्यतांचतंजग्राहयदूत्तमः ॥ १३ ॥ गर्गाद्यदुकुलाचार्यान्मुहूर्तंबोध्ययनततः ॥ तत्स्नानंकारयामासमुनिभिर्वे
दसूक्तिभिः ॥ १४ ॥ उग्रसेनोथतिलकंप्रद्युम्नस्यचकारह ॥ बलिंदत्त्वानमश्चक्रुःसर्वेयादवयूथपाः ॥ १५ ॥ उग्रसेनोददौखड्गंप्रद्युम्नायमहा
त्मने ॥ कवचंप्रददौसाक्षाद्बलदेवोमहाबलः ॥ १६ ॥ स्वतूणाद्वौविनिष्कृष्यददावक्षयसायकौ ॥ धनुश्चशार्ङ्गधनुषःसमुत्पाट्यददौहरिः ॥ १७ ॥
किरीटकुंडलेदिव्येपीतंवासोमनोहरम् ॥ छत्रंचचामरेसाक्षाच्छूरोवृद्धोददौपुनः ॥ १८ ॥ शतचंद्रंददौतस्मैवसुदेवोमहामनाः ॥ उद्धवः
प्रददौसाक्षान्मालांकिंजल्किनींशुभाम् ॥ १९ ॥ अक्रूरोदक्षिणावर्त्तंशंखंविजयदंददौ ॥ श्रीकृष्णकवचंयंत्रंगर्गाचार्योददौमुनिः ॥ २० ॥ तदै
वह्यागतःशक्रोलोकपालैःसकौतुकः ॥ आजग्मतुर्ब्रह्मशिवौदेवर्षिगणसंवृतौ ॥ २१ ॥ प्रद्युम्नायददौशूलीत्रिशूलंज्वलनप्रभम् ॥ ब्रह्माददौम
हाराजपद्मरागंशिरोमणिम् ॥ २२ ॥ पाशीपाशंशक्तिधरःशक्तिंशत्रुविमर्दिनीम् ॥ वायुश्चव्यजनेदिव्येयमोदंडंददौपुनः ॥ २३ ॥ रविर्गदां
महागुर्वींकुबेरोरत्नमालिकाम् ॥ चंद्रःकांतमणिंचद्रःपरिवचतनूनपात् ॥ २४ ॥ क्षितिश्चपादुकेप्रादाद्दिव्येयोगमयेपरे ॥ प्रद्युम्नायददौकुंतं

भद्रकालीतरस्विनी ॥ २५ ॥ हेमाढ्यमुच्चशिखरंसहस्रहयसंयुतम् ॥ विश्वकर्मकृतंसाक्षाद्ब्रह्मांडांतर्वहिर्गतम् ॥२६॥ सहस्रचक्रसंयुक्तंमनोवे
गंघनस्वनम् ॥मंजीरकिंकिणीजालंघंटाटंकारभीषणम् ॥ २७॥ रथंददौमहादिव्यंसहस्रध्वजशोभितम्॥जैत्ररत्नमयंशक्रःप्रद्युम्नायमहात्मने॥
॥ २८ ॥ शंखदुन्दुभयोनेदुस्तालवीणादयस्तदा ॥ मृदंगवेणुसन्नादैर्जयध्वनिसमाकुलैः ॥ २९ ॥ वेदघोषैर्लाजपुष्पैर्मुक्तावर्षसमन्वितैः ॥
प्रद्युम्नस्योपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ ३० ॥ इति श्रीगर्गा०सं०विश्वजित्खंडेना० बहुलाश्वसं०प्रद्युम्नविजयाभिषेकोनामद्वितीयो० ॥२॥
श्रीनारदउवाच ॥ ॥ अथनत्वाहरिंकार्ष्णिरुग्रसेनंबलंगुरुम् ॥ नीत्वाज्ञांरथमारुह्यकुशस्थल्याविनिर्ययौ ॥१॥ तथातमनुगाःसर्वेयादवाउ
द्धवादयः ॥ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकाः ॥ २ ॥ तथास्वभ्रातरःसर्वेगदाद्याःकृष्णनोदिताः ॥ सपुत्राःसबलाःसर्वेसांबाद्याश्चमहा
रथाः ॥ ३ ॥ किरीटिनःकुंडलिनोलोहकंचुकमंडिताः॥चतुरंगबलोपेताःकोटिशस्तेविनिर्ययुः ॥४॥ कलापिहंसगरुडमीनतालध्वजैरथैः॥
सूर्यमंडलसंकाशैश्चंचलाश्वनियोजितैः ॥ ५ ॥ हेमकुंभैःसशिखरैर्मुक्तातोरणराजितैः ॥ विडंबयद्भिर्नितरांवायुवेगमतःपरम् ॥ ६ ॥ चामरां
दोलितैर्दिव्यैर्वीरमंडलमंडितैः ॥ सौवर्णैर्देवधिष्ण्याभैरेजुर्वीरामनोहराः ॥ ७ ॥ मदच्युतािश्चत्रमुखाहेमजालसमन्विताः ॥ महोद्धतागजाउ
च्चारणद्घंटारुणांबराः ॥ ८ ॥ गिरीन्द्रशिखराभद्राद्धिपेंद्रान्दिग्विभावितान् ॥ विडंबयंतोदृश्यंतेसैन्येसैन्यद्विपानृप ॥ ९ ॥ केचिन्मंद्रास्तुक
थिताःकेचिद्भद्रामृगाःपरे ॥ विंध्याचलभवाःकेचित्केचित्काश्मीरसंभवाः ॥ १० ॥ मलयप्रभवाःकेचिद्धिमाद्रिप्रभवाःपरे ॥ सौरंभप्र
भवाःकेचित्कैलासवनसंभवाः ॥ ११ ॥ ऐरावतकुलेभाश्चचतुर्दंताःकलापिनः ॥ त्रिशुंडागरुडाभाश्चगच्छंतिभुविचांबरे ॥ १२ ॥ ध्वज
युक्ताःकोटिगजाःकोटिदुंदुभिसंयुताः ॥ कोटिसैन्यामहामात्यैरत्नकंबलमण्डिताः ॥ १३ ॥ गर्जयंतोघनश्यामानीडाडंबरराजिताः ॥
इतस्ततोविरेजुस्तेबलेब्धौमकराइव ॥ १४ ॥ करैर्गुल्मान्समुत्पाट्यक्षेपयंतोर्कमंडले ॥ कंपयंतोभुवंपादैर्मदैरार्द्रीकृताचलाः ॥ १५ ॥
दुर्गाद्रिगंडशैलादीन्पातयंतःशिरःस्थलैः ॥ खंडयंतश्चशत्रूणांबलमेतादृशागजाः ॥ १६ ॥ तुरगानिर्गताराजन्केचिन्मात्स्याःकालिंगजाः॥
औशीनराःकौशलाश्चवैदर्भाःकुरुजांगलाः॥१७॥कंबोजजाःसृञ्जयजाःकैकेयाःकुंतिसंभवाः॥दारदाःकेरलाआंगावांगाविकटसंभवाः॥१८॥

कौङ्कणाः कैकटाः केचित्कर्णाटागौर्जराहयाः ॥ सौवीराः सैंधवाः केचित्पांचालाआर्बुदाःपरे ॥ १९ ॥ काच्छाश्चकेचिदानर्तागां
॥१३३॥ धारामालवादयः ॥ महाराष्ट्रभवाःकेचित्तैलंगाजलसंभवाः ॥ २० ॥ परिपूर्णतमस्यापिश्रीकृष्णस्यमहात्मनः ॥ वाजिशालासुवर्तंतेतेपि
सर्वेविनिर्गताः ॥ २१ ॥ श्वेतद्वीपाच्चवैकुंठात्तथाजितपदान्नृप ॥ रमावैकुंठलोकाच्चप्राप्तायेतेपिनिर्गताः ॥ २२ ॥ हेमहारसमायुक्तामुक्ता अ० ४
मालामनोहराः ॥ शिखामणिमहारश्मिसेविताः सुपरिच्छदाः ॥ २३ ॥ चामरैर्मंडिताःपुच्छमुखपादस्फुरत्प्रभाः ॥ यादवानांमहासैन्येदृ
श्यंतेचेदृशाहयाः ॥ २४ ॥ वायुवेगामनोवेगानस्पृशंतःपदैर्भुवम् ॥ अपक्वसूत्रेष्वतिगाबुद्बुदेष्वपिमैथिल ॥ २५ ॥ व्रजंतःपारदमनुजालेषू
र्णाभवेषुच ॥ दृश्यंतेपिनिराधाराःस्फारावारिषुमैथिल ॥ २६ ॥ गंडशैलनदीदुर्गगर्तप्रासादसंचयान् ॥ विलंघयंतःसततंचंचलास्तेतुरंग
माः ॥ २७ ॥ मायूरींतैत्तिरींक्रौंचींहांसींयेखांजनींगतिम् ॥ कुर्वंतोभुविनृत्यंतोमैथिलेन्द्रइतस्ततः ॥ २८ ॥ केचित्सपक्षादिव्यांगाःश्याम
कर्णामनोहराः ॥ पीतपुच्छाश्चंद्रवर्णावाजिशालाविनिर्गताः ॥२९॥ उच्चैःश्रवःकुलेजाताःसूर्यवाजिभवाः परे ॥ अश्विनीसुतविद्याढ्यावरु
णेनप्रयोजिताः ॥ ३० ॥ केचिन्मंदारभाःकेचिच्चित्रवर्णामनोहराः ॥ अतसीपुष्पसंकाशाःस्वर्णाभाहारितप्रभाः ॥ ३१ ॥ पद्मरागप्रभाः
केचित्सर्वलक्षणलक्षिताः ॥ कोटिशःकोटिशोराजन्नन्येपिनिर्गताहयाः ॥ ३२ ॥ धनुर्भृतोभटाःसैन्येसंग्रामेलब्धकीर्त्तयः ॥ शक्तित्रिशू
लासिगदावर्मपाशधराःपरे ॥ ३३ ॥ वर्षंतःशस्त्रधाराभिःप्रलयाब्धिसमानृप ॥ दिग्गजाइवदृश्यंतेमर्दयंतोह्यरीन्मृधे ॥ ३४ ॥ एवंविनिर्ग
तंराजन्यदूनांविपुलंबलम् ॥ दृष्ट्वासुरासुराःसर्वेविसिष्मुःपरमाद्भुतम् ॥ ३५ ॥इति श्रीमद्गर्गाचार्यसंहितायांविश्वजित्खण्डे नारदबहुलाश्व
संवादे यादवसैन्यगमनंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्थंसेनावृतंवीरंप्रद्युम्नंधन्विनांवरम् ॥ श्री
कृष्णबलदेवाभ्यामुग्रसेनउवाचह ॥ १ ॥ ॥ उग्रसेनउवाच ॥ ॥ हेप्रद्युम्नमहाप्राज्ञश्रीकृष्णकृपयात्वरम् ॥ विजित्यनृपतीन्सर्वान्द्वारका
मागमिष्यसि ॥ २ ॥ मत्तंप्रमत्तमुन्मत्तंसुप्तंबालंजडंस्त्रियम् ॥ प्रपन्नंविरथंभीतंनरिपुंहंतिधर्मवित् ॥ ३ ॥ राज्ञोहिपरमोधर्मआर्तानामार्ति ॥१३३
निग्रहः ॥ उत्पथानांवधश्चैत्थमाततायीवधार्हणः ॥४॥पुमान्योपिद्रुतक्लीबआत्मसंभावितोधमः ॥ भूतेषुनिरनुक्रोशोनृपाणांतद्वधोःवधः॥५॥

नैनोराज्ञःप्रजाभर्तुर्धर्मयुद्धेवधेद्विषाम् ॥ आदिराजोनृपान्पूर्वंप्राहस्वायंभुवोमनुः ॥ ६ ॥ योरणेनिर्भयोभूत्वाकृत्वांघ्रिंप्रागगतोन्य
सुः ॥ सगच्छेद्धामपरमंभित्त्वामार्तंडमंडलम् ॥ ७ ॥ भयाद्रणादुपरतस्त्यक्त्वायुद्धेपतिंचयः ॥ व्रजेद्यःक्षत्रियोभूत्वासमहारौरवंव्रजेत् ॥
॥ ८ ॥ सेनारक्षेन्नृराजाहिसेनाराजानमेवहि ॥ सूतःकृच्छ्रगतंरक्षेद्रथिनंसारथिंरथी ॥ ९ ॥ यूयंचयादवाःसर्वेसमर्थबलवाहनाः ॥ कार्ष्णि
मेवाभिरक्षंतुकार्ष्णिर्वःपरिरक्षतु ॥ १० ॥ गावोविप्राःसुराधर्मश्छंदांसिश्रुविसाधवः ॥ पूजनीयाःसदासर्वैर्मनुष्यैर्मोक्षकांक्षिभिः ॥ ११ ॥
वेदाविष्णुवचोविप्रामुखंगावस्तनुर्हरेः ॥ अंगानिदेवताःसाक्षात्साधवोह्यसवःस्मृताः ॥ १२ ॥ श्रीकृष्णोयंहरिःसाक्षात्परिपूर्णतमःप्रभुः ॥
येषांचित्तेस्थितोभक्त्यातेषांतुविजयःसदा ॥ १३ ॥ ॥ श्रीनारदउवाच ॥ ॥ शिरसाजगृहुःसाक्षादुग्रसेनस्यशासनम् ॥ प्रणेमुर्यादवाः
सर्वेकृतांजलिपुटानृप ॥१४॥ उग्रसेनंनृपवरंवसुदेवंबलंहरिम् ॥ ननामकार्ष्णिःशिरसागर्गाचार्यंमहामुनिम् ॥ १५ ॥ श्रीकृष्णबलदेवाभ्यां
पुरींयातेनृपेश्वरे ॥ दिग्जयार्थीहरेःपुत्रःप्रययौयादवैःसह ॥ १६ ॥ चतुर्योजनलंबीत्थंराजमार्गोपियस्यवै ॥ बभौहेममयैःसर्वैःशिबिरैर्मै
थिलेश्वर ॥ १७ ॥ अग्रतोवाहिनीयुक्तःकृतवर्मामहाबलः ॥ ध्वजिनीसहितःपश्चादक्रूरोधन्विनांवरः ॥ १८ ॥ तत्पश्चादुद्धवोमंत्रीप्रति
मापंचसंयुतः ॥ तत्पश्चात्कृष्णचंद्रस्यसुतास्त्वष्टादशस्मृताः ॥ १९ ॥ ययुर्महारथाराजन्येशताक्षौहिणीयुताः ॥ प्रद्युम्नश्चानिरुद्धश्चदी
तिमान्भानुरेवच ॥ २० ॥ सांबोमधुर्बृहद्भानुश्चित्रभानुर्वृकोरुणः ॥ पुष्करोवेदबाहुश्चश्रुतदेवःसुनंदनः ॥ २१ ॥ चित्रभानुर्विरूपश्चकविर्न्य
ग्रोधएवच ॥ तत्पश्चात्प्रययुःसर्वेगदाद्याःकृष्णनोदिताः ॥ २२ ॥ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकाः ॥ ऋतुबाणकोटिसंख्यायादवा
नांप्रकथ्यते ॥ तत्सैन्यसंख्यांनृपतेकःकरिष्यतिभूमिषु ॥ २३ ॥ इत्थंयदूनांचलतांनृपाणांविकर्षतांतांमहतींचसेनाम् ॥ कोदंडटंकारयु
तोभवत्कौधुंकारआताडितदुंदुभीनाम् ॥ २४ ॥ इभेंद्रचीत्कारहयेंद्रहेषणैर्नदद्धुशुंडीदृढवीरगर्जनैः ॥ ढक्कानिनादैर्यदवस्तडित्स्वनैःप्रचं
डमेघाइवतेविडिंडिरे ॥ २५ ॥ ऐजद्भुवोमंडलमेवदिग्गजामहास्वनैस्तेबधिरीकृताइव ॥ सद्योथदुर्गारिपवोविदुद्रुवुर्निःसाहसाःकौचलतांम
हात्मनाम् ॥ २६ ॥ कुर्मस्तुकिंकावितिकेवदंतःकुतःक्वगच्छामइतिद्रवंतः ॥ उपद्रवोह्येषविधेःक्वयातिचचाललोकैःसहिताचलेति ॥ २७ ॥

× कांस्कान्



छेलनयज्ञस्यहरिःपरेश्वरोभारंविदेहेशभुवोवतारयन् ॥ योभूच्चतुर्व्यूहधरोयदोः कुलेतस्मैनमोनंतगुणायभूभृते ॥ २८ ॥ ॥
इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेप्रद्युम्नदिग्विजयार्थगमनंनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥
॥१३४॥ ॥ श्रीबहुलाश्वउवाच ॥ ॥ कान्कान्देशान्ययौजेतुंक्रमतःश्रीहरेःसुतः ॥ तस्यकर्माण्युदाराणिब्रूहिदेवर्षिसत्तम ॥ १ ॥ अहोश्रीकृष्ण अ० ५
चंद्रस्यकृपाभक्तेषुचेदृशी ॥ पुनातिप्रश्रुताध्यातापापिनंसकुलंजनम् ॥ २ ॥ ॥ श्रीनारदउवाच ॥ ॥ साधुसाधुत्वयापृष्टंसाधुतेविम
लामतिः ॥ चरितंकृष्णभक्तानांपुनातिभुवनत्रयम् ॥ ३ ॥ तारकामेघधाराश्चभूमेःसर्वरजांसिच ॥ कविश्चेद्गणयेद्राजन्नहरेःश्रीमतोगुणान्॥
॥ ४ ॥ चतुर्योजनमात्रंहिछायायस्यप्रदृश्यते ॥ तेनश्वेतातपत्रेणशोभितोरुक्मिणीसुतः ॥ ५ ॥ रथेनशक्रदत्तेनस्वसैन्यपरिवारिताः ॥ तः
कच्छदेशान्ययौजेतुंत्रिपुरान्गिरिशोयथा ॥ ६ ॥ कच्छदेशाधिपःशुम्भोमृगयार्थीविनिर्गतः ॥ सेनांसमागतांज्ञात्वापुरींहालांसमाययौ
॥ ७ ॥ प्रद्युम्नस्यागतासेनागजपादप्रताडनैः ॥ चूर्णयन्तीतरून्देशान्पातयन्तीहिमैथिल ॥ ८ ॥ उत्थितैस्तद्रजोवृन्दैरंधीभूतंनभोभवत् ॥
भयंप्रापुर्जनाःसर्वेकच्छदेशनिवासिनः ॥ ९ ॥ तदातिधर्षितःशुम्भोगजानांहेममालिनाम् ॥ नीत्वापंचशतंसद्योहयानामयुतंतथा ॥ १० ॥
विंशद्भारंसुवर्णानामागतस्तस्यसंमुखे ॥ दत्त्वाबलिंननामाशुस्रजाबद्धाकरद्वयम् ॥ ११ ॥ तस्मैतुष्टःशंबरारिःप्रददौरत्नमालिकाम् ॥ संस्था
प्यराज्येतंराजन्नेषाहिप्रकृतिःसताम् ॥ १२ ॥ कलिंगान्प्रययौजेतुंरुक्मिणीनंदनोबली ॥ पतत्पताकैःसत्सैन्यैर्मेघैरिंद्रइवव्रजन् ॥ १३ ॥
कालिंगराजःस्वबलैःसमर्थद्विपवाहनैः ॥ निर्ययौसंमुखेयोद्धुंप्रद्युम्नस्यमहात्मनः ॥ १४ ॥ कालिंगमागतंवीक्ष्यानिरुद्धोधन्विनांवरः ॥ रथे
नैकेनतत्सैन्यैर्युयुधेयादवाग्रजः ॥ १५ ॥ शतबाणैश्चकालिंगंदशभिर्दशभीरथान् ॥ अताडयद्गजान्वीरश्चापटंकारयन्मुहुः ॥ १६ ॥
स्वशत्रवश्चस्वेसर्वेसाधुसाध्वितिवादिनः ॥ अनिरुद्धःप्रयुयुधेप्रद्युम्नस्यप्रपश्यतः ॥ १७ ॥ अनिरुद्धेनबाणौघैःकेचिद्वीराद्विधाकृताः ॥ गजा
श्चभिन्नशिरसःपादभिन्नाहयान्नृप ॥ १८ ॥ रथाश्चचूर्णचरणाहताश्वाहतनायकाः ॥ हतसारथयोवातैर्निपेतुःपादपाइव ॥ १९ ॥ पला ॥१३४॥
यमानांतांसेनांकालिङ्गोवीक्ष्यमैथिल ॥ आजगामगजारूढोविच्छिन्नकवचोरुषा ॥ २० ॥ द्विसप्ततिभारयुतांगदांचिक्षेपसत्वरम् ॥ गजे

नपातयन्वीराअगर्जंघनवद्बली ॥ २१ ॥ गदाप्रहारव्यथितंकिंचिद्व्याकुलमानसम् ॥ अनिरुद्धंमृधेवीक्ष्ययादवाःक्रोधपूरिताः ॥ २२ ॥ तदैव
तेद्रुःकालिंगंबाणैस्तीक्ष्णैःस्फुरत्प्रभैः ॥ समांसमुद्रदंश्येनंकुररावंचुभिर्यथा ॥ २३ ॥ कालिंगोपितदाक्रुद्धःसज्यंकृत्वाधनुःस्वयम् ॥ टंका
रयन्मुहुर्बाणैर्बाणांश्चूर्णीचकारह ॥ २४ ॥ गदोगदांसमादायबलदेवानुजोबली ॥ तद्गजंताडयामासवामहस्तेनमैथिल ॥ २५ ॥ अर्ध
चंद्रप्रहारेणविशीर्णोभूद्गजस्तथा ॥ इंद्रवज्रप्रहारेणगंडशैलोयथानृप ॥ २६ ॥ कालिंगःपतितोभूत्वागृहीत्वामहतींगदाम् ॥ गदंचताडयामा
सकालिंगंचगदस्तदा ॥ २७ ॥ कालिंगगदयोस्तत्रघोरंयुद्धंबभूवह ॥ विस्फुलिंगान्क्षरंत्यौद्वेगदेचूर्णीबभूवतुः ॥ २८ ॥ गदोगृहीत्वाका
लिंगंपातयित्वारणांगणे ॥ चकर्षस्वकरेणाशुफणिनंगरुडोयथा ॥ २९ ॥ गदाप्रहारव्यथितश्चूर्णितास्थिःकलिंगराट् ॥ आययौशरणंसो
पिप्रद्युम्नस्यमहात्मनः ॥ ३० ॥ दत्त्वाबलिंप्राहकलिंगराजस्त्वंदेवदेवःपरमेश्वरोसि ॥ क्रोधावृतंकःप्रसहेतकोत्वांजनोयथादंडधरंनमस्ते ॥
॥ ३१ ॥ ॥ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खण्डे नारदबहुलाश्वसंवादे कच्छकालिंगदेशविजयोनामपंचमोऽध्यायः ॥ ५ ॥
॥ श्रीनारदउवाच ॥ इत्थंजित्वाथकालिंगंप्रद्युम्नोयादवेश्वरः ॥ जगाममरुधन्वानंजलंवैश्वानरोयथा ॥ १ ॥ गिरिदुर्गसमायुक्तंधन्वदेशाधि
पंगयम् ॥ उद्धवंप्रेषयामासज्ञात्वातंयादवेश्वरः ॥ २ ॥ गिरिदुर्गंगतःसाक्षादुद्धवोबुद्धिसत्तमः ॥ सभामेत्यगयम्प्राहशृणुराजन्महामते ॥३॥
उग्रसेनोयादवेन्द्रोराजराजेश्वरोमहान् ॥ जंबूद्वीपनृपाञ्जित्वाराजसूयंकरिष्यति ॥ ४ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् ॥ असं
ख्यब्रह्माण्डपतिर्मंत्रीतस्याभवद्धरिः ॥ ५ ॥ तेनवैप्रेषितःसाक्षात्प्रद्युम्नोधन्विनांवरः ॥ शीघ्रंतस्मैबलिंदेहिकृतकौशल्यहेतवे ॥ ६ ॥ श्रीना
रदउवाच ॥ श्रुत्वाकिंचित्प्रकुपितोवीर्यशौर्यमदोद्धतः ॥ उद्धवंप्राहनृपतिर्गयोवामंमहाबलः ॥ ७ ॥ ॥ गयउवाच ॥ ॥ बलिंतस्मैनदा
स्यामिविनायुद्धंमहामते ॥ अल्पकालेनयदवोगतावृद्धिंभवादृशाः ॥ ८ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्तउद्धवोराजंश्छंबरारिंसमेत्यसः ॥
सर्वेषांयादवानांचशृण्वतांप्रशशंसह ॥ ९ ॥ तदैवरुक्मिणीपुत्रोगिरिदुर्गंसमाययौ ॥ चूर्णयन्गजपादैश्चनागरान्भूजनान्द्रुमान् ॥ १० ॥
अक्षौहिणीभ्यांसंयुक्तोगयोयोद्धुंविनिर्ययौ ॥ तत्सैन्यैर्यादवैःसार्द्धंघोरंयुद्धंबभूवह ॥ ११ ॥ रथिनोरथिभिस्तत्रगजवाहागजैःसह ॥ अश्ववा

हैरश्ववाहावीरार्वीरैःपरस्परम् ॥ १२ ॥ युयुधुस्तीक्ष्णबाणौघैश्चर्मखड्गगदार्ष्टिभिः ॥ पाशैःपरश्वधैराजन्छतघ्नीभिर्भुशुंडिभिः ॥१३॥ हन्य
मानाश्चयदुभिर्गयवीराभयातुराः ॥ सर्वेस्वंस्वंरणंत्यक्त्वादुद्रुवुस्तेदिशोदश ॥ १४ ॥ पलायमानेस्वबलेगयोनाममहाबलः ॥ एकाकीप्रय
यौयोद्धुंधनुष्टंकारयन्मुहुः ॥ १५ ॥ दीप्तिमान्कृष्णपुत्रस्तुचतुर्बाणैरिपोर्हयान् ॥ एकेनसारथिंजघ्नेद्वाभ्यांकेतुंसमुच्छ्रितम् ॥ १६ ॥ रथंच
बाणविंशत्याकवचंपंचभिःपुनः ॥ धनुस्तस्यापिचिच्छेदशतबाणैर्महाबलः ॥ १७ ॥ गयोन्यद्धनुरादायदीप्तिमंतंहरेःसुतम् ॥ जघानबाण
विंशत्याजगर्जघनवद्बली ॥१८॥ तत्प्रहारेणसमरेकिंचिद्व्याकुलमानसः ॥ दीप्तिमानथजग्राहशक्तिंज्योतिर्मयींदृढाम् ॥१९॥ चिक्षेपभ्राम
यित्वातांगयाख्यायमहात्मने ॥ सापितद्धृदयंभित्त्वापपौचरुधिरंमहत् ॥ २० ॥ गयोपिपपतितोराजन्मूर्च्छितोभूद्रणांगणे ॥ दीप्तिमां
श्चधनुष्कोट्याकर्षयंस्तद्बलेरिपुम् ॥ २१ ॥ प्रद्युम्नस्यपुरःप्रागात्कद्रुजंगरुडोयथा ॥ नरदुंदुभयोनेदुर्देवदुंदुभयस्तदा ॥ आकाशाद्ववृषु
र्देवाःपुष्पवर्षाणिपार्थिव ॥ २२ ॥ तदैवतेनापिसमर्चितांघ्रिःश्रीकृष्णपुत्रोनृपशंबरारिः ॥ अवंतिकांसप्रययौमहात्माश्रीकर्णिकांस्वर्णम
यीमिवालिः ॥ २३ ॥ श्रुत्वागतंतंजयसेनएवहिसमर्चयामाससमालवाधिपः ॥ आनीयवृद्धान्सुबलिंमहात्मनेप्रधर्षितोमैथिलतत्प्रभाव
वित् ॥ २४ ॥ राजाधिदेवींस्वपितुःपितुःस्वसांप्रणम्यतांकृष्णसुतोमहामनाः ॥ विंदानुविंदौपरिरभ्यतत्सुतौबभौवृतोमालवदेशसंभवैः ॥
॥ २५ ॥ प्रद्युम्नोधन्विनांश्रेष्ठःपुरींमाहिष्मतींययौ ॥ यादवैःस्वबलैःसार्द्धंनर्मदांसददर्शह ॥ २६ ॥ राजितामंबुकल्लोलैःशृंगारति
लकामिव ॥ वहंतींपुष्पनिचयमुष्णिहंमुद्रिकामिव ॥ २७ ॥ वेतसीवेणुतरुभिःपुष्पितैर्माधवीवृतैः ॥ स्फुरद्भिर्मूर्त्तिमद्भिश्चदेवैःस्वर्ग
नदीमिव ॥ २८ ॥ तत्तीरेशिबिरैर्युक्तःप्रद्युम्नोयादवेश्वरः ॥ स्थितोभूद्यादवैःसाकंदेवैरिंद्रइवप्रभुः ॥ २९ ॥ इंद्रनीलोमहाराजज्ञानीमा
हिष्मतीपतिः ॥ स्वदूतंप्रेषयामासप्रद्युम्नायमहात्मने ॥ ३० ॥ प्रद्युम्नराजशिबिरेदूतोनत्वाकृतांजलिः ॥ उवाचवचनंतत्रसर्वेषां
शृण्वतांनृप ॥ ३१ ॥ ॥ दूतउवाच ॥ हस्तिनापुरनाथेनधार्त्तराष्ट्रेणधीमता ॥ स्थापितोतिबलोवीरोबलिंकस्मैनदास्यति ॥१३५॥
॥ ३२ ॥ सुयोधनायचेच्छाभिर्द्रव्यंयच्छतिमाबलात् ॥ योद्धव्यंनभवद्भिश्चविफलोहिरणोत्रवै ॥ ३३ ॥ ॥ श्रीप्रद्युम्नउवाच ॥

यथागयोद्भूतकलिंगराड्यथातथाभिभूतोपिबलिंप्रदास्यति ॥ नृपंनजानातिमहोग्रसेनकंमाहिष्मतीशोयमतीवराजराट् ॥ २४ ॥
श्रीनारदउवाच ॥ उक्तोदूतस्तदैवाशुगत्वामाहिष्मतीपतिम् ॥ सभायांकथयामासप्रद्युम्नकथितंवचः ॥ २५ ॥ यदूनामुद्भटंसैन्यंवीक्ष्य
माहिष्मतीपतिः ॥ गजानांपंचसाहस्रंहयानांनियुतंशुभम् ॥ २६ ॥ रथानामयुतंजैत्रंनीत्वाराजाविनिर्गतः ॥ बलिंददौसमेत्याशुप्रद्युम्नाय
महात्मने ॥ २७ ॥ ॥ इतिश्रीमद्गर्गा० सं० विश्वजित्खण्डे नारदबहुलाश्वसंवादेमरुधन्वमालवमाहिषदेशविजयोनामषष्ठोऽध्यायः ॥ ६ ॥
॥ नारदउवाच ॥ ॥ प्रद्युम्नोथमहावीर्योजित्वामाहिष्मतीपतिम् ॥ विकर्षन्महतींसेनांगुर्जराटंसमाययौ ॥ १ ॥ गुर्जराटाधिपंवीरमृष्य
नाममहाबलम् ॥ जग्राहसेनयाकार्ष्णिस्तुण्डयाहिंयथाविराट् ॥ २ ॥ सद्यस्तस्माद्बलिंनीत्वायादवेन्द्रोमहाबलः ॥ विकर्षन्महतींसेनांचे
दिदेशांस्ततोययौ ॥ ३ ॥ दमघोषश्चेदिराजोवसुदेवस्वसुःपतिः ॥ शिशुपालस्तस्यपुत्रःकृष्णशत्रुःप्रकीर्तितः ॥ ४ ॥ अभीयायमहाबुद्धि
र्दमघोषंमहाबलम् ॥ नत्वाप्राहमहाबुद्धिमुद्धवोबुद्धिसत्तमः ॥ ५ ॥ उद्धवउ० ॥ ॥ राजन्देहिबलिंतस्माउग्रसेनायभूभृते ॥ विजित्यनृपती
न्योसौराजसूयंकरिष्यति ॥ ६ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्थंनिशम्यवचनंदमघोषसुतःखलः ॥ स्फुरदोष्ठोमन्युपरःप्राहेदंसदसि
त्वरम् ॥ ७ ॥ शिशुपालउवाच ॥ दुरत्ययाकालगतिरहोचित्रमिदंजगत् ॥ विधेःकुलालस्यकलिःप्राजापत्येभविष्यति ॥ ८ ॥
क्वराजहंसःकाकःक्वक्वमूर्खःक्वचपण्डितः ॥ भृत्याविजेष्यंतिनृपंचक्रवर्तिनमीश्वरम् ॥ ९ ॥ ययातिशापाद्यदवोभ्रष्टराज्यपदाःस्मृताः ॥
राज्यंस्वल्पंजलंप्राप्यप्रोच्छलंत्यापगाइव ॥ १० ॥ अवंशसम्भवोराजामूर्खपुत्रोहिपंडितः ॥ निर्धनश्चधनंप्राप्यतृणवन्मन्यतेजगत् ॥ ११ ॥
उग्रसेनःकतिदिनैराजत्वंसमुपागतः ॥ मंत्रिणावासुदेवेनपूजितःसबलान्नृपः ॥ १२ ॥ तस्यमंत्रीवासुदेवोजरासन्धभयाद्द्रुतम् ॥ मथुरां
स्वपुरींत्यक्त्वासमुद्रंशरणङ्गतः ॥ १३ ॥ आभीरस्यापिनन्दस्यपूर्वंपुत्रःप्रकीर्तितः ॥ वसुदेवोमन्यतेतंमत्पुत्रोयङ्गतत्रपः ॥ १४ ॥ वसु
देवाद्गौरवर्णादयंश्यामःकुतोऽभवत् ॥ पितामहोपिगौरोस्यदुःखहास्यमिदंवचः ॥ १५ ॥ प्रद्युम्नंतत्सुतंजित्वासबलंयादवैःसह ॥ कुशस्थ
लींगमिष्यामिमहींकर्तुमयादवीम् ॥ १६ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्त्वाधनुरादायतूणौचाक्षय्यसायकौ ॥ ॥ गन्तुमभ्युद्यतंवी

क्ष्यचेदिराजस्तमब्रवीत् ॥ १७ ॥ ॥ दमघोषउवाच ॥ ॥ शृणुपुत्रप्रवक्ष्यामिक्रोधंमाकुरुमाकुरु ॥ अकस्मादाचरेत्कार्यंनसिद्धिंवि
न्दतेह्यसौ ॥ १८ ॥ धर्मार्थकाममोक्षाणांसाधनंनक्षमासमम् ॥ तस्मात्साम्प्रकर्तव्यंसाम्नानसदृशंसुखम् ॥ १९ ॥ दानेनराजतेसामदानं
सत्क्रिययापुनः ॥ सत्क्रियापियथायोग्यंगुणंसम्प्रेक्ष्यराजते ॥ २० ॥ यदवश्चेदिपाश्चैवज्ञातिसंबंधिबान्धवाः ॥ चेदिपानांचवृष्णीनांकलिंनेच्छा
मितत्त्वतः ॥ २१ ॥ ॥ नारदउवाच ॥ ॥ शिशुपालोबोधितोपिदमघोषेणधीमता ॥ नोवाचकिंचिद्विमनास्तूष्णींभूतोमहाखलः ॥ २२ ॥
श्रुतिश्रवाश्चेदिपराजराज्ञीस्वसाशुभाशूरसुतस्यराजन् ॥ समेत्यपुत्रंशिशुपालसंज्ञंप्रत्याहसम्यग्विनयान्विताता ॥ २३ ॥ ॥ श्रुतिश्रवा
उवाच ॥ ॥ मापुत्रखेदंकुरुतात्कदाचिन्माभूत्कलिश्चेदिपयादवानाम् ॥ तेमातुलोयंकिलशूरसूनुर्भ्राताचतेतत्सुतएवकृष्णः ॥ २४ ॥
तस्यात्मजायेत्रसमागतास्तेप्रद्युम्नमुख्याःशतशोमहांतः ॥ संपूजनीयाश्चमयाभवद्भिःसंलालनीयानहियुद्धयोग्याः ॥ २५ ॥ अहंगमिष्या
मिसमार्द्रचित्तानेतुंत्वयातातसमागतांस्तान् ॥ द्रष्टुंचिरोत्कंठमनामहोत्सवैर्नैताद्दशोयंसमयःकदाचित् ॥ २६ ॥ शिशुपालउवाच ॥ ॥
ममशत्रूरामकृष्णौयादवाःशत्रवश्चमे ॥ घातयिष्यामितान्सर्वान्यैरहंतुतिरस्कृतः ॥ २७ ॥ पुरावैकुंडिनपुरेयाभ्यांमेहेलनंकृतम् ॥ विवाहो
वारितोमेवैरामकृष्णावरीमम ॥ २८ ॥ यदितेषांयादवानांयूयंपक्षंकरिष्यथ ॥ तदात्वांसहपित्राचनिगृह्यनिगडैर्दृढैः ॥ २९ ॥ कारागारे
कारयामिकंसःस्वपितरौयथा ॥ अन्यथाचेद्वधिष्यामिशपथोमेनदुर्घटः ॥ ३० ॥ ॥ श्रीनारदउवाच ॥ ॥ तद्वचःपरुषंश्रुत्वातूष्णीं
यातेथचेदिपे ॥ उद्धवःस्वबलंप्राप्यप्राहसर्वंयथोदितम् ॥ ३१ ॥ वाहिनीध्वजिनीचैवपृतनाक्षौहिणीतथा ॥ चतुर्धाशिशुपालस्यसेनायु
क्ताबभूवह ॥ ३२ ॥ ॥ बहुलाश्वउवाच ॥ ॥ वाहिन्याद्याश्चयासेनास्तत्संख्यांवदमेप्रभो ॥ ऋषयोहिप्रजानंतिभूतंभव्यंभवच्चयत् ॥
॥ ३३ ॥ ॥ श्रीनारदउवाच ॥ ॥ शतंद्विपानांरथिनांसहस्रशतसंयुतम् ॥ अयुतंतुरगाणांचपत्तीनांलक्षमेवच ॥ ३४ ॥ सेनायालक्षणं
स्वल्पंद्विगुणंचतुरंगिणी ॥ चतुःशतंद्विपानांचरथानामयुतंतथा ॥ ३५ ॥ चतुर्लक्षहयानांचपत्तीनामेककोटयः ॥ लोहकंचुकसंयुक्ताःस
मर्थबलवाहनाः ॥ ३६ ॥ शस्त्रास्त्रज्ञायत्रशूरावाहिनीसाबुधैःस्मृता ॥ वाहिन्याद्विगुणीभूताध्वजिनीसाप्रकीर्तिता ॥ ३७ ॥ ध्वजिन्याद्वि

गुणीभूतापृतनाकथ्यतेबुधैः ॥ दशनागसहस्राणिनागेनागेशतंरथाः ॥ २८ ॥ रथेरथेशतंह्यश्वाअश्वेऽश्वेपत्तयःशतम् ॥ स्यात्वक्षौहिणीज्ञे
याकविभिःकथितापुरा ॥ २९ ॥ ससाहसोतिशूरःस्यात्सामंतःशतशूरभृत् ॥ सामंतानांशतंबिभ्रत्सगजीकथितोमृधे ॥ ४० ॥ स्वदेहं
सारथिंचाश्वान्रथंरक्षेद्रथीचयः ॥ सेनांरक्षतियोबाणैःकथ्यतेसमहारथी ॥ ४१ ॥ स्वसेनांरक्षयञ्छत्रून्सूदयन्रणमंडले ॥ योक्षौहिण्या
समंयुध्येत्सदासोतिरथीस्मृतः॥४२॥इतिश्रीमद्गर्गा॰विश्वजित्खण्डेश्रीनारदबहुलाश्वसंवादेगुर्जरराट्चेदिदेशगमनंनामसप्तमोऽध्यायः॥७॥
॥ श्रीनारदउवाच ॥ ॥ निर्गतःशिशुपालोसौसबलश्चंद्रिकापुरात् ॥ पितरौतौतिरस्कृत्यस्वभावोह्यसतामयम् ॥ १ ॥ वाहिनीध्वजि
नीभ्यांचद्युमच्छक्रौविनिर्गतौ ॥ पृतनाक्षौहिणीभ्यांतौरंगपिङ्गौचमंत्रिणौ ॥२॥ शिशुपालमहासैन्यंप्रलयाब्धिसमंनृप ॥ संवीक्ष्ययदवस्ततुं
चाजग्मुःकृष्णपोतकाः ॥ ३ ॥ वाहिनीसहितःपश्चाद्युमान्नाममहाबलः ॥ युयुधेयादवैःसार्द्धंशिशुपालप्रणोदितः ॥ ४ ॥ द्वयोश्चसैन्ययो
र्बाणैरन्धकारोभवद्रणे ॥ हयपादरजोवृन्दैःप्रोत्थितैश्छादितंनभः ॥ ५ ॥ हयाश्चनृपधावन्तःप्रोत्पतंतोद्विपान्प्रति ॥ द्विपाश्चसंक्षतायुद्धे
पातयन्तःपदैर्द्विपः ॥ ६ ॥ शुण्डादण्डस्यफूत्कारैर्मर्दयन्तइतस्ततः ॥ कस्तूरीपत्रसिन्दूररक्तकम्बलमण्डिताः ॥ ७ ॥ बाणैर्गदाभिःपरिघैः
खड्गैःशूलैश्चशक्तिभिः ॥ छिन्नांगाःपत्तयःपेतुश्छिन्नबाह्वंघ्रिजानवः ॥८॥ कश्चित्तीक्ष्णासिनाराजन्हयान्युद्धेद्विधाकरोत् ॥ केचिद्दंता
न्संगृहीत्वाकुंभेषुकरिणांगताः ॥ ९ ॥ अमात्यंहस्तिबाहंचमर्दयंतोमृगेंद्रवत् ॥ उल्लंघयंतःसहयागजवृन्दंमहाबलाः ॥ १० ॥ खड्गप्रहारं
कुर्वंतोविदार्यपरसैनिकान् ॥ हयस्पृष्टानदृश्यंतेदृश्यंतेतेनटाइव ॥ ११ ॥ सैन्यभंगंचशत्रूणांदृष्ट्वाऽक्रूरःसमाययौ ॥ चकारदुर्दिनंबाणैर्धनु
ष्टंकारयन्मुहुः ॥ १२ ॥ पलायमानंस्वबलंद्युमान्वीक्ष्यमहाबलः ॥ आययौसंमुखेयोद्धुंश्वाफल्केर्मैथिलेश्वर ॥ १३ ॥ बाणजालंसचिच्छे
दबाणौघैश्चापनिर्गतैः ॥ छादयामासचाक्रूरंवर्षास्विनमिवांबुदः ॥ १४ ॥ छित्त्वातद्बाणपटलमसिनागांदिनीसुतः ॥ शक्त्याताताडतंवी
रंद्युमंतंक्रोधमूर्च्छितः ॥ १५ ॥ तत्प्रहारेणभिन्नांसोमूर्च्छितोघटिकाद्वयम् ॥ पुनरुत्थाययुयुधेशिशुपालसखोबली ॥ १६ ॥ गृहीत्वाथगदां
गुर्वींलक्षभारविनिर्मिताम् ॥ तताडहृदिचाक्रूरंजगर्जघनवद्द्युमान् ॥ १७ ॥ अक्रूरेतत्प्रहारेणकिंचिद्व्याकुलमानसे ॥ युयुधानस्तदाप्रागा

ज्याशब्दंकारयन्मुहुः ॥ १८ ॥ शिरस्तस्याशुचिच्छेदबाणेनैकेनलीलया ॥ पतितेद्युमतिह्याजौवीरास्तस्यातिदुद्रुवुः ॥ १९ ॥ तदैव
शक्तःसंप्राप्तोदृष्ट्वासेनांपलायिताम् ॥ शूलंचिक्षेपसहसायुयुधानायधीमते ॥ २० ॥ युयुधानश्चबाणौघैस्तच्छूलंशतधाकरोत् ॥ शक्तोगृ
हीत्वापरिघंयुयुधानंतताडह ॥ २१ ॥ युयुधानोर्जुनसखःक्षणंमूर्च्छामवापह ॥ तदैववीरःसंप्राप्तःकृतवर्मामहाबलः ॥ २२ ॥ शक्तस्यापि
रथंसाश्वंबाणैश्चूर्णीचकारह ॥ शक्तोपिचूर्णयामासगदयातद्रथंपरम् ॥ २३ ॥ कृतवर्मारथंत्यक्त्वाशक्तंजग्राहरोषतः ॥ पातयित्वाभुजाभ्यां
तंचिक्षेपनृपयोजनम् ॥ २४ ॥ शक्तेचपतितेक्रुद्धेशिशुपालप्रणोदितौ ॥ रंगपिंगौमंत्रिणौतौपृतनाक्षौहिणीयुतौ ॥ २५ ॥ बाणवर्षंप्रकुर्वं
तौमर्दयंतावरीन्मृधे ॥ आजग्मतुर्मैथिलेंद्रयथावातहुताशनौ ॥ २६ ॥ उद्भटंतद्बलंवीक्ष्ययादवेंद्रःपितुःसमः ॥ आदायचापंसदसिप्रद्युम्नो
वाक्यमब्रवीत् ॥ २७ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ अहंगमिष्यामिपुरींरंगपिंगमृधेजनाः ॥ रंगपिंगौचदृश्येतेमहाबलपराक्रमौ ॥ २८ ॥
एतच्छ्रुत्वामहाबाहुर्भानुःकृष्णसुतोबली ॥ सर्वेषामग्रतोभूत्वाभ्रातरंप्राहनीतिवित् ॥ २९ ॥ ॥ भानुरुवाच ॥ ॥ त्रैलोक्यंदृश्यते
प्रातंयदातेसंमुखेप्रभो ॥ तदातेचापटंकारोभविष्यतिनसंशयः ॥३०॥ केवलेनादिखड्गेनशिरसीरंगपिंगयोः ॥ छित्त्वानीत्वागमिष्यामिक
लिंगशकलेइव ॥ ३१ ॥ ॥ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंण्डेनारदबहुलाश्वसंवादेद्युमच्छक्तवधोनामाष्टमोऽध्यायः ॥ ८ ॥
श्रीनारदउवाच ॥ इत्युक्त्वाशत्रुहाभानुर्गृहीत्वाखड्गचर्मणी ॥ पदातिःप्रययौसैन्येयवनेवह्निरिवप्रभुः ॥ १ ॥ भानुःखड्गेनशत्रूंस्ताञ्छिन्न
बाहूंश्चकारह ॥ द्विपान्हयान्संमुखस्थान्पार्श्वस्थांश्चद्विधाकरोत् ॥ २ ॥ ॥ खड्गद्वितीयोह्येकाकीरेजेछिंदन्नरीन्मृधे ॥ नीहारमेघपटलै
र्भानुर्भानुरिवस्फुरन् ॥ ३ ॥ हस्तिनांछिन्नकुंभानांभानुखड्गेनमैथिल ॥ मुक्तानिपेतुश्चयथातारकाःक्षीणकर्मणः ॥ ४ ॥ क्षणमात्रेणतत्सै
न्यंपातयित्वारणांगणे ॥ रंगपिंगोपरिप्रागाद्भानुर्वीरोमहाबलः ॥ ५ ॥ कृष्णदत्तेनखड्गेनरथौतौरंगपिंगयोः ॥ छित्त्वाहयान्सनेतॄंश्चभानुर्यु
द्धेद्विधाकरोत् ॥ ६ ॥ खड्गौनीत्वारंगपिंगौताडतुस्तंमदोद्भटौ ॥ भानुचर्मगतौखड्गौभंगीभूतौबभूवतुः ॥ ७ ॥ भानुःखड्गप्रहारे
णशिरसीरंगपिंगयोः ॥ युगपत्पेततुर्युद्धेतदद्भुतमिवाभवत् ॥ ८ ॥ भानुस्तयोश्चशिरसीनीत्वाप्रद्युम्नसंमुखे ॥ [illegible] विजयीवीरः

श्लावितःसैन्यनायकैः ॥ ९ ॥ दिविदुंदुभयोनेदुर्नरदुंदुभिभिःसमम् ॥ अभूज्जयजयारावःपुष्पवर्षाःसुरैःकृताः ॥ १० ॥ रंगपिंगोमृतोश्रु
त्वाशिशुपालोरुषान्वितः ॥ जैत्ररथंसमारुह्ययदूनांसंमुखंययौ ॥ ११ ॥ मदच्युद्भिर्गजैर्दीर्वैरत्नकंबलमंडितैः ॥ स्वर्णनीडसमायुक्तैर्लोल
घंटाक्वणत्स्वनैः ॥ १२ ॥ रथैश्वदेवधिष्ण्याभैर्वायुवेगैस्तुरंगमैः ॥ विद्याधरसमैर्वीरैर्नादयन्वसुधातलम् ॥ १३ ॥ शिशुपालबलंदृष्ट्वाशक्रद
त्तेरथेस्थितः ॥ सर्वेषामग्रतःकार्ष्णिःप्रययौधन्विनांवरः ॥ १४ ॥ शंखंदध्मौहरेःपुत्रोदिशःखंनादयन्नृप ॥ तेननादेनशत्रूणांकंपोभूद्धृदि
मानद ॥ १५ ॥ शिशुपालमहासैन्येप्रासादइवदुर्गमे ॥ चक्रेनाराचसोपानंसहसारुक्मिणीसुतः ॥ १६ ॥ दमघोषसुतोधीमान्धनुष्टंकार
यन्मुहुः ॥ ब्रह्मास्त्रंसंदधेयद्वैदत्तात्रेयेणशिक्षितम् ॥ १७ ॥ प्रचंडसर्वतस्तेजोदृष्ट्वाश्रीरुक्मिणीसुतः ॥ ब्रह्मास्त्रेणापितद्युद्धेसंजहारसलीलया
॥ १८ ॥ शिशुपालोमहाधीमानंगारास्त्रंसमादधे ॥ जामदग्न्येनयद्दत्तंमहेन्द्रेपर्वतेनृप ॥१९॥ तस्मादङ्गारवर्षाभिःकार्ष्णिसेनातिविह्वला ॥
पर्जन्यास्त्रंमहादिव्यंतदाकार्ष्णिःसमादधे ॥ २० ॥ स्थूलाभिर्मेघधाराभिरंगाराःशांतिमाययुः ॥ शिशुपालस्तदाक्रुद्धोगजास्त्रंतत्समाद
धे ॥ २१ ॥ यदगस्त्येनमुनिनाशिक्षितंमलयाचले ॥ महोद्भटागजादीर्घाःकोटिशस्तद्विनिर्गताः ॥ २२ ॥ तेसैन्यंपातयामासुःप्रद्युम्नस्य
महात्मनः ॥ हाहाकारोमहानासीद्यदूनांवाहिनीषुच ॥ २३ ॥ प्रद्युम्नोथरणश्लाघीनृसिंहास्त्रंसमादधे ॥ नृसिंहोनिर्गतस्तस्मान्नादयन्वसु
धातलम् ॥ २४ ॥ स्फुरत्सटोदीर्घवालोनखलांगूलभीषणः ॥ ननादहुंकृतैःशब्दैर्भक्षयंस्तान्गजात्रणे ॥ २५ ॥ विदार्यगजकुंभांतमुत्पतन्
भगवान्हरिः ॥ गजवृंदंमर्दयित्वातत्रैवांतरधीयत ॥ २६ ॥ चिक्षेपपरिघंरोषाच्छिशुपालोमहाबलः ॥ चिच्छेदपरिघंतद्वैयमदंडेनमाधवः ॥
॥ २७ ॥ ततश्चैद्योरुषाविष्टोगृहीत्वाखड्गचर्मणी ॥ प्रद्युम्नंतमुपाधावत्पतंगइवपावकम् ॥२८॥ कार्ष्णिस्तताडतंखड्गंयमदंडेनवेगतः ॥ चू
र्णीबभूवतेनापिनिस्त्रिंशश्चर्मणासह ॥ २९ ॥ पाशिदत्तेनपाशेनसहसायादवेश्वरः ॥ दमघोषसुतंबद्ध्वाविचकर्षरणांगणे ॥ ३० ॥ शिशुपा
लंघातयितुंखड्गंजग्राहरोषतः ॥ तदैवतत्करौसाक्षाद्गदोजग्राहवेगतः ॥ ३१ ॥ ॥ गदउवाच ॥ ॥ परिपूर्णतमेनापिश्रीकृष्णेनमहा
त्मना ॥ वध्योयंदेववचनंभगवन्मावृथाकुरु ॥ ३२ ॥ ॥ श्रीनारदउवाच ॥ ॥ तदाकोलाहलेजातेशिशुपालस्यबंधने ॥ दमघोषोबलिं

 नीत्वाप्रागात्प्रद्युम्नसंमुखे ॥ ३३ ॥ कार्ष्णिस्तमागतंदृष्ट्वात्यक्त्वाशस्त्राणिशीघ्रतः ॥ अग्रतश्चेदिपंशश्वन्ननामशिरसाभुवि ॥ ३४ ॥ मिलि 
त्वाचाशिषंदत्त्वाप्रद्युम्नायमहात्मने ॥ दमघोषोमहाराजःप्राहगद्गदयागिरा ॥ ३५ ॥ ॥ दमघोषउवाच ॥ ॥ प्रद्युम्नत्वंतुधन्योसित्वं
 यदूनांशिरोमणिः ॥ मत्पुत्रेणकृतंयद्वैतत्क्षमस्वदयानिधे ॥ ३६ ॥ ॥ श्रीप्रद्युम्नउवाच ॥ ॥ ममदोषोनतेचायंनतेपुत्रस्यहेप्रभो ॥ सर्वं 
कालकृतंमन्येप्रियमप्रियमेववा ॥ ३७ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्तोदमघोषोपिप्रद्युम्नेनप्रयंत्रितः ॥ शिशुपालंमोचयित्वानीत्वा
गाच्चंद्रिकांपुरीम् ॥ ३८ ॥ प्रद्युम्नस्यबलंश्रुत्वासाक्षाच्छ्रीकृष्णतेजसः ॥ नकेपियुयुधुस्तेनराजानश्चबलिंददुः ॥ ३९ ॥ ॥ इतिश्रीमद्गर्गा
चार्यसंहितायांविश्वजित्खंडे नारदबहुलाश्वसंवादेरंगापिंगवधशिशुपालयुद्धचेदिदेशविजयोनामनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥
॥ श्रीनारदउवाच ॥ ॥ मनुतीर्थेततःस्नात्वाप्रद्युम्नोयदुभिःसह ॥ प्रययौकौंकणान्देशान्दुंदुभीन्नादयन्मुहुः ॥१॥ कौंकणस्थोथमेधावीगदा
युद्धविशारदः ॥ एकाकीमल्लयुद्धेनपरीक्षन्नाययौबलम् ॥२॥ प्रद्युम्नंसबलंप्राहशृणुमेयादवेश्वर ॥ गदायुद्धंदेहिमह्यंमद्बलंनाशयप्रभो ॥ ३ ॥
॥ प्रद्युम्नउवाच ॥ एकतोह्येकतोवीराबलवंतोमहीतले ॥ मानंमाकुरुहेमल्लविष्णुमायातिदुर्गमा ॥ ४ ॥ वयंतुबहवोवीरास्त्वमेकाकीसमा
गतः ॥ अधर्मोयंमहामल्लदृश्यतेयाहिसांप्रतम् ॥ ५ ॥ ॥ मल्लउवाच ॥ यदायुद्धंनकुरुतभवंतोबलशालिनः ॥ मत्पादेधोत्रनिर्यांतुतदाया
स्यामिसांप्रतम् ॥ ६ ॥ ॥ श्रीनारदउवाच ॥ ॥ एवंवदतिमल्लेवैसर्वेयादवपुंगवाः ॥ बभूवुःक्रोधसंयुक्ताःपश्यामस्तस्यमैथिल ॥ ७ ॥ गदो
गदांसमादायबलदेवानुजोबली ॥ तस्थौसोपिगदांनीत्वासर्वेषांपश्यतांनृप ॥ ८ ॥ गदांगरिष्ठांचिक्षेपगदायसमहाबलः ॥ गदोपरिगदां
नीत्वास्वगदांप्राक्षिपद्गदः ॥ ९ ॥ गदस्यगदयासोपिताडितःपतितोभुवि ॥ मृधेच्छांनचकाराशुउद्वमन्रुधिरंमुखात् ॥ १० ॥ कौंकण
स्थोथमेधावीनत्वाप्राहहरेःसुतम् ॥ परीक्षार्थंचभवतामेतत्कार्यंमयाकृतम् ॥ ११ ॥ त्वमेवभगवान्साक्षात्कुतोहंप्राकृतोजनः ॥ क्षमस्वमेप
राधंभोत्वामहंशरणंगतः ॥ १२ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्त्वाथबलिंदत्त्वानमस्कृत्यहरेःसुतम् ॥ कौंकणस्थःपुरींप्रागान्मेधा 
वीक्षत्रियोत्तमः ॥१३॥ कुटकाधिपतिंमौलिंमृगयायांविनिर्गतम् ॥ जग्राहसमहाबाहुःसांबोजांबवतीसुतः ॥ १४ ॥ कार्ष्णिस्तस्माद्बलिंनी

त्वादंडकारण्यंवनंययौ ॥ मुनीनामाश्रमान्पश्यन्स्वसैन्यपरिवारितः ॥ १५ ॥ निर्विंध्यांचपयोष्णींचतापींज्ञात्वाहरेःसुतः ॥ शूर्पारकं
महाक्षेत्रंआर्यद्वैपायनींततः ॥ १६ ॥ ऋष्यमूकंततःपश्यप्रवर्षणगिरिंगतः ॥ पर्जन्योभगवान्साक्षान्नित्यदायत्रवर्षति ॥ १७ ॥ गोकर्णा
ख्यंशिवक्षेत्रंदृष्ट्वाकार्ष्णिःस्वसैन्यकैः ॥ त्रिगर्तान्केरलान्देशान्ययौजेतुंमहाबलः ॥ १८ ॥ अंबष्ठःकेरलाधीशःश्रुत्वावार्तांतुमन्मुखात् ॥
ददौतस्मैबलिंशीघ्रंप्रद्युम्नायमहात्मने ॥ १९ ॥ कृष्णांवेणींतदोत्तीर्यतैलंगान्विषयान्ययौ ॥ सैन्यपादरजोवृंदैरंधीकुर्वन्नभःस्थलम् ॥२०॥
तैलंगस्याधिपोराजाविशालाक्षःप्रकीर्तितः ॥ पुरस्योपवनेरेमेसुन्दरीगणसंयुतः ॥ २१ ॥ मृदंगाद्यैश्चवादित्रैर्मधुरध्वनिसंकुलैः ॥ परैरप्सर
सांरागैर्गीयमानोद्युराडिव ॥ २२ ॥ तंप्राहसुंदरीरामाराज्ञीमंदारमालिनी ॥ रजोव्याप्तंनभोवीक्ष्यशुष्यद्बिंबाधरापरा ॥ २३ ॥ मंदा
रमालिन्युवाच ॥ राजन्नजानामिकदापिदुःखंसुखालकालिभ्रमरास्तवेषा ॥ २४ ॥ द्वारावतीशाध्वरनागवल्लीचयंससुत्थाप्यदिशोज
यार्थम् ॥ विजित्यसर्वान्नृपचेदिपान्ससमागतोसौयदुराजराजः ॥ २५ ॥ धुंकारशब्दंशृणुदुंदुभीनांचीत्कारफूत्कारयुतंद्विपानाम् ॥ कोदंड
टंकारमयंपराणांकल्पांतसारस्वतनादकारम् ॥ २६ ॥ त्वरंबलिंप्रेषयशंबरारयेप्रधावतीःपश्यनरेंद्रसुन्दरीः ॥ च्युतप्रसूनाःश्रमवारिवर्षिणी
र्वनप्रवेशाःस्फुटकेशमंडनाः ॥ २७ ॥ ॥ श्रीनारदउवाच ॥ ॥ पत्नीवाक्यंततःश्रुत्वाविशालाक्षोतिधर्षितः ॥ प्रद्युम्नसंमुखेसोपिबालिंनी
त्वासमाययौ ॥ २८ ॥ तेनसंपूजितःसाक्षात्प्रद्युम्नोधन्विनांवरः ॥ स्नात्वापंचाप्सरस्तीर्थंमहाराष्ट्रंततोययौ ॥ २९ ॥ महाराष्ट्राधिपोराजा
विमलोनामवैष्णवः ॥ भक्त्यापरमयाकार्ष्णिपूजयामाससर्वतः ॥ ३० ॥ तथाहिकर्णाटपतिःसहस्रजित्स्वतःसमानीयबलिंमहात्मने ॥
संपूजयामासशुभार्थहेतवेश्रीशंबरारिंजगतःप्रभुंपरम् ॥ ३१ ॥ प्रद्युम्नोभगवान्साक्षाद्यादवैःसहमैथिल ॥ करूषान्विषयान्प्रागाज्जेतुंयोगीवदे
हजान् ॥ ३२ ॥ महारंगपुरेतत्रवृद्धशर्मामहामतिः ॥ भर्ताथश्रुतदेवायावसुदेवस्वसुर्नृप ॥ ३३ ॥ तस्यपुत्रोदंतवक्रःकृष्णशत्रुःप्रकीर्तितः
॥ शिशुपालइवक्रुद्धोयोद्धुंचक्रेमनःस्वयम् ॥ ३४ ॥ मात्रापित्रावारितोपिदैत्योदैत्यानुव्रतः ॥ यादवान्घातयिष्यामिकोपमित्थंचका
रह ॥ ३५ ॥ आदायसगदांगुर्वींलक्षभारविनिर्मिताम् ॥ एकाकीप्रययौयोद्धुंप्रद्युम्नबलसंमुखे ॥ ३६ ॥ दंतवक्रंकृष्णवर्णंकज्जलाद्रिसमप्रभम्

ललज्जिह्वं घोररूपं तालवृक्षदशोच्छ्रितम् ॥ ३७ ॥ किरीटकुंडलधरं हेमवर्मविभूषितम् ॥ किंकिणीजालसंयुक्तं चलच्चरणनूपुरम् ॥ ३८ ॥
कंपयंतं भुवं वेगात्पातयंतं गिरीन्द्रुमान् ॥ घातयंतं स्वगदया कृतांतमिव दुर्जनान् ॥ ३९ ॥ तं दृष्ट्वा यादवाः सर्वे भयं प्रापुर्मृधांगणे ॥ आगते दं
तवक्रे च महान्कोलाहलो ह्यभूत् ॥ ४० ॥ प्रद्युम्नः प्रेषयामास तस्योपरि महद्बलम् ॥ अष्टादशाक्षौहिणीनां धनुष्टंकारयन्मुहुः ॥ ४१ ॥ बाणैः
परश्वधैराजन्छतघ्नीभिर्भुशुंडिभिः ॥ तं तेऽघ्नुर्यादवाः सर्वे सर्वतोऽद्रिं यथा गजाः ॥ ४२ ॥ दंतवक्रः स्वगदया करींद्रानुत्कटान्बहून् ॥ पातयामा
स राजेंद्र भिन्नकुंभस्थलान्मृधे ॥ ४३ ॥ कांश्चित्पादेषु चोन्नीय किंकिणीजालनादितान् ॥ सशृंखलान्सनीडांस्ताँल्लोलघंटारणत्स्वनान् ॥
॥ ४४ ॥ वातस्तूलमिवाकाशे चिक्षेप शतयोजनम् ॥ शुंडादंडेषु कांश्चिद्वै गृहीत्वा दैत्यपुंगवः ॥ ४५ ॥ भ्रामयित्वा गजान्दिक्षु नदतः प्राक्षिप
द्रुषा ॥ कांश्चिद्गजानं सयोश्च कक्षयोरुभयोरपि ॥४६॥ पद्भ्यामाक्रम्य शुशुभे दैत्यः कालाग्निरुद्रवत् ॥ रथान्ससूतान्साश्वांश्च सध्वजान्सम
हारथान् ॥ चिक्षेप गगने वीरः पद्मानीव प्रभंजनः ॥४७॥ तुरगांश्च पदातींश्च प्राक्षिपद्गगने बलात् ॥ अधोमुखा ऊर्ध्वमुखा राजपुत्रा महाबलाः ॥
॥ ४८ ॥ सशस्त्रा रत्नकेयूरसंयुक्तास्तारका इव ॥ आकाशात्प्रपतंतस्ते वमंतो रुधिरं मुखात् ॥ ४९ ॥ बलं विलोडयामास गदया दैत्यपुंगवः ॥
द्रंष्ट्रया प्रलयाब्धिं श्रीवाराह इव मैथिल ॥ ५० ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायां विश्वजित्खंडे नारदबहुलाश्वसंवादे कौंकणकुटकत्रि
गर्तकेरलतैलंगमहाराष्ट्रकर्णाटकविजये कुरूपदेशगमनं नाम दशमोऽध्यायः ॥ १० ॥ ॥ श्रीनारद उवाच ॥ ॥ तदा श्रीकृष्णपु
त्राणामष्टादशमहारथाः ॥ सक्षतं कारयामासुर्दन्तवक्रम्महाबलम् ॥ १ ॥ दन्तवक्रोऽतिशुशुभे सक्षतो रक्तधारया ॥ लाक्षयेव यथा सौधं प्रहा
रैर्नान्वचिंतयत् ॥ २ ॥ कृतवर्मा च बाणौघैस्तं जघान रणाङ्गणे ॥ युयुधानश्च खड्गेन शक्त्याक्रूरो महाबलम् ॥ ३ ॥ सारणस्तं कुठारेणाहन
त्तं रोहिणीसुतः ॥ दन्तवक्रोऽपि गदया युयुधानं तताडह ॥ ४ ॥ करेण कृतवर्माणमक्रूरं स्वांघ्रिणाहनत् ॥ सारणं भुजवेगेन का रूपो रणदुर्मदः ॥
॥ ५ ॥ अक्रूरः कृतवर्मा च युयुधानोऽथ सारणः ॥ निपेतुर्मूर्छिता भूमौ ... ॥ ६ ॥ ततो गदां समादाय सांबो जाम्बवतीसुतः ॥ दंत ॥१३९॥
वक्रं तताडांसे जगर्ज घनवद्बली ॥ दंतवक्रोऽथ चिक्षेप स्वगदां साम्बसम्मुखे ॥ ७ ॥ गदामापततीं वीक्ष्य सांबो जाम्बवतीसुतः ॥ गदोपरि गदां

नीत्वागदयातन्तताडह ॥ ८ ॥ दन्तवक्रोगदांत्यक्त्वासांबंजाम्बवतीसुतम् ॥ गृहीत्वापातयामासभुजाभ्यांरणमंडले ॥ ९ ॥ साम्बस्तदा
समुत्थायगृहीत्वापादयोश्वतम् ॥ अपोथयद्भूमिपृष्ठेतदद्भुतमिवाभवत् ॥ १० ॥ दन्तवक्रःसमुत्थायसाट्टहासंतदाकरोत् ॥ ननादतेनब्र
ह्माण्डंसतलोकैर्बिलैःसह ॥ ११ ॥ पताकाढयेनदिव्येनसहस्रादित्यवर्चसा ॥ सहस्रहययुक्तेनरथेनस्निग्धनादिना ॥ १२ ॥ आगच्छंतंन
मंतंचप्रद्युम्नंधन्विनांवरम् ॥ दन्तवक्रोपितंवीक्ष्यप्राहेदंपरुषंवचः ॥ १३ ॥ ॥ दन्तवक्रउवाच ॥ ॥ यूयञ्चयादवाःसर्वेवृष्णयोह्यन्धका
दयः ॥ अलपसत्त्वाजनास्तुच्छाविद्रुतायुद्धभीरवः ॥१४॥ ययातिशापसंभ्रष्टाभ्रष्टराज्यागतत्रपाः ॥ एकोहंबहवोयूयंयुष्माभिश्चकृतंमृधम् ॥
॥ १५ ॥ अधर्मवर्तिभिस्तुच्छैर्धर्मशास्त्रंविलोपितम् ॥ पूर्वंपितातेश्रीकृष्णोनन्दस्यपशुरक्षकः ॥ १६ ॥ गोपालोच्छिष्टभोजीचसोद्यैवया
दवेश्वरः ॥ हैयङ्गवीनंदध्याज्यदुग्धतक्रादिकंरसम् ॥ १७ ॥ चोरयामासगोपीनांरसिकोरासमण्डले ॥ जरासन्धभयात्सोपिसमुद्रंशरण
ङ्गतः ॥ १८ ॥ सोद्यैवयदुनाथोभूद्योभीरुःकालसंमुखे ॥ तेनदत्तंवृष्णिराज्यमुग्रसेनंसमेत्यसः ॥ १९ ॥ करिष्यत्यलपसारार्थोराजसूयंक्र
तूत्तमम् ॥ दुरत्ययाकालगतिर्जातंचित्रमहोजगत् ॥ २० ॥ अध्यास्तेसिंहशार्दूलंशृगालोह्यतिदुर्बलः ॥ २१ ॥ ॥ श्रीप्रद्युम्नउवाच ॥
पुरावैकुण्डिनपुरेयदूनांबलमूर्जितम् ॥ त्वयादृष्टंनकिंत्वत्रपश्याद्यैवविनिन्दक ॥ २२ ॥ युष्मान्संबंधिनोज्ञात्वानेच्छेद्युद्धंकरूषप ॥
बलात्त्वंयुद्धमाकार्षीर्धर्मशास्त्रंत्वपाकृतम् ॥२३॥ नन्दोद्रोणोवसुःसाक्षाज्जातोगोपकुलेपिसः ॥ गोपालायेचगोलोकेकृष्णरोमसमुद्भवाः ॥
॥ २४ ॥ राधारोमोद्भवागोप्यस्ताश्चसर्वाइहागताः ॥ काश्चित्पुण्यैःकृतैःपूर्वैःप्राप्ताःकृष्णंवरैःपरैः ॥ २५ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णो
भगवान्स्वयम् ॥ असंख्यब्रह्माण्डपतिर्गोलोकेशःपरात्परः ॥ २६ ॥ यस्मिन्सर्वाणितेजांसिविलीयन्तेस्वतेजसि ॥ तंवदंतिपरेसाक्षात्परिपू
र्णतमःस्वयम् ॥ २७ ॥ पूर्णस्यलक्षणंयत्रयंपश्यंतःपृथक्पृथक् ॥ भावेनापिजनाःसोयंपरिपूर्णतमः स्वयम् ॥ २८ ॥ उग्रसेनोथराजे
न्द्रोमरुतोनामयःपुरा ॥ श्रीकृष्णस्यवरेणासौयादवेन्द्रोबभूवह ॥ २९॥ निरंकुशोमहामूर्खोविनिन्दसिमहाजनम् ॥ सनःप्रार्थयतेकिंचिद्य
थासिंहःशिवारुतम् ॥ ३० ॥ ॥ श्रीनारदउवाच ॥ ॥ एवंवचस्तदाश्रुत्वादन्तवक्रोमदोत्कटः ॥ गदांगुर्वींसमादायप्राद्रवत्तद्रथोप

रि ॥ ३१ ॥ गदयापातयामाससहस्रंघोटकान्नदन् ॥ घोटकादुद्रुवुःसर्वेदृष्ट्वारूपंभयंकरम् ॥ ३२ ॥ प्रद्युम्नोपिगदांनीत्वातंतताड
दृढंहृदि ॥ तत्प्रहारेणदैत्येंद्रःकिंचिद्व्याकुलमानसः ॥ ३३ ॥ तयोश्चगदयायुद्धंघोररूपंबभूवह ॥ गदाभ्यांसक्षतौतौद्वौमर्दयन्तौपरस्परम्
॥ ३४ ॥ नदन्तौसङ्गरेराजन्गिरौकेसरिणौयथा ॥ दन्तवक्रोभुजाभ्यांतंगृहीत्वाश्रीहरेःसुतम् ॥ भूमौनिपातयामाससिंहःसिंहमिवौज
सा ॥ ३५ ॥ प्रद्युम्नोपिसमुत्थायगृहीत्वाभुजयोर्बलात् ॥ भ्रामयित्वाभुजाभ्यांतंपातयामासभूतले ॥ ३६ ॥ प्रद्युम्नस्यप्रहारेणसोपतद्रु
धिरंवमन् ॥ चूर्णितास्थिःखिन्नगात्रोमूर्च्छितोविह्वलाकृतिः ॥३७॥ गिरीन्द्रइवभूपृष्ठेरेजेशक्रायुधाहतः ॥ तत्प्रपातेनवसुधाचचालसजला
भवत् ॥ ३८ विचेलुर्दिग्गजास्ताराःसमुद्राश्चचकंपिरे ॥ पातशब्देनराजेन्द्रत्रिलोकीबधिरीकृता ॥ ३९ ॥ तदैवकारूषपतिर्महात्माश्रीवृद्ध
शर्माश्रुतदेवयाच ॥ राज्यामहारंगपुराद्यदूनांसमाययौसुंदरसन्धिकारी ॥ ४० ॥ दत्त्वाबलिंमैथिलशम्बरारयेसुतंगृहीत्वाकृतसंधिरग्रतः ॥
तथायदूनांप्रवरैःप्रपूजितःपुनर्महारङ्गपुरंसमाययौ ॥४१॥ इति श्री०विश्व०ना०दंतवक्त्रयुद्धेकरूषदेशविजयोनामैकादशोऽध्यायः ॥११॥
॥ श्रीनारदउवाच ॥ ॥ अर्णवंदक्षिणंस्नात्वाप्रद्युम्नोयादवाधिपः ॥ उशीनरांस्ततोजेतुमाजगामबलैःसह ॥ १ ॥ कोटिशःकोटिशोगावो
यत्रदेशेचरंतिहि ॥ गोपालमंडलैर्युक्ताव्रजंत्योभव्यमूर्तयः ॥ २ ॥ औशीनराःक्षीरपानागौरवर्णामनोहराः ॥ हैयंगवीनमादायतेययुःका
र्ष्णिसंमुखे ॥ ३ ॥ तैःपूजितःशंबरारिर्ददौतेभ्योमहाधनम् ॥ गजान्रथान्हयान्दिव्यवस्त्रभूषादिहर्षितः ॥ ४ ॥ चंपावतीनामपुरीमणिर
त्नसमन्विता ॥ विराजतेयत्रनृपैःसर्पैर्भोगवतीयथा ॥५॥ चंपावतीपतिर्वीरोनाम्नाहेमांगदोनृपः ॥ नीत्वाबलिंसमेत्याशुश्रीकार्ष्णिप्रणना
मह ॥ ६ ॥ तस्मैतुष्टःशंबरारिर्मालांकिंजल्किनींददौ ॥ सहस्रदलशोभाढ्यंपद्मंदिव्यंददौपुनः ॥ ७ ॥ अथकार्ष्णिर्महाबाहुःस्वसैन्यप
रिवारितः ॥ विदर्भान्प्रययौधन्वीदुंदुभीन्नादयन्मुहुः ॥ ८ ॥ भीष्मकःकुंडिनपतिरागतंरुक्मिणीसुतम् ॥ आनीयपूजयामाससमैन्यंबहुभि
र्धनैः ॥ ९ ॥ मातामहंततोनत्वारुक्मिणीनंदनोबली ॥ कृतदेशांश्चदरदान्प्रययौयादवैःसह ॥ १० ॥ दारदैःकृतजैर्वीरैःपूजितोयादवेश्व
रः ॥ मलयाचलपाटीरवायुभिःपरिसेवितः ॥ ११॥ श्रीखंडकेतकीपुष्पगंधाक्तमलयाचलं॥ अगस्त्यंमुनिशार्दूलंपीताब्धिंसददर्शह ॥१२॥

कृतांजलिपुटःकार्ष्णिर्नमस्कृत्यमहामुनिम् ॥ स्थितोभूद्रुटजेसाक्षादाशीर्भिरभिनंदितः ॥ १३ ॥ ॥ ॥ श्रीप्रद्युम्नउवाच ॥
॥ दृश्यंपदार्थंतुजगत्सत्यवद्वर्ततेकथम् ॥ मुक्तोब्रह्मांशकोभूत्वाबद्ध्यतेयंकथंगुणैः ॥ १४ ॥ एतत्प्रश्नंममब्रूहिनितरांमुनिसत्तम ॥ त्वंस
र्वविद्दिव्यचक्षुःसर्वब्रह्मविदांवरः ॥ १५ ॥ ॥ अगस्त्यउवाच ॥ त्वंसाक्षात्कृष्णचंद्रस्यपरिपूर्णतमस्यच ॥ पुत्रोसिपृच्छसेमांवाली
लामात्रमिदंवचः ॥ १६ ॥ लोकसंग्रहमेवार्थंकुर्वन्देवोहरिर्यथा ॥ तथानृणांचकल्याणंकुर्वन्विचरसिप्रभो ॥ १७ ॥ यथासत्यस्यसूर्यस्य
बिंबंवारिषुसत्यवत् ॥ दृश्यतेसत्यवद्दृश्यंप्रधानपरयोस्तथा ॥ १८ ॥ काचेमुखंगुणेसर्पंसैकतेजीवनंयथा ॥ तथायंसन्देहगुणैर्बध्यतेप्रेक्ष्य
तांस्वयम् ॥ १९ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ कथंनबद्ध्यतेदेहीयेनोपायेनतन्मुने ॥ वैराग्येणदृढेनापिब्रूहिब्रह्मविदांवर ॥ २० ॥ अग
स्त्यउवाच ॥ विवेकंयःसमाश्रित्यभजेद्ब्रह्मसनातनम् ॥ मनोमयंजगन्मत्वासव्रजेत्परमंपदम् ॥२१॥ जन्ममृत्यूशोकमोहौजराबाल्ययुवाद
यः ॥ अहंमदोव्याधिभयंसुखंशोकःक्षुधारतिः ॥ २२ ॥ आधिर्व्याधिस्तस्यराजन्नभवंतिकदाचन ॥ आत्मानिरीहोह्यतनुःसर्वतश्चानहं
कृतिः ॥ शुद्धोगुणाश्रयःसाक्षात्परोनिष्कलआत्मदृक् ॥ २३ ॥ ज्ञानात्मकःसदापूर्णोविदितोयोमुनीश्वरैः ॥ तंब्रह्मपरमात्मानंज्ञात्वायंवि
चरेत्सुखी॥२४॥अस्मिन्छयानेजागर्तिसर्वंपश्यतियःपुमान् ॥ नायंतंवेत्तिपश्यंतंनपश्यतिकदाचन ॥२५॥ नभोग्निपवनःकोष्ठकाष्ठप्रोद्गत
रेणुभिः ॥ नसज्जतेगुणैर्ब्रह्मवर्णैश्चस्फटिकोयथा॥२६॥लक्षणाभिर्ध्वनिर्व्यंग्यैर्ज्ञायतेनकदाचन ॥ कुतस्तुलौकिकैर्वाक्यैस्तस्मैश्रीब्रह्मणेनमः
॥२७॥केचित्कर्मवदंत्येनंकेचित्कालंतथापरे ॥ कर्तारंयोगमपरेसांख्यंब्रह्मवदंतिके ॥२८॥ केचित्तंपरमात्मानंवासुदेवंवदंतिके॥प्रत्यक्षेणानु
मानेननिगमेनात्मसंविदा॥२९॥विचार्यतद्ब्रह्मपरंनिःसंगोविचरेदिह॥यथांभसाप्रचलतातरवोपिचलाइव ॥३०॥ चक्षुषाभ्राम्यमाणेनदृश्यते
चलतीवभूः ॥ तथागुणानांभ्रमणैर्भ्रमतामनसायतः ॥ ३१॥ भ्राम्यमाणःसदाराजन्करेणालातचक्रवत् ॥ करिष्यामिकरोमीतिममेदंतवचा
ब्रुवन्॥त्वमहंचसुखीदुःखीसदाज्ञानविमोहिताः ॥३२॥ सत्वंरजस्तमइतिप्रकृतेर्नात्मनोगुणाः ॥ तैरिदंजगदाव्याप्तमोतप्रोतंपटंयथा ॥३३॥
ऊर्ध्वंगच्छंतिसत्त्वस्थामध्येतिष्ठंतिराजसाः ॥ जघन्यगुणवृत्तिस्थाअधोगच्छंतितामसाः ॥ ३४ ॥ अंधकारेगुणात्कार्ष्णेसर्पबुद्धिर्बिभेति

च ॥ आरान्मरीचिकांवारितथेदंमन्यतेजगत् ॥ ३५ ॥ गतागतंसुखंविद्धियथामंडलवर्तिना ॥ तथानृणांसुराणांचदुःखंनरकवासिनाम् ॥
॥ ३६ ॥ घनावलिर्देहगुणाअहोरात्रमृतेर्यथा ॥ यथासार्थंतथादृश्यंनकिंचित्सर्वदैवहि ॥ ३७ ॥ पक्षेजातेयथानीडात्पारेयातेयथोडुपात् ॥
ज्ञानेप्राप्तेतथालोकाद्दर्पणात्किंप्रयोजनम् ॥ ३८ ॥ यथोल्कयादृष्टमर्थमुल्कयाकिंप्रयोजनम् ॥ तथामार्गंनिधायाशुविचरेत्समदृङ्मुनिः॥
॥ ३९ ॥ यथेंदुरुदपात्रेषुयथाग्निःकाष्ठसंचये ॥ तथैकोभगवान्साक्षात्परात्मानेकवत्स्थितः ॥ ४० ॥ घटेमठेयथाकाशोवर्ततेंऽतर्बहिर्महान्
॥ तथापरात्मानिर्लिप्तोदेहेषुस्वकृतेषुच ॥ ४१ ॥ यःकृष्णभक्तःशांतात्माज्ञाननिष्ठोविरागवान् ॥ तंनस्पृशंतीहगुणाःकानीवबिसिनी
दलम् ॥ ४२ ॥ ज्ञानीसदानंदमयोबालवद्विचरेत्तनुम् ॥ नपश्यतिधृतंवासोमदिरामदमत्तवत् ॥ ४३ ॥ सूर्योदयेयथावस्तुगृहेराजन्प्रदृश्य
ते ॥ दूरीकृत्यतथाज्ञानंसाक्षात्तत्वंतनौवृहत् ॥ ४४ ॥ यथेंद्रियंपृथग्द्वारैरर्थोबहुगुणाश्रयः ॥ नानेयतेतथाब्रह्मकविभिःशास्त्रवर्त्मभिः ॥
॥ ४५ ॥ परंपदंवदंत्येतत्केचिद्वैवैष्णवंनृप ॥ केचिद्वैव्याप्यवैकुंठंशांतंकेपिततःपरम् ॥ ४६ ॥ कैवल्यंतद्ब्रह्मकेचित्परमंधामचाव्ययम् ॥
अक्षरंचपरेकाष्ठंगोलोकंप्रकृतेःपरम् ॥ ४७ ॥ केचिन्निकुंजंविशदंवदंतीहपुराविदः ॥ ज्ञानवैराग्यभक्तिभ्यःप्राप्नोतीहनचान्यतः ॥ ४८ ॥
श्रीकृष्णचंद्रस्यहरेःपरस्यकैवल्यनाथस्यपरात्परस्य ॥ व्रजेत्पदंश्रीपुरुषोत्तमस्ययत्प्राप्यभक्तोननिवर्ततेऽथ ॥ ४९ ॥ ॥ श्रीनारदउ
वाच ॥ ॥ इतिभागवतंज्ञानंश्रुत्वाकार्ष्णिर्महामुनिम् अगस्त्यंपूजयामासभक्त्यानत्वाकृतांजलिः ॥ ५० ॥ ॥ इति श्रीमद्गर्गाचार्य
संहितायां० विश्वजित्खंडे ना० उशीनरविदर्भकुंतदरददेशविजयेअगस्त्यकार्ष्णिज्ञानप्रस्तावोनामद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥
॥ श्रीनारदउवाच ॥ ॥ कृतमालांताम्रपार्णींस्नात्वाश्रीयादवेश्वरः ॥ यदुभिःसैनिकैःसार्द्धंराजन्राजपुरंययौ ॥ १ ॥ शाल्वोराजपुराधी
शःश्रुत्वामन्मुखतोयदून् ॥ आगतान्सययौशीघ्रंद्विविदंवानराधिपम् ॥ २ ॥ द्विविदोह्यतिसंक्रुद्धोवीरोमित्रसहायकृत ॥ शंबरारिबलं
प्रागाच्चालयन्वसुधातलम् ॥ ३ ॥ विददारनखैर्दंतैःपताकाध्वजपट्टिकाम् ॥ कारमीरकंबलैर्युक्तासमुद्रान्स्वर्णभूषितान् ॥ ४ ॥ रथानुत्पा ॥१४१॥
तयामासगजानारुह्यवेगतः ॥ अश्वान्विद्रावयामासभ्रूभंगैर्वानरस्वनैः ॥ ५ ॥ इत्थंकोलाहलेजातेप्रद्युम्नोधन्विनांवरः ॥ आजगामरथेनाशु

धनुष्टंकारयन्मुहुः ॥ ६ ॥ द्विविदस्तद्रथस्याराडुचकामममदोत्कटः ॥ छत्रंध्वजंस्वपुच्छेनकंपयन्सहयंरथम् ॥ ७ ॥ प्रद्युम्नःस्वधनुष्को टयामस्तकेतंचकर्षह ॥ कपिस्तदातिकुपितोमुष्टिनातंतताडह ॥ ८ ॥ प्रद्युम्नोधनुरादायसज्यंकृत्वाविधानतः ॥ आकृष्यकर्णपर्यंतं विशिखेनतताडतम् ॥ ९ ॥ विशिखोभ्रामयित्वातंगगनेशतयोजनम्॥प्रहरार्द्धेनराजेंद्रलंकायांसंन्यपातयत् ॥ १० ॥ रक्षोभिःसहतद्युद्धंबभू वघटिकाद्वयम् ॥ न्यपातयत्सरक्षांसित्रिकूटश्चारुरोहह ॥ ११ ॥ प्रोच्चक्रामत्रिकूटात्समैनाकशिखरोपरि ॥ मैनाकात्सिंहलंचैवसारतंचाय यौपुनः ॥ १२ ॥ शनैःशनैर्वानरेंद्रोहिमाचलगिरिंगतः ॥ हिमाचलस्यशिखरात्प्राग्ज्योतिषपुरंययौ ॥ १३ ॥ मल्लारदेशाधिपतिंप्रद्युम्नोथ यदूत्तमः ॥ नादयन्दुंदुभिंराजन्विजित्यजगृहेबलिम् ॥१४॥ दक्षिणांमथुरांदृष्ट्वाप्रद्युम्नोयादवैःसह॥महाक्षेत्रंरामकृतंप्रययौसेतुबंधनम्॥१५॥ शतयोजनविस्तीर्णंसमुद्रंमकरालयम् ॥ वीक्ष्यकार्ष्णिर्महावीरस्तस्थौवेलांसमेत्यसः॥ १६ ॥ सांबादीन्ससमाहूयाक्रूराद्यान्यादवान्स्वकान् ॥ सभायामुद्धवंप्राहकार्ष्णिर्योगेश्वरेश्वरः ॥ १७ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ विभीषणोद्वीपपतिर्महौजालंकापतिःकौणपवृंदमुख्यः ॥ वदामिकिंभोजवरायमंत्रिन्नचेद्बलिंयच्छतिमेवदाशु ॥ १८ ॥ ॥ उद्धवउवाच ॥ ॥ त्वंदेवदेवःपुरुषोत्तमोत्तमःश्रीकृष्णचंद्रःपरमत्वमे वहि ॥ त्वंपृच्छसेलोकइवप्रभोमांमायापितेयोगिवरैर्दुरत्यया ॥ १९ ॥ ब्रह्मादयोयस्यपरानुशासनंवहंतिमूर्ध्नासततंप्रधर्षिताः ॥ सएवसा क्षात्पुरुषोसिभूमन्दासानुदासोस्मिवदामिकिंते ॥ २० ॥ ॥ नारदउवाच ॥ ॥ इत्युक्तःपश्यतांतेषांप्रद्युम्नोभगवान्हरिः ॥ पत्रंगृही त्वाव्यलिखत्संदेशंमैथिलेश्वर ॥२१॥ श्रीभोजराजायबलात्प्रयच्छबलिंनचेन्मेवचनंशृणुत्वम् ॥ कोदंडमुक्तैर्विशिखैश्चसेतुंबद्ध्वागमिष्यामि ससैन्यसंघः ॥ २२ ॥ लिखित्वेदंसमादायकोदंडंचंडविक्रमः ॥ बाणेपत्रंसमाधायकर्णांतंतंततानह ॥ २३ ॥ प्रत्यंचास्फोटनेनैवटंकारो भूत्तडित्स्वनः ॥ ननादतेनब्रह्माण्डंसप्तलोकैर्बिलैःसह ॥ २४ ॥ कोदंडमुक्तोविशिखोद्योतयन्मंडलंदिशाम् ॥ विभीषणसभामध्येसंपपातत डित्स्वनः ॥ २५ ॥ तदैवराक्षसाःसर्वेप्रोत्थिताश्चकिताइव ॥ सकंचुकानिशस्त्राणिजगृहुर्वेगतःखलाः ॥ २६ ॥ पत्रंबाणात्समाकृष्यपठि त्वाथविभीषणः ॥ विस्मितोभूत्सभामध्येराक्षसेंद्रोमहाबलः ॥ २७ ॥ प्राप्तंतदैवसदसिशुक्राचार्य्यंविभीषणः ॥ पूजयामासपाद्याद्यैर्नत्वाप्रा

हकृतांजलिः ॥ २८ ॥ विभीषणउवाच ॥ ॥ भगवन्कस्यबाणोयंभोजराजस्तुकःक्षितौ ॥ किंबलंतस्यमेब्रूहित्वंसाक्षाद्दिव्यदर्शनः॥२९॥
॥ श्रीशुकउवाच ॥ ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ यस्यश्रवणमात्रेणराजन्पापंप्रशाम्यति ॥३०॥ पुराहिब्रह्मणःपुत्राःसनका
द्यादिगंबराः ॥ विष्णोर्लोकंययुर्दिव्यंचरंतोभुवनत्रयम् ॥३१॥दिगंबराञ्छिशून्मत्वाजयोविजयएवतान् ॥ द्वारपालौरुरुधतुर्वेत्रेणांतःपुरः
स्थितौ ॥ ३२ ॥ अशपंस्तौचतेक्रुद्धाःकृष्णदर्शनलालसाः ॥ भूयास्तमसुरौदुष्टौशुद्धौहिजन्मभिस्त्रिभिः ॥ ३३ ॥ एवंशप्तौस्वभवनात्प
तंतौभूमिमंडले ॥ जज्ञातेतौदितेःपुत्रौदैत्यदानववंदितौ ॥ ३४ ॥ हिरण्यकशिपुर्ज्येष्ठोहिरण्याक्षोनुजस्तथा ॥ भगवान्यज्ञवाराहोभूत्वा
क्ष्मामुद्धरञ्जलात् ॥ ३५ ॥ जघानमुष्टिनादैत्यंहिरण्याक्षंमहाबलम् ॥ हिरण्यकशिपुंसाक्षान्नृसिंहश्चंडविक्रमः ॥३६॥ ददारजठरेतंवैकाया
धवसहायकृत् ॥ भ्रातरौतौपुनर्जातौकेशिन्यांविश्रवःसुतौ ॥ ३७ ॥ रावणःकुंभकर्णश्चसर्वलोकैकतापनौ ॥ सायकैराघवस्यापिपेततुर्युद्ध
मण्डले ॥ ३८ ॥ राक्षसेंद्रौमहावेगौससैन्यौपश्यतस्तव ॥ तृतीयेस्मिन्भवेजातौक्षत्रियाणांकुलेकिल ॥३९॥ शिशुपालोदन्तवक्रोवर्तमानौ
महाबलौ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् ॥४०॥ असंख्यब्रह्मांडपतिर्गोलोकेशःपरात्परः ॥ जातस्तयोर्वधार्थाययदुवंशेह
रिःस्वयम् ॥ ४१ ॥ यादवेंद्रोभूरिलीलोद्वारकायांविराजते ॥ युधिष्ठिरमहायज्ञेयुद्धेशाल्वस्यमाधवः ॥ ४२ ॥ शिशुपालंदंतवक्रंहनिष्यति
नसंशयः ॥ तस्यपुत्रःशंबरारिर्दिग्जयार्थीविनिर्गतः ॥ ४३ ॥ विजेष्यतिनृपान्सर्वाञ्जंबुद्वीपस्थितान्बलान् ॥ जितेषुसत्सुदेवेषुद्वारकायां
यदूत्तमः ॥ उग्रसेनोभोजराजोराजसूयंकरिष्यति ॥ ४४ ॥ तस्यापिकोदंडविनिर्गतोबलात्प्रचंडवेगोविशिखस्त्विहागतः ॥ तन्नामचिह्नो
तितडित्स्वनोबभौप्रद्योतयन्राक्षसमंडलंदिशाम् ॥ ४५ ॥ ॥ नारदउवाच ॥ ॥ श्रीरामभक्तोथविभीषणोसौविज्ञायकृष्णंनृपराम
चंद्रम् ॥ नीत्वाबलिंकौणपवृन्दमुख्यःसमाययौशंबरशत्रुसेनाम् ॥ ४६ ॥ तदावतीर्याशुमहांबरात्स्फुरद्घनद्युतिर्दीर्घवपुर्जपेक्षणः ॥ प्रद
क्षिणीकृत्यहरेःसुतंपुनःकृतांजलिःसंमुखआस्थितोभवत् ॥ ४७ ॥ ॥ विभीषणउवाच ॥ ॥ नमोभगवतेतुभ्यंवासुदेवायवेधसे ॥ प्रद्यु
म्नायानिरुद्धायनमःसंकर्षणायच ॥४८॥ नमोमत्स्यायकूर्मायवराहायनमोनमः ॥ वामनायनमस्तुभ्यंनृसिंहायनमोनमः ॥४९॥ नमः

श्रीरामचंद्रायभार्गवायनमोनमः ॥ नमोबुद्धायशुद्धायकल्किनेचार्तिहारिणे ॥ ५० ॥ ॥ नारदउवाच ॥ ॥ इत्युक्त्वाश्रीहरेःपुत्रंपूज
यामासमैथिल ॥ उपचारैःषोडशभिर्भक्त्यापरमयार्द्रदृक् ॥ ५१ ॥ तस्मैतुष्टःशंबरारिर्ददौज्ञानंविरक्तिमत् ॥ भक्तिंशांतिकरींसाक्षाद्यां
विदुःप्रेमलक्षणाम् ॥ ५२॥ ब्रह्मदत्तंमहादिव्यंपद्मरागंशिरोमणिम् ॥ पौलस्त्येनपुरादत्तांरत्नमालांस्फुरत्प्रभाम् ॥५३॥ चंद्रकांतिमणिंतस्मै
चंद्रदत्तंददौपुनः ॥ पीतांबरंपरंप्रादात्प्रद्युम्नःपरमःप्रभुः ॥ ५४ ॥ बिभीषणोथप्रद्युम्नंनत्वादत्वाबलिंततः ॥ जगामलंकांसगणोराक्षसेंद्रो
महाबलः ॥५५॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायांविश्वजित्खण्डेनारदबहुलाश्वसंवादेशाल्वमल्लारलंकाविजयोनामत्रयोदशोध्यायः॥१३॥
॥ श्रीनारदउवाच ॥ ॥ ऋषभाद्रिंततोदृष्ट्वाश्रीरङ्गाख्यंहरेःसुतः ॥ कामकोष्णींपुरींकाञ्चींनदींप्राचींसरिद्वराम् ॥ १ ॥ कावेरींचतदो
त्तीर्यसह्याद्रिविषयंययौ ॥ यादवैःसहितःसाक्षात्प्रद्युम्नोभगवान्हरिः ॥ २ ॥ शिबिरेषुसमायान्तंमुक्तकेशंदिगंबरम् ॥ अवधूतंप्रधावन्तं
पुष्टाङ्गंरजसावृतम् ॥३॥ बालास्तमनुधावन्तस्तलशब्दैरितस्ततः ॥ कोलाहलंप्रकुर्वन्तोहसंतोमैथिलेश्वर॥तंदृष्ट्वाचोद्धवंप्राहकार्ष्णिर्बुद्धिम
तांवरः ॥ ४ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ कोयंपुष्टवपुर्धावन्बालोन्मत्तपिशाचवत् ॥ तिरस्कृतोपिहसतिजनैरानन्दवान्महान् ॥५॥ उद्धवउवा
च ॥ ॥ अयंपरमहंसाख्योवधूतोवाहरेःकला ॥ सदानन्दमयः साक्षाद्दत्तात्रेयोमहामुनिः ॥ ६ ॥ यस्यप्रसादात्परमांसिद्धिंप्रापुःपरेनृ
पाः ॥ सहस्रार्जुनमुख्यायेयदुकायाधवादयः ॥ ७ ॥ ॥ श्रीनारदउवाच ॥ ॥ इतिश्रुत्वाशम्बरारिर्नत्वासम्पूज्यतंमुनिम् ॥ संस्था
प्यचासनेदिव्येपप्रच्छेदंयदूत्तमः ॥ ८ ॥ प्रद्युम्नउवाच ॥ ॥ भगवन्मेहृदिस्थंवैसन्देहंनाशयप्रभो ॥ जगतोब्रह्ममार्गांश्चहेत्वंतंब्रूहितत्त्वतः ॥
॥ ९ ॥ ॥ श्रीदत्तात्रेयउवाच ॥ ॥ दृश्यतेनवसुर्यावत्तावदुल्काप्रयोजनम् ॥ प्राप्तेत्रसौमहानन्देथोल्कायाःकिम्प्रयोजनम् ॥१०॥ तावदा
स्तेजगत्साधोयावत्तत्त्वंनवेद्यते ॥ परस्मिन्ब्रह्मणिप्राप्तेजगतःकिम्प्रयोजनम् ॥ ११ ॥ आस्यबिम्बोयथादर्शेपश्यतेनपरंवपुः ॥ प्रधानार्थे
तथाजीवोज्ञानेनासौपरात्परम् ॥ १२ ॥ यथासूर्योदयेसर्ववस्तुनेत्रेणदृश्यते ॥ तथाज्ञानोदयेब्रह्मतत्त्वंजीवेनसर्वतः ॥ १३ ॥ ॥ श्रीना
रदउवाच ॥ ॥ इतिश्रुत्वाथतन्नत्वाप्रद्युम्नोयादवेश्वरः ॥ वेङ्कटाद्रिंद्राविडेषुययौसेनासमन्वितः ॥ १४ ॥ सत्यवाक्धर्मतत्त्वज्ञोराजर्षि

 

 

द्राविडेश्वरः ॥ प्रद्युम्नंपूजयामासभक्त्यापरमयायुतः ॥ १५ ॥ श्रीशैलदर्शनंकृत्वागिरिशालयमद्भुतम् ॥ स्कंदंवीक्ष्यततोराजन्ययौपम्पासरोवरे ॥ १६ ॥ गोदावरींभीमरथींगतःश्रीद्वारकेश्वरः ॥ प्रदर्शयन्हरेस्तीर्थंमहेन्द्राद्रिंततोययौ ॥ १७ ॥ महेंद्राद्रिस्थितंरामंभार्गवंक्षत्रियान्तकम् ॥ नत्वाप्रदक्षिणीकृत्यतत्रतस्थौहरेःसुतः ॥ १८ ॥ रामस्तमाशिषंदत्त्वायादवानांबलायवै ॥ चतुरङ्गायराजेन्द्रयोगेनार्हणमाहरत् ॥ १९ ॥ भक्तःसूपःप्रलेहश्चरुदिकादधिशाकजा ॥ शिखरिण्यवलेहश्चवटकाचसुखेरिणी ॥२०॥ चक्रिणीचणकस्थाचसौहालिस्तप्तपूरिका ॥ त्रिकोणःशर्करायुक्तोवटकोमधुशीर्षकः ॥ २१ ॥ फेणिकाचोपरिष्टश्चशतपत्रःसच्छिद्रकः ॥ चक्राभचिह्नकाचेत्थंसुधाकुंडलिकास्मृता ॥ २२ ॥ घृतपूरोवायुपूरस्तथाचंद्रकलास्मृता ॥ दधिस्थलश्चकर्पूरनाडीत्थंखण्डमण्डलम् ॥ २३ ॥ गोधूमपूरिकाचैवसुफलाढ्यातथैवच ॥ दधिरूपोमोदकश्चशाकःसौधानएवच ॥ २४ ॥ मण्डकापायसंदुग्धंदधिगोधूमेवच ॥ हैयंगवीनमण्डूरीपूरिकापर्पटस्तथा ॥ शक्तिकालप्सिकाचैवसुवृत्तंसंयावएवहि ॥ २५ ॥ सुफलैश्चसितायुक्तैःफलानिविविधानिच ॥ तथामोहनभोगश्चलवणंचतथैवच ॥ २६ ॥ कषायोमधुरस्तिक्तःकटुरम्लस्त्वनेकधा ॥ षट्पञ्चाशत्तमाह्येतेभोगाःशास्त्रेप्रकीर्तिताः ॥ २७ ॥ एतेषांभार्गवःशैलानकार्षीद्योगमास्थितः ॥ सैन्येसंभोजितेतत्रहस्तन्यूनानतेभवन् ॥ २८ ॥ वैभवंभार्गवस्यापिदृष्ट्वासर्वेतिविस्मिताः ॥ प्रद्युम्नस्तंनमस्कृत्ययादवैःसहितस्तदा ॥ सर्वेषांशृण्वतांराजन्पप्रच्छेदंहरेःसुतः ॥ २९ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ भगवन्भवतादत्तंसर्वेभ्योभोजनंपरम् ॥ समृद्धयःसिद्धयश्चत्वदंग्रावास्थिताःप्रभो ॥ ३० ॥ सर्वेषांहरिभक्तानांप्रियोभक्तस्तुकोहरेः ॥ एतन्मेब्रूहिविप्रेंद्रत्वंपरावरवित्तमः ॥ ३१ ॥ ॥ श्रीपरशुरामउवाच ॥ ॥ त्वंप्रभोकिंनजानासिलोकवत्पृच्छसेथमाम् ॥ लोकसंग्रहमेवारात्कुर्वन्विचरसिक्षितौ ॥ ३२॥ निष्किंचनोहारिपदाब्जपरागलुब्धःश्रीमत्कथाश्रवणकीर्तनतत्परोयः ॥ तद्रूपसिंधुलहरीविनिमग्नचित्तःश्रीकृष्णचंद्रदयितःकथितःसभक्तः ॥ ३३ ॥ दांतोमहानखिलजंगमवत्सलोयंशांतस्तितिक्षुरतिकारुणिकःसुहृत्तमः ॥ लोकंपुनातिनिजपादरजोभिराराच्छ्रीकृष्णचंद्रदयितःकथितःपरंसः ॥ ३४ ॥ यःपारमेष्ट्यमखिलंनमहेंद्रधिष्ण्यंनोसार्वभौममनिशंनरसाधिपत्यम् ॥ नोयोगसिद्धिमभितोनपुनर्भवंवावांछत्यलंपरमपादर

जःसभक्तः ॥ २५ ॥ ॥ निष्किंचनाःस्वकृतकर्मफलैर्विरागायत्तत्पदंहरिजनामुनयोमहांतः ॥ भक्ताजुपंतिहरिपादरजःप्रसक्ताअन्येविदन्ति
नसुखंकिलनैरपेक्ष्यम् ॥ २६ ॥ भक्तात्प्रियोनविदितःपुरुषोत्तमस्यशंभुर्विधिर्नचरमानचरौहिणेयः ॥ भक्ताननुव्रजतिभक्तनिबद्धचित्तचूडा
मणिःसकललोकजनस्यकृष्णः ॥ २७ ॥ गच्छन्निजंजनमनुप्रपुनातिलोकानावेदयन्हरिजनेस्वरुचिंमहात्मा ॥ तस्मादतीवभजतांभगवा
न्मुकुंदोमुक्तिंददातिनकदापिसुभक्तियोगम्॥२८॥ ॥ नारदउवाच ॥ इतिश्रुत्वायादवेंद्रोनत्वाश्रीभार्गवोत्तमम् ॥ प्राच्यांदिशियथौराजन्गंगा
सागरसंगमम् ॥ २९ ॥ ॥ इति श्रीमद्ग०सं०विश्वजित्खंडेनारदबहुलाश्वसंवादेवेंकटद्रविडदेशविजयोनामचतुर्दशोऽध्यायः ॥ १४ ॥
॥ नारदउवाच ॥ ॥ दिग्जयस्यमिषेणासौभूभारंहारयन्बहुम् ॥ प्रद्युम्नोभगवान्साक्षादंगदेशंततोययौ ॥ १ ॥ अङ्गेशोंऽतःपुराधीशोगृही
तोयादवैर्वने ॥ सोपितस्मैबलिंप्रादात्प्रद्युम्नायमहात्मने ॥ २ ॥ उड्डीशडामराधीशोबृहद्बाहुर्महाबलः ॥ नददौसबलिंतस्मैप्रद्युम्नायमहो
त्कटः ॥ ३॥ प्रद्युम्नप्रेषितोवीरःसांबोजांबवतीसुतः ॥ एकाकीप्रययौधन्वीरथेनादित्यवर्चसा ॥४॥ छादयामासबाणौघैर्डामरंनगरंनृप ॥
गिरिंतुषारपटलैर्जीमूतइवसर्वतः ॥ ५ ॥ तदातुडामराधीशोधर्षितःसन्कृतांजलिः ॥ बलिंददौनमस्कृत्यप्रद्युम्नायमहात्मने ॥ ६ ॥ वंग
देशाधिपोवीरोवीरधन्वामदोत्कटः ॥आययौसंमुखेयोद्धुमक्षौहिण्यावृतोबली ॥ ७ ॥ चंद्रभानुर्हरेःपुत्रःप्रद्युम्नस्यप्रपश्यतः ॥ विभेदतद्बलं
बाणैःकुवाक्यैर्मित्रतामिव ॥ ८ ॥ करिणांबाणभिन्नानांशिरसोमौक्तिकानिच ॥ प्रस्फुरंतिनिपेतुःकौरात्रौतारागणाइव ॥ ९ ॥ निपेतूर
थिनोनेकागजाश्वाश्वपदातयः ॥ तद्बाणैश्छिन्नशिरसःकूष्मांडशकलाइव ॥ १० ॥ क्षणमात्रेणतत्सैन्येक्षतजानांनदीह्यभूत् ॥ मनस्विनां
हर्षकरीस्वल्पानांभयकारिणी ॥ ११ ॥ मुण्डैःकबंधैर्धावद्भिर्हारकेयूरकुण्डलैः ॥ किरीटैःकंकणैःशस्त्रैर्महामारीवभूर्बभौ ॥ १२ ॥ कूष्मां
डोन्मादवेतालाभैरवाब्रह्मराक्षसाः ॥ शिरांसिजगृहुर्वेगाद्धरमालार्थहेतवे ॥ १३ ॥ इत्थन्निपतितेसैन्येवीरधन्वासमागतः ॥ चंद्रभानुन्तता
डाशुगदयावज्रकल्पया ॥ १४ ॥ तद्गदातिप्रहारेणनचचालहरेःसुतः ॥ चंद्रभानुर्गदांनीत्वातंतताडभुजांतरे ॥ १५ ॥ गदाप्रहारव्यथि
तोमूर्च्छितोधरणीतले ॥ पपातपादपइवप्रोद्यमन्रुधिरंमुखात् ॥ १६ ॥ लब्धसंज्ञोमुहूर्तेनवंगदेशाधिपोनृप ॥ आययौशरणंसोपिप्रद्युम्न

स्यमहात्मनः ॥ १७ ॥ यातेदत्तबलौराजन्नगरंवीरधन्वनि ॥ ब्रह्मपुत्रंसमुत्तीर्यप्रद्युम्नोमितविक्रमः ॥ १८ ॥ आसीमाधिपतिंबिंबंगृहीत्वा यादवेश्वरः ॥ बलिमादाययदुभिःकामरूपंसमाययौ ॥ १९ ॥ कामरूपेश्वरःपुंड्रऐंद्रजालविशारदः ॥ निर्गतःसेनयासार्द्धंयोद्धुंप्रद्युम्नसंमुखे ॥ २० ॥ आसीमानांयदूनांचघोरंयुद्धंबभूवह ॥ बाणैःकुठारैःपरिघैःशूलैःखड्गर्षिशक्तिभिः ॥ २१ ॥ पुंड्रोविद्याश्चकाराशुपैशाचोरगराक्षसीः ॥ ततोगुह्यकगंधर्वाःसर्वतोमैथिलेश्वर ॥ २२ ॥ प्रधावंतोरणेराजन्पिशाचाःपिशिताशनाः ॥ कोटिशःकोटिशोंऽगारान्क्षेपयंतोमुहुर्मुहुः ॥ २३ ॥ क्षणमात्रेणतत्सैन्यंवमंतोगरलंमुखात् ॥ फूत्कारमतिकुर्वंतोदंदशूकाःसमागताः ॥ २४ ॥ खरारूढादंतवक्रालललज्जिह्वा भयंकराः ॥ चर्वयंतोनरान्युद्धेधावंतोराक्षसास्ततः ॥ २५ ॥ यक्षाश्चासिंहवदनातुरंगवदनानृप ॥ छिन्दिभिन्दीतिगर्जंतःशूलहस्ताइतस्ततः ॥ २६ ॥ क्षणमात्रेणमेघानांसमूहैश्छादितंनभः ॥ अन्धकारोह्यभूद्राजन्रजसावातवेगतः ॥ २७ ॥ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकाः ॥ भयंप्रापुर्महायुद्धेन्यस्तशस्त्रायदूत्तमाः ॥ २८ ॥ कृष्णदत्तंधनुःकार्ष्णिरादायप्रतिकारवित् ॥ सत्त्वात्मिकांमहाविद्यांबाणैःप्रायुंक्तमैथिल ॥ २९ ॥ बाणःपिशाचानुरगान्सयक्षान्रक्षांसिगंधर्वघनांधकारान् ॥ विभेददिव्यैःप्रभवैर्यथाहिनीहारमेवान्किरणैर्विवस्वान् ॥ ॥ ३० ॥ बाणःसपुंड्रंसरथंसवाहंसंभ्रामयित्वाघटिकाद्वयंखे ॥ निपातयामासरणेसपत्नंपद्मंपृथिव्यामिवचक्रवातः ॥३१॥ पुण्ड्रस्तदातंशरणंसमेत्यप्रधर्षितःसद्यउपायनानि ॥ लक्षैर्हयानामयुतैर्गजानांयुतानिदत्त्वाप्रणनामकार्ष्णिम् ॥ ३२ ॥ विपाशांसतदोत्तीर्यसैन्यैःशोणनदंनृप ॥ केकयानाययौधन्वीप्रद्युम्नोयदुनंदनः ॥ ३३ ॥ केकयस्याधिपोराजाधृतकेतुर्महाबलः ॥ वसुदेवस्वसुःसाक्षाच्छ्रुतकीर्तेःपतिर्महान् ॥ ३४ ॥ प्रद्युम्नमर्हयामासधृतकेतुःसयादवम् ॥ भक्त्यापरमयाराजञ्छ्रीकृष्णस्यप्रभाववित् ॥ ३५ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायांविश्वजित्खण्डेनारदबहुलाश्वसंवादेउड्डीशडामरवंगासीमकामरूपकेकयविजयोनामपंचदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥

॥ श्रीनारदउवाच ॥ दुंदुभीन्नादयंस्तस्मात्प्रद्युम्नोयदुनंदनः ॥ मैथिलान्मिथिलापुर्यांवीक्ष्यदेशांस्तथावृतान् ॥ १ ॥ सुवर्णसौधैरत्युच्चैःसघंटैराजितांपुरीम् ॥ मिथिलांवीक्ष्यतामाराद्धुद्धवंप्राहमाधवः ॥ २ ॥ प्रद्युम्नउवाच ॥ कस्यैषानगरीमंत्रिन्दृश्यतेसांप्रतंमया ॥ राजतेबहुसौ

धेश्वपुरीभोगवतीयथा ॥ २ ॥ ॥ उद्धवउवाच ॥ ॥ जनकस्यपुरीह्येषामिथिलानाममानद ॥ मिथिलेंद्रोधृतिस्तस्यांमहाभागवतः
कविः ॥ ४ ॥ सर्वधर्मभृतांश्रेष्ठःश्रीकृष्णेष्टोहरिप्रियः ॥ बहुलाश्वस्तस्यसुतआबाल्याद्भक्तिकृद्धरेः ॥ ५ ॥ तस्मैस्वंदर्शनंदातुंभगवानाग
मिष्यति ॥ बहुलाश्वंराजपुत्रंश्रुतदेवद्विजंतथा ॥ ६ ॥ स्मरत्यलंद्वारिकायांश्रीकृष्णोभगवान्हरिः ॥ जेतुंनशक्योदेवेन्द्रैर्मनुजश्चकुतःप्रभो ॥
धृतिःपरमयाभक्त्याश्रीकृष्णवशकारकः ॥ ७ ॥ ॥ नारदउवाच ॥ ॥ तच्छ्रुत्वाभगवान्कार्ष्णिर्ब्रह्मचारिवपुर्दधत् ॥ स्वशिष्यमुद्ध
वंकृत्वाधृतिंद्रष्टुंसमाययौ ॥ ८ ॥ भक्तभावपरीक्षांहिकर्तुंतस्यनृपस्यच ॥ ददर्शमिथिलांकार्ष्णिरुद्धवेनसमन्वितः ॥ ९ ॥ वर्मशस्त्रधरावी
रामालातिलकशोभिताः ॥ जपंतःकृष्णनामानिसर्वेवैयत्रमालया ॥१०॥ लिखितानिचनामानिद्वारिद्वारिहरेर्नृणाम् ॥ तथाश्रीकृष्णचित्रा
णिलिखितानिशुभानिच ॥ ११ ॥ कुडयेकुडयेगृहाणांचगदापद्मानिमानद ॥ दशावतारचित्राणिशंखचक्राणियत्रवै ॥ १२ ॥ तुलसीमंदि
राणीत्थंप्रांगणेचगृहेगृहे ॥ एवंपश्यन्ससौधानिमिथिलायांजनान्बहून् ॥ १३ ॥ मालातिलकसंयुक्तान्सर्वान्भक्तान्ददर्शह ॥ तिलकैर्द्वाद
शाख्यैश्चयुक्तैःकुंकुमजैर्वृतान् ॥ १४ ॥ गोपीचंदनमुद्राभिश्चर्चितान्छांतविग्रहान् ॥ ऊर्ध्वपुंड्रधरान्विप्रान्हरिमंदिरचित्रितान् ॥ १५ ॥
गदामुद्रांललाटेचतदूर्ध्वंहरिनामच ॥ चक्रंशंखंचकमलंकूर्मंमत्स्यंभुजद्वये ॥ १६ ॥ दधतश्चधनुर्बाणंमूर्ध्निश्रीनंदकंहृदि ॥ मुसलंचहलंराज
न्नित्थंकार्ष्णिर्ददर्शह ॥ १७ ॥ कस्यांवीथ्यांभागवतंकेचिच्छृण्वंतिमानवाः ॥ इतिहासंभारतंचहरिवंशंतथापरे ॥ १८ ॥ सनत्कुमारवासि
ष्ठयाज्ञवल्क्यपराशरीः ॥ गर्गपौलस्त्यधर्मादिसंहिताःकेपठंतिवै ॥ १९ ॥ ब्राह्मंपाद्मंवैष्णवंचशैवंलैंगंसगारुडम् ॥ नारदीयंभागवतमाग्ने
यंस्कंदसंज्ञितम् ॥२०॥ भविष्यंब्रह्मवैवर्तमार्कण्डेयंसवामनम् ॥ वाराहमात्स्यकौर्माणिब्रह्मांडाख्यंतथैवच ॥२१॥ वीथ्यांवीथ्यांचशृण्वंतिज
नाःसर्वेगृहेगृहे ॥ वाल्मीकिकाव्यंकेचिद्वैश्रीरामचरितामृतम् ॥ २२ ॥ स्मृतीःपठंतिकेचिद्वैकेचिद्वेदत्रयींद्विजाः ॥ केचित्कुर्वंतियज्ञंवैवै
ष्णवंमंगलायनम् ॥ २३ ॥ राधाकृष्णेतिकृष्णेतिकेचद्वदंतिमुहुर्मुहुः ॥ केचिन्नृत्यन्तिगायंतिहरिकीर्तनतत्पराः ॥ २४ ॥ मृदंगतालवादित्रैः
कांस्यवीणामनोहरैः ॥ मंदिरेमंदिरेविष्णोःकीर्तनंश्रूयतेजनैः ॥ २५ ॥ नवलक्षणसंयुक्तांभक्तिंयांप्रेमलक्षणाम् ॥ कुर्वन्तिमैथिलाराजन्मिथि

लायांगृहेगृहे ॥ २६ ॥ एवंतुनगरींदृष्ट्वाप्रद्युम्नोभगवान्हरिः ॥ राजद्वारंसमेत्याशुमैथिलेशंददर्शह ॥ २७ ॥ मैथिलेशसभायांतुवेदव्यासः
शुकोमुनिः ॥ याज्ञवल्क्योवसिष्ठश्चगौतमोहंबृहस्पतिः ॥ २८ ॥ अन्येचमुनयस्तत्रवेदमूर्तिधराइव ॥ दृश्यंतेधर्मवक्तारोहरिनिष्ठाइतस्त
तः ॥ २९ ॥ मैथिलेंद्रोधृतिस्तत्रभक्तिभावनताननः ॥ बलस्यपादुकापूजांकुरुतेविधिवन्नृप ॥ ३० ॥ जपन्मुक्तिकरंनामश्रीकृष्णबलदे
वयोः ॥ दृष्ट्वोत्थायनमश्चक्रेसशिष्यंब्रह्मचारिणम् ॥ ३१ ॥ तंपूजयित्वाविधिवत्पाद्याद्यैर्मैथिलेश्वरः ॥ कृताञ्जलिपुटोराजातदग्रेचाऽऽ
स्थितोभवत् ॥ ३२ ॥ ॥ जनकउवाच ॥ ॥ अद्यमेसफलंजन्ममंदिरंविशदीकृतम् ॥ देवर्षिपितरःसर्वेसंतुष्टाआगतेत्वयि ॥ ३३ ॥
निर्विकल्पाःसमदृशस्त्वादृशाःसाधवःक्षितौ ॥ निःश्रेयसायभगवन्दीनानांविचरंतिहि ॥ ३४ ॥ ॥ ब्रह्मचार्य्युवाच ॥ ॥ धन्योसिराज
शार्दूलधन्यातेमिथिलापुरी ॥ धन्याप्रजाश्चस्तेसर्वाविष्णुभक्तिसमन्विताः ॥ ३५ ॥ ॥ जनकउवाच ॥ ॥ ममेयंनगरीनास्तिनप्रजा
नगृहंधनम् ॥ कलत्रपुत्रपौत्रादिसर्वंकृष्णस्यचैवहि ॥ ३६ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् ॥ असंख्यब्रह्मांडपतिर्गोलोके
धाम्निराजते ॥ ३७ ॥ वासुदेवःसंकर्षणःप्रद्युम्नोभगवान्स्वयम् ॥ अनिरुद्धस्तथाचैकश्चतुर्व्यूहोऽभवत्क्षितौ ॥ ३८ ॥ कायेनमनसावाचा
बुद्ध्यावाचेंद्रियैःकृतम् ॥ तस्मैसमर्पितंशौक्ल्यंमयाब्रह्मन्महामुने ॥ ३९ ॥ ॥ श्रीब्रह्मचार्युवाच ॥ ॥ हेवैदेहमहाभागविष्णुभक्तिमतांवर ॥
त्वद्भक्त्यातोषितःकृष्णस्तवैकत्वंप्रदास्यति ॥ ४० ॥ ॥ जनकउवाच ॥ ॥ दासोहंकृष्णभक्तानांत्वादृशानांमहात्मनाम् ॥ मुक्तिं
नेच्छामिहेब्रह्मन्नेकतांहेतुवर्जितः ॥ ४१ ॥ ॥ ब्रह्मचार्युवाच ॥ ॥ करोम्यहैतुकींभक्तिंराजंस्त्वंहेतुवर्जितः ॥ निर्गुणैर्भक्तिभावैश्च
प्रेमलक्षणसंयुतः ॥ ४२ ॥ प्रद्युम्नोभगवान्साक्षाद्दिग्जयार्थंविनिर्गतः ॥ नायातस्तवगेहेषुसंदेहोमेमहानभूत् ॥ ४३ ॥ ॥ जनकउवाच ॥
प्रद्युम्नोभगवान्त्साक्षादंतर्यामीहरिःस्वयम् ॥ सर्वगःसर्वविच्छश्वदत्रनास्तिचाकिंप्रभो ॥ ४४ ॥ ॥ ब्रह्मचार्युवाच ॥ ॥ ज्ञानदृष्ट्यापि
चेत्कार्ष्णिमन्यसेत्रनिरंतरम् ॥ तर्हिदर्शयतंदेवं[illegible] ॥ ४५ ॥ ॥ नारदउवाच ॥ ॥ एतच्छ्रुत्वातदाराजामहाभाग
वतोधृतिः ॥ अश्रुपूर्णमुखोभूत्वाप्राहगद्गदयागिरा ॥ ४६ ॥ ॥ जनकउवाच ॥ ॥ यदिमेश्रीहरेर्भक्तिरनिमित्ताकृताभुवि ॥

तर्हिकार्ष्णिर्हरेःपुत्रःप्रादुर्भूयान्ममाग्रतः ॥ ४७ ॥ यदिश्रीकृष्णभक्तानांदासोहंयदितत्कृपा ॥ सर्वत्रयदितद्भावस्तर्हिभूयान्म
नोरथः ॥ ४८ ॥ ॥ नारदउवाच ॥ ॥ प्रादुर्बभूवाशुतदैवकार्ष्णिर्विसृज्यसद्यःकिलवर्णिरूपम् ॥ पश्यत्सुसर्वेषुजनेषुशिष्यःसउद्ध
वोभूद्धरिभक्तिनिष्ठः ॥ ४९ ॥ घनप्रभंपद्मदलायतेक्षणंप्रलम्बबाहुंजगतांमनोहरम् ॥ पीतांबरंनीलगुडालकालिभिःस्वलंकृतंश्रीमुखप
द्ममण्डलम् ॥ ५० ॥ शीततुंबालार्ककिरीटकुण्डलंकांच्यंगदस्फूर्जितदिव्यविग्रहम् ॥ विलोक्यतंकृष्णसुतंकृतांजलिर्ननामसाष्टांगमलंधृ
तिर्नृपः ॥ ५१ ॥॥ जनकउवाच॥॥ अहोतिधन्यंममभूरिभाग्यंदत्तंत्वयामेनिजदर्शनंहि ॥ ज्ञातोद्यकायाध्रवतुल्यआरादहंकृतार्थोस्मिकुले
नभूमन् ॥ ५२ ॥॥ श्रीप्रद्युम्नउवाच ॥॥ धन्यस्त्वंनृपशार्दूलभक्तस्त्वंमत्प्रभाववित् ॥ भक्तिभावपरीक्षार्थंप्राप्तोहंतवसांप्रतम्॥५३॥ अद्यै
वममसारूप्यंभूयात्तेमैथिलेश्वर ॥ बलमायुर्यशःकीर्तिरिहलोकेभवत्वलम् ॥ ५४ ॥ ॥ नारदउवाच ॥ ॥ तवपित्राचधृतिनापूजितःपश्यतां
सताम् ॥ प्रययौशिबिरात्राजन्प्रद्युम्नोभक्तवत्सलः ॥५५॥ इति श्रीमद्गर्गा०सं०वि०ना०ब०जनकोपाख्याननामषोडशोऽध्यायः ॥१६॥
॥ श्रीनारदउवाच ॥ ॥ अथातोमागधाञ्जेतुंप्रद्युम्नोमीनकेतनः ॥ गिरिव्रजंजगामाशुस्वसैन्यैःपरिवारितः ॥ १ ॥ श्रुत्वागतंहरेःपुत्रंदि
ग्जयार्थंविशेषतः ॥ जरासन्धोमागधेन्द्रोमहाकोपंचकारह ॥ २ ॥ ॥ जरासन्धउवाच ॥ ॥ तुच्छायेयादवाःसर्वेयुधिविक्लवचेतसः ॥
तेद्यवैजगतींजेतुंनिर्गतागतबुद्धयः ॥ ३ ॥ मथुरांस्वपुरींत्यक्त्वामद्भयान्माधवोपिहि ॥ समुद्रंशरणंप्रागात्पिताचास्यदुरात्मनः ॥ ४ ॥
प्रवर्षणेरामकृष्णौमयाभस्मीकृतौबलात् ॥ छलाद्दुद्रुवतुस्तौद्वौद्वारकायांसमाश्रितौ ॥५॥ बद्धातौचानयिष्यामिसोग्रसेनौकुशस्थलीम् ॥
अयादवींकरिष्यामिपृथ्वींसागरमेखलाम् ॥ ६ ॥ ॥ नारदउवाच ॥ ॥ इत्युक्त्वानिर्गतोराजागिरिव्रजपुराद्बहिः ॥ अक्षौहिणीभिर्विंश
त्यातिसृभिःसंयुतोबली ॥ ७ ॥ गोमूत्रचयसिंदूरकस्तूरीपत्रभृन्मुखैः ॥ स्रवन्मदैश्चतुर्दंतैरैरावतकुलोद्भवैः ॥ ८ ॥ शुंडादंडस्यफूत्कारैः
क्षेपयद्भिस्तरून्बहून् ॥ बभौगजैर्मागधेंद्रोमेघैरिंद्रइवप्रभुः ॥ ९ ॥ रथैश्चदेवधिष्ण्याभैःसध्वजैःसाश्वनेतृभिः ॥ चामरांदोलितैराजं
च्छोलचक्रध्वनद्युभिः ॥ १० ॥ तुरंगमैर्वायुवेगैश्चित्रवर्णैर्मदोत्कटैः ॥ सौवर्णपट्टहाराढ्यैःशिखारश्म्यूर्ध्वचामरैः ॥ ११ ॥ सकंचुकैर्वीर

जनैःखड्गचर्मधनुर्धरैः ॥ विद्याधरसमैःप्रागान्मागधेंद्रोमहाबलः ॥१२॥ ॥ धुङ्कारैर्दुंदुभीनांचदिशोनेदुर्धनुःस्वनैः ॥ चचालवसुधासैन्यैर
जोभिश्छादितंनभः ॥ १३ ॥ जरासंधस्यतत्सैन्यंप्रलयाब्धिमिवोल्बणम् ॥ विस्मितायादवाःसर्वेबभूवुर्वीक्ष्यमैथिल ॥ १४ ॥ प्रद्युम्नोभ
गवान्वीक्ष्यमागधेन्द्रबलार्णवम् ॥ शंखंदध्मौदक्षिणाख्यंमाभैष्टेत्यभयंददत् ॥ १५ ॥ ततःसांबोमहाबाहुःप्रद्युम्नस्यप्रपश्यतः ॥ अक्षौहिणी
नांदशभिर्युयुधेमागधेनसः ॥ १६ ॥ गजागजैर्युयुधिरेरथिभीरथिनोमृधे ॥ हयाहयैःपत्तयश्चपत्तिभिर्मैथिलेश्वर ॥ १७ ॥ बभूवतुमुलंयुद्ध
मद्भुतंरोमहर्षणम् ॥ मागधानांयदूनांचासुराणांनिर्जरैर्यथा ॥ १८ ॥ अश्वारूढाःकेपिवीराभल्लहस्ताइतस्ततः ॥ मर्दयन्तोगजारूढान्क
रिकुंभगतार्वपाः ॥ १९ ॥ केचिच्छक्तीस्तडिद्वर्णागृहीत्वाचिक्षिपुर्बलात् ॥ ताःशक्तयस्त्वरीन्भित्त्वादंशितान्धरणींगताः ॥ २० ॥
केचिद्वीरानदंतःकौरथाङ्गानिचचिक्षिपुः ॥ चिच्छिदुर्वीरपटलंनीहारंरवयोयथा ॥ २१ ॥ भिंदिपालैर्मुद्गरैश्चकुठारैरसिपट्टिशैः ॥ अच्छू
रिकार्ष्टिभिस्तीक्ष्णैर्निस्त्रिंशैर्युयुधुश्चके ॥ २२ ॥ तोमरैश्चगदाभिश्चबाणैश्छिन्नानिभूतले ॥ निपेतुर्वीरकरिणामर्वतांचशिरांसिच ॥
॥ २३ ॥ कबंधास्तत्रचोत्पेतुःपातयंतोहयान्नरान् ॥ खड्गहस्ताःप्रधावंतःसंग्रामेषुभयंकराः ॥२४॥ वीरोपरिगतावीरानिपेतुश्छिन्नबाहवः ॥
हयोपरिहयाःकेचिद्बाणैःसंछिन्नकन्धराः ॥ २५ ॥ विद्याधर्यश्चगंधर्व्योवव्रिरेह्यंबरेगतान् ॥ वीरान्पतीन्समिच्छंत्यस्तासांचाभूत्कलिर्महान्
॥ २६ ॥ क्षत्रधर्मपराःकेचिद्युद्धदत्तासवोनृप ॥ नचलन्तःपदंपृष्ठेसदासंग्रामशालिनः ॥ २७ ॥ जग्मुःपरंपदंतेवैभित्त्वामार्तंडमण्डलम् ॥
ननृतुःशिशुमारेवैमंडलेचनटाइव ॥२८॥ एवंसांबमहावीरैर्मर्दितंमागधंबलम् ॥ दुद्रावपश्यतांतेषांकृष्णभक्त्यायथाऽशुभम् ॥२९॥ केचिद्वैवृ
कणवर्माणश्छिन्नचापास्तथापरे ॥ पलायमानाधावंतस्त्यक्तखड्गर्ष्टिपाणयः ॥३०॥ पलायमानंस्वबलंवीक्ष्यतन्मागधेश्वरः ॥ धनुष्टंकारय
न्प्राप्तोमाभैष्टेत्यभयंददौ ॥३१॥ स्वबलंनोदयामासजरासन्धोधनुर्ज्यया ॥ महामात्यःपुनर्मत्तंह्यंकुशेनगजंयथा ॥३२॥ साम्बस्तदैवसम्प्रा
सोदशभिश्चापनिर्गतैः॥बाणैर्विंध्याधसमरेमागधेंद्रंमहाबलम् ॥३३॥ धनुर्ज्यामभितःकल्लोलभीमसंघर्षनादिनीम् ॥ चिच्छेददशभिर्बाणैःसा
म्बोजाम्बवतीसुतः ॥ ३४ ॥ धनुरन्यत्समादायजरान्धोमहाबलः ॥ धनुःसांबस्यचिच्छेदबाणैर्दशभिरग्रतः ॥ ३५ ॥ चतुर्भिश्चतुरोवा

हान्द्राभ्यांकेतुंरथंशतैः ॥ एकेनसारथिंजघ्नेमागधेंद्रोजरासुतः ॥ ३६ ॥ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ पुनरन्यंसमास्थाय
रथंसाम्बोमहाबलः ॥ ३७ ॥ गृहीत्वाचापमत्युग्रंसज्यंकृत्वाविधानतः ॥ तद्रथंचूर्णयामाससाम्बोबाणशतैर्बली ॥ ३८ ॥ रथंत्यक्त्वाजरा
सन्धोगजमारुह्यवेगतः ॥बभौगजेमागधेन्द्रइन्द्रऐरावतेयथा ॥३९॥ चित्रपत्रविचित्रांगंकालान्तकयमोपमम् ॥ साम्बायनोदयामासमत्तेभं
क्रुद्धमानसः ॥ ४० ॥ गृहीत्वासरथंसाम्बंशुण्डादण्डेननागराट् ॥ कुर्वंश्चीत्कारविकलंचिक्षेपनवयोजनम् ॥ ४१ ॥ तदाकोलाहलेजातेसां
बसेनासुमैथिल ॥ प्रद्युम्नपार्श्वाच्चगदःप्राप्तोभूद्वेगतोबलम् ॥ ४२ ॥ विनाशयन्नन्धकारंयथार्कउदयाचलात् ॥ जरासंधस्यापिगजंमुष्टिना
वासुदेवजः ॥ ४३ ॥ जघानशक्रोवज्रेणयथाप्रोच्चंदरीभृतम् ॥ गजोमुष्टिप्रहारेणविह्वलोधरणींगतः ॥ ४४ ॥ जगामपंचतांराजंस्तदद्भुत
मिवाभवत् ॥ जरासंधस्ततःक्रुद्धोगदामादायवेगतः ॥ ४५ ॥ गदंतताडसहसाजगर्जघनवद्बली ॥ तत्प्रहारेणसगदोनचचालरणांगणात् ॥
॥ ४६ ॥ त्वरंगदांसमादायलक्षभारविनिर्मिताम् ॥ अताडयज्जरासंधंसिंहनादमथाकरोत् ॥ ४७ ॥ तत्प्रहारेणव्यथितोबृहद्रथसुतोबली ॥
जरासंधःसमुत्थायगृहीत्वासगदंगदम् ॥ ४८ ॥ चिक्षेपरोषतोराजन्नाकाशेशतयोजनम् ॥ गदोपिमागधंनीत्वाभ्रामयित्वामहाबलः ॥४९॥
चिक्षेपगगनेतंवैयोजनानांसहस्रकम् ॥ आकाशात्पतितोराजामागधोविंध्यपर्वते ॥ ५० ॥ उत्थाययुयुधेतेनगदेनापिमहाबलः ॥ तदैवसांबः
संप्राप्तोगृहीत्वामगधेश्वरम् ॥ ५१ ॥ भूपृष्ठेपोथयामाससिंहःसिंहमिवौजसा ॥ एकेनमुष्टिनासांबंद्वितीयेनगदंतथा ॥ ५२ ॥ तताडमाग
धोराजाजगर्जाशुरणाङ्गणे ॥ मुष्टिप्रहारव्यथितौगदसाम्बौचमूर्च्छितौ ॥ ५३ ॥ हाहाकारोमहानासीत्तदैवापिरणांगणे ॥ रथेनापिपता
केनप्रद्युम्नोयादवेश्वरः ॥ ५४ ॥ अक्षौहिणीयुतःप्राप्तोमाभैष्टेत्यभयंददौ ॥ जरासंधोगदांनीत्वालक्षभारविनिर्मिताम् ॥ ५५ ॥ विवेशयदुसे
नायामरण्येगिरिवत्प्रभुः ॥ रथान्गजान्सवीरांश्चतुरङ्गान्सैंधवान्बहून् ॥ ५६ ॥ पातयामासराजेंद्रपद्मानीवमहागजः ॥ जरासंधस्ययासेना
सापिसर्वासमागता ॥ ५७ ॥ जघाननिशितैर्बाणैर्यदूनांसर्वतोबलम् ॥ प्रद्युम्नोयुयुधेयुद्धेनिर्भयोयादवेश्वरः ॥ ५८ ॥ निपातयन्नरीन्बाणैर्धनु
ष्टंकारयन्मुहुः ॥ तदैवयदुपुर्यास्तुबलदेवःसमागतः ॥ ५९ ॥ प्रादुर्बभूवतत्रापिसर्वेषांपश्यतांसताम् ॥ समाकृष्यहलाग्रेणमागधेंद्रबलंमह

त् ॥ ६० ॥ मुसलेनाहनत्क्रुद्धोबलदेवोमहाबलः ॥ शतयोजनपर्यंतंरथाश्वगजपत्तयः ॥ ६१ ॥ पतिताभिन्नशिरसःसर्वेवैनिधनंगताः ॥
दृष्ट्वास्वसैन्यंपतितंजरासन्धोरणाङ्गणात् ॥ ६२ ॥ दुद्रावविरथोराजन्नेकाकीभयविह्वलः ॥ देवदुन्दुभयोनेदुर्नरदुंदुभयस्तदा ॥ ६३ ॥
बलदेवोपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ तदाजयजयारावोयदूनांस्वबलेभवत् ॥ ६४ ॥ प्रद्युम्नाद्यास्ततोनेमुःकामपालंगतव्यथाः ॥ इत्थं
जित्वामागधेंद्रंबलदेवोमहाबलः ॥ ६५ ॥ प्रययौद्वारकांराजन्भगवान्भक्तवत्सलः ॥ जरासंधसुतोधीमान्सहदेवउपायनम् ॥ ६६ ॥
नीत्वापुरःशंबरारेर्गिरिदुर्गाद्विनिर्गतः ॥ अश्वार्बुदंरथानांचद्विलक्षंहस्तिनांतथा ॥ ६७ ॥ ददौषष्टिसहस्राणिनत्वाकार्ष्णिप्रभाववित् ॥
॥ ६८ ॥ ॥ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेमागधविजयोनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥
॥ नारदउवाच ॥ ॥ अथकार्ष्णिर्गयामेत्यफल्गुंस्नात्वाससैनिकः ॥ अन्यान्देशांस्ततोजेतुंप्रस्थानमकरोत्पुनः ॥ १ ॥ श्रुत्वाजितंजरासं
धंतदातंकानृपाःपरे ॥ उपायनंददुस्तस्मैभयार्ताःशरणंगताः ॥ २ ॥ गौतमींसरयूंपुण्यामनुस्रोतंततोऽगमत् ॥ ततोभागीरथीतीरेका
शीमभिजगामह ॥३॥ पार्ष्णिग्राहःकाशिराजोगृहीतोमृगयांगतः॥ सोपितस्मैबलिंप्रादाच्छ्रुत्वातस्यबलंमहत्॥४॥ प्रद्युम्नःसैनिकैःसार्द्धंकोस
लान्प्रगतोबली॥अयोध्यानिकटेराजन्नंदिग्रामेस्थितोऽभवत्॥५ ॥कोसलेन्द्रोनग्नजिच्चचतुरंगैर्गजैरथेः॥ महाधनैःशम्बरारिमर्हयामासतत्त्व
वित्॥६॥उत्तरेशोदीपतमोनयपालाधिपोगजः॥विशालेशोबर्हिणश्चह्येतेवैतंबलिंददुः॥७॥नैमिषेशोहरेर्भक्तःश्रीकृष्णस्यप्रभाववित्॥ कृताञ्ज
लिपुटोभूत्वाददौतस्मैबलिंनृपः ॥ ८ ॥ प्रयागंगतवान्कार्ष्णिस्त्रिवेणींपापनाशिनीम् ॥ स्नात्वाददौमहादानंतीर्थराजप्रभाववित् ॥ ९ ॥
गजाविंशतिसाहस्रमश्वनांदशलक्षकम् ॥ रथानांचचतुर्लक्षंगवांतत्रदशार्बुदम् ॥ १० ॥ हेममालासमायुक्तंहेमाम्बरसमन्वितम् ॥ दशभार
सुवर्णानांमुक्तानांलक्षमेवहि॥११॥द्विलक्षंनवरत्नानांवस्त्राणांदशलक्षकम्॥काश्मीरकम्बलानांचद्विलक्षंरत्नकम्बलैः ॥१२॥ ब्राह्मणेभ्योददौ
कार्ष्णिस्तीर्थराजेहरिप्रिये ॥ कारूषाधिपति [illegible] ॥१३॥ [illegible] र्ष्णिपूजयामासशंकितः ॥ प्रद्युम्नंचागतंवी
क्ष्यपांचालेकान्यकुब्जके ॥ १४ ॥ भयंप्रापुर्नृपाःसर्वेदुर्गेदुर्गेकृतार्गलाः ॥ कान्यकुब्जाधिपोवीरोभलन्दनइतिस्मृतः ॥ १५ ॥ द्रुपदःक

म्पिलाधीशोददद्युःशकितौबलिम् ॥ १६ ॥ अथकार्ष्णिर्महाबाहुर्बिन्दुदेशांस्ततोययौ ॥ विचेलुर्यादवास्सर्वेभयार्तादुर्गमाश्रिताः ॥ १७ ॥
बिन्दुदेशाधिपोराजादीर्घबाहुर्महाबलः ॥ शम्बरारेःपरसंधिंकर्तुंसैन्येसमाययौ ॥ १८ ॥ ॥ दीर्घबाहुरुवाच ॥ ॥ यूयंसर्वेयादवेन्द्राआ
गताजयिनोदिशाम् ॥ मनोरथंमेकुरुतभवेयंतुष्टमानसः ॥ १९ ॥ सजलस्यापिकाचस्यपात्रस्यशरवेधतः ॥ नक्षरेद्बिन्दुरेकोपिबाणस्तद
धितिष्ठति ॥ २० ॥ नपात्रंशकलीभूतंतन्मध्येहस्तलाघवम् ॥ येकुर्वन्तिप्रतिज्ञांमेतेभ्योदास्यामिकन्यकाः ॥ २१ ॥ यूयंसर्वेयादवेन्द्राध
नुर्वेदविशारदाः ॥ मयापिनारदमुखाच्छ्रुताःपूर्वंमहाबलाः ॥ २२ ॥ नारदउवाच ॥ ॥ सर्वेषांविस्मितानांचप्रद्युम्नोधन्विनांवरः ॥
तथेत्युवाचसदसिबिन्दुदेशाधिपंनृप ॥ २३ ॥ दीर्घवंशौभुविस्थाप्यगुणंबद्धातदन्तरे ॥ गुणेबद्धाकाचकुम्भंसजलंपश्यतांसताम् ॥ २४ ॥
धनुर्गृहीत्वातद्वीक्ष्यबाणंकार्ष्णिःसमादधे ॥ काचपात्रंशरोभित्त्वातस्थौमध्येर्द्धनिःसृतः ॥ २५ ॥ एकतोमुखपुंखाभ्यांरविरश्मिरिवाम्बुदे
काचपात्रेबभौबाणस्तदद्भुतमिवाभवत् ॥ २६ ॥ नपात्रंशकलीभूतंत्रिकुशस्यफलंयथा ॥ नचालनंकम्पनंचबिंदुस्रावोपिनाभवत् ॥ २७ ॥
प्रद्युम्नोभगवान्बाणंद्वितीयंसन्दधेपुनः ॥ सोपिपूर्वंसमुत्सृज्यतत्रतस्थौविदेहराट् ॥ २८ ॥ साम्बोपिधनुरादायबाणान्पञ्चसमाददे ॥ काच
पात्रंचतेभित्त्वातस्थुस्तत्रार्द्धनिःसृताः ॥ २९ ॥ युयुधानोधनुर्नीत्वाबाणमेकंसमाक्षिपत् ॥ सर्वेषांपश्यतांतेषांपात्रंचूर्णीबभूवह ॥ ३० ॥ उ
च्चैर्जहसुःसर्वेयादवाःपरसैनिकाः ॥ त्वंमहान्बाणधारीहकार्तवीर्योर्जुनोयथा ॥ ३१ ॥ अर्जुनोभरतोरामस्त्रिपुरघ्नोहिवाभवान् ॥ द्रोणोभी
ष्मोथवाकर्णोजामदग्न्यइवावदन् ॥ ३२ ॥ अन्यत्पात्रंसमाधायानिरुद्धोधन्विनांवरः ॥ अधोगत्वाथतद्दृष्ट्वाबाणंचिक्षेपलाघवात् ॥ ३३ ॥
सोपिपात्रतलंभित्त्वातस्थौतत्रापिनिःसृतः ॥ तत्पात्राद्धस्तपञ्चोर्ध्वबद्धापाषाणमम्बरे ॥ ३४ ॥ दीप्तिमान्धनुरादायबाणमेकंसमाददे ॥
सोपिपात्रतलंभित्त्वाबाणमुत्सृज्यचाग्रतः ॥ ३५ ॥ ताडयित्वाचपाषाणंपुनस्तत्रसमाश्रितः ॥ गतागतेनयावद्द्वैबिन्दुस्रावोपिनाभवत् ॥
तदावीराश्चतेसर्वेसाधुसाध्वितिवादिनः ॥ ३६ ॥ भानुर्धनुःसंगृहीत्वावीक्ष्यमीलितलोचनः ॥ आराच्चिक्षेपनाराचंसर्वेषांपश्यतांसताम् ॥
॥ ३७ ॥ सोपिपात्रंतदाभित्त्वापात्रंकृत्वाह्यधोमुखम् ॥ पुनरूर्ध्वमुखंकृत्वातस्थौतत्रार्द्धनिःसृतः ॥ ३८ ॥ बाणवेगेनतदपिबिंदुस्रावोपिनाभ

वत् ॥ नपात्रंशकलीभूतंतदद्भुतमिवाभवत् ॥ ३९ ॥ एवंश्रीकृष्णपुत्रायेअष्टादशमहारथाः ॥ सर्वेतेविभिदुःपात्रंजलस्रावोपिनाभवत् ॥ ॥ ४० ॥ बिन्दुदेशाधिपोराजादीर्घबाहुःसुविस्मतः ॥ तेभ्योदात्कन्यकास्तुष्टाअष्टादशसुलोचनाः ॥ ४१ ॥ तेषांविवाहसमयेशंखभेर्यानकादयः ॥ नेदुर्जगुश्चगन्धर्वाननृतुश्चाप्सरोगणाः ॥४२॥तेषामुपरिदेवास्तेजयध्वनिसमाकुलाः ॥ ववृषुःपुष्पवर्षाणिचक्रुःश्लाघांदिविस्थिताः ॥ ४३ ॥ गजान्षष्टिसहस्राणिहयानामर्बुदंतथा ॥ दशलक्षंरथानांचदासीनांलक्षमेवच ॥ ४४ ॥ शिबिकानांचतुर्लक्षंपारिबर्हंददौनृपः ॥ ताःप्राहिणोद्द्वारवतींवधूःकार्ष्णिर्यदूत्तमः ॥ ४५ ॥ दीर्घबाहुमनुज्ञाप्यनिषधान्प्रययौततः ॥ निषधाधिपतिर्वीरःसेनाजिन्नाममैथिल॥ ॥ ४६ ॥ उपायनंददौसोपिप्रद्युम्नायमहात्मने ॥ तथाहिमद्राधिपतिःश्रीकृष्णेष्टोहरिप्रियः ॥४७॥ पूजयामाससबलंबृहत्सेनोहरेःसुतम् ॥ माथुराञ्छूरसेनांश्चमधून्प्राप्तःससैनिकः ॥ ४८ ॥ स्वजनैःपूजितःकार्ष्णिर्मथुरामाययौपुनः ॥ ततःप्रदक्षिणीकृत्यमथुरांसवनांकिल ॥ ४९ ॥ वृन्दावनंगोवर्धनंयमुनांपुलिनानिच ॥ नमस्कृत्यगवांवृन्दंगतःश्रीनन्दगोकुलम् ॥५०॥ गोपान्गोपीर्यशोदांचनन्दराजंव्रजेश्वरम् ॥ वृषभानूपनन्दांश्चनत्वाकार्ष्णिर्बभौनृप ॥ ५१ ॥ बलिंचनन्दराजायदत्त्वादत्त्वापुनःपुनः ॥ तैःपूजितःकतिदिनैःस्थितोभून्नन्दगोकुले ॥ ५२ ॥ ॥ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेकाशिकोसलोत्तरनयपालवैशालनैमिषारण्यकारूषपाञ्चालकान्यकुब्जकाम्पिल्यबिन्दुनिषधभद्रमधुशूरसेनदेशविजयोनामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ श्रीनारदउवाच ॥ ॥ अथकार्ष्णिर्महाबाहुर्ध्वजिनीभिस्समन्वितः ॥ नादयन्दुन्दुभीन्दीर्घान्दीर्घवेगःकुरून्ययौ ॥ १ ॥ विंशतिर्योजनानाश्चमर्यादीकृततद्बलम् ॥ तस्यैतच्छिबिराणांचविस्तारोदशयोजनम् ॥ २ ॥ पञ्चयोजनमाश्रित्यतद्बलेराजपद्धतिः ॥ धनाढ्यानांचवैश्यानामापणानिसहस्रशः ॥ ३ ॥ तथारत्नपरीक्षाणांवस्त्रव्यापारकारिणाम् ॥ काचकारावायकाश्चरङ्गकाराःकुलालकाः ॥ ४ ॥ कन्दकारास्तूलकाराःपटकारास्तथैवच ॥ कटंकराश्चित्रकाराःपत्रकाराश्चनापिताः ॥ ५ ॥ पट्टकाराहेतिकाराःपर्णकाराश्चशिल्पिनः ॥ लाक्षाकारामालिनश्चरजकास्तैलिनस्तथा ॥ ६ ॥ ताम्बूलशोधिनस्तत्रचित्रपाषाणकर्मकाः ॥ अन्नभर्जकरास्तत्रकाचभेदिनएवहि ॥७॥

मुक्तादीनांचरत्नानांसूक्ष्माणांसूक्ष्मवेधिनः ॥ एतेकारुजनाःसर्वेदृश्यन्तेराजपद्धतौ ॥ ८ ॥ क्वचिद्भानुमतीलीलाऐंद्रजालविधायकाः ॥ क्वचिन्नटाश्चनृत्यन्तेयुद्धंभल्लूकयोःक्वचित् ॥९॥ क्वचित्तुवानरीलीलाडमरूवाद्यसंयुताः ॥ गायन्तिकुत्रचिद्राजन्सूतमागधबन्दिनः ॥ १० ॥ वाराङ्गनाश्चनृत्यन्तिभूपैर्द्वादशभिर्युताः ॥ दिव्यैःषोडशशृंगारैर्हरन्त्यप्सरसांमनः ॥ ११ ॥ बन्धूनामपिसेनानांमहातंकाद्गजाह्वये ॥ चालनंसंभ्रमोपेतंविह्वलैश्चजनैरभूत् ॥ १२ ॥ विदुद्रुवुर्जनाःसर्वेगृहेष्वापातितार्गलाः ॥ कोलाहलोमहानासीद्गेहेगेहेजनेजने ॥ १३ ॥ वीर्यशौर्यबलोपेताःकौरवाश्चक्रवर्तिनः ॥ आसमुद्रक्षितीशेंद्राजातास्तेपिविशंकिताः ॥ १४ ॥ प्रद्युम्नप्रेषितःसाक्षादुद्धवोबुद्धिसत्तमः ॥ कौरवेन्द्रपुरंप्राप्तोधृतराष्ट्रंददर्शह ॥ १५ ॥ मदच्युतामस्यनृपस्यदन्तिनांकस्तूरिकाकुंकुमगण्डशालिनाम् ॥ सिन्दूरशुण्डास्फुटकर्णताडितैःषडंघ्रिभिर्मण्डितमंदिराजिरम् ॥ १६ ॥ यंभीष्मकर्णगुरुशल्यकृपैश्चभूरिबाह्लीकधौम्यशकुनैःसहसंजयेन ॥ दुःशासनेनविदुरेणचलक्ष्मणेनदुर्योधनेनचकृपीसुतसोमदत्तैः ॥ १७ ॥ श्रीयज्ञकेतुसहितैःसहितंनृपेन्द्रंलीलातपत्रसितचामरहेमपीठैः ॥ संसेवितंपरिसमेत्यगजाह्वयेशंनत्वोद्धवःप्रणतआहकृतांजलिस्तम् ॥ १८ ॥ ॥ उद्धवउवाच ॥ ॥ प्रद्युम्नेनप्रकथितंशृणुराजेंद्रसत्तम ॥ उग्रसेनःक्षितीशेन्द्रोयादवेन्द्रोमहाबलः ॥ १९ ॥ विजित्यनृपतीन्सर्वान्राजसूयंकरिष्यति ॥ प्रेषितस्तेनसेनाभिःप्रद्युम्नोरुक्मिणीसुतः ॥ २० ॥ जेतुंमहोद्भटान्वीराञ्जम्बूद्वीपस्थितान्नृपान् ॥ चैद्यशाल्वजरासन्धदन्तवक्रादिभूपतीन् ॥ २१ ॥ विजित्यचागतःकार्ष्णिस्तस्मैयच्छबलिंबहुम् ॥ उपायनंचदातव्यंबन्धूनामैक्यकाम्यया ॥ २२ ॥ माभूत्कुरूणांवृष्णीनांकलिर्नोचेद्भविष्यति ॥ तेनोदितंमेकथितंतत्क्षमस्वनृपेश्वर ॥ दूतस्यहिनदोषःस्यात्त्वयोक्तंयद्वदामितत् ॥ २३ ॥ ॥ नारदउवाच ॥ ॥ तच्छ्रुत्वाकौरवाःसर्वेराजन्सञ्जातमन्यवः ॥ वीर्यशौर्यमदोन्नद्धाऊचुःप्रस्फुरिताधराः ॥ २४ ॥ ॥ कौरवाऊचुः ॥ ॥ दुरत्ययाकालगतिरहोचित्रमिदंजगत् ॥ सिंहोपरिप्रधावन्तिशृगालादुर्बलावने ॥ २५ ॥ अस्मत्सकाशात्संवृद्धाअस्मद्दत्तनृपासनाः ॥ दातॄणांप्रतिकूलाःस्युःपीयूषंफणिनोयथा ॥२६॥ वृष्णयोभीरवःसर्वेयुधिविक्लवचेतसः ॥ तेद्यैवशासनंकर्तुंप्रवृत्ताहिगतह्रियः ॥ २७ ॥ उग्रसेनोल्पवीर्यश्चजम्बूद्वीपस्थितान्नृपान् ॥ विजि

त्याहोबलिंनीत्वाराजसूयंकरिष्यति ॥ २८ ॥ यत्रभीष्मश्चकर्णश्चद्रोणोदुर्योधनादयः ॥ तत्रत्वंप्रेषितोमन्त्रीप्रद्युम्नेनकुबुद्धिना ॥ २९ ॥
तस्माद्यातपुरीमब्धौयूयंवैजीवनेच्छया ॥ नचेद्यास्यथवःसर्वान्नयामोयमसादनम् ॥ ३० ॥ ॥ नारदउवाच ॥ ॥ इत्थंश्रीकृष्णविमु
खैःकौरवैःपरिभाषितम् ॥ श्रुत्वोद्धवःशम्बरारिमेत्यसर्वमुवाचह ॥ ३१ ॥ कौरवोक्तवचःश्रुत्वाप्रद्युम्नोधन्विनांवरः ॥ प्रतिशार्ङ्गंसंगृहीत्वा
रोषात्प्रस्फुरिताधरः ॥३२॥ प्रद्युम्नउवाच ॥ कौरवान्घातयिष्यामिबन्धूनपिमदोद्धतान्॥बाणैस्तीक्ष्णैर्यथायोगीनियमैर्देहजारुजः ॥३३॥
यदूनांसैन्यचक्रेषुबलिंयोनप्रदास्यति ॥ कौरवेभ्योपिसपुमान्पितुर्मातुर्नचौरसः ॥३४॥ ॥ नारदउवाच ॥ ॥ यदैवयादवाःसर्वेभोजवृष्ण्य
न्धकादयः॥गजाह्वयंययुःसैन्यैराजन्सञ्जातमन्यवः॥३५॥इति०श्रीग०सं०वि०कुरुदेशगमनेकौरवोपाख्याननामैकोनविंशोऽध्यायः॥१९॥
॥नारदउवाच॥तदैवकौरवाःसर्वेनिर्गतादीप्तमन्यवः॥स्वैःस्वैर्बलैःसमायुक्तायोद्धुंप्रद्युम्नसम्मुखे॥१॥ विजयध्वजसंयुक्तारत्नकम्बलमण्डिताः ॥
गजाःषष्टिसहस्राणिनिर्ययुःस्वर्णशृंखलाः॥२॥प्रलयाब्धिमहावर्तसंघर्षध्वनिकारिणाम् ॥ गजाःषष्टिसहस्राणिदुंदुभीनांविनिर्गताः ॥ ३ ॥
गजवाहाबृहद्वह्लालोहकंचुकमण्डिताः ॥ शिरस्त्रमौलिसंयुक्ताद्विलक्षाणिविनिर्ययुः ॥ ४ ॥ हेमकङ्कणकेयूरकिरीटचलकुण्डलाः ॥ ॥ गज
स्थाश्चद्विलक्षाणिनिर्ययुःस्वर्णकंचुकाः ॥ ५ ॥ पीतकंचुकसंयुक्तास्तिर्यगुष्णीषशालिनः ॥ गजस्थाश्चद्विलक्षाणिसङ्ग्रामेलब्धकीर्तयः ॥
॥ ६ ॥ रक्ताम्बरधराःकेचिद्रक्तभूषणभूषिताः ॥ रक्तकम्बलसंयुक्तैर्गजैरुच्चैर्विनिर्गताः ॥ ७ ॥ कृष्णाम्बरधरानागैर्हरिद्वस्त्रसमावृताः ॥
केचिच्छुक्लाम्बराःकेचिन्निर्ययुःपाटलाम्बराः ॥ ८ ॥ रथैश्चदेवधिष्ण्याभैर्मृगेन्द्रध्वजशोभितैः ॥ पतत्पताकैरत्युच्चैर्निर्ययुःकोटिशोनृपाः ॥
॥ ९ ॥ आङ्गैर्वांगैःसैन्धवैश्चचंचलैस्तुरगैर्नृपाः ॥ मनोजवैःस्वर्णभूषैर्निर्युयुःशस्त्रसंवृताः॥१०॥ समन्तान्निर्ययौवीरालोहकंचुकमण्डिताः ॥
विद्याधरसमाराजन्संकुलायुद्धशालिनः ॥ ११ ॥ जगुर्यशःकौरवाणांसूतमागधबन्दिनः ॥ भेरीमृदंगैःपटहैरानकैर्युद्धनिःस्वनैः ॥ १२ ॥
मृगेंद्रध्वजसंयुक्तैःशुक्लवाहनियोजितैः ॥ व्यजनैर्[illegible]चामरान्दोलराजितैः ॥ १३ ॥ चतुर्योजनमात्रेणचन्द्रमण्डलचारुणा ॥ छत्रेण
मण्डितोराजन्निन्द्रदत्तेमनोहरे ॥ १४ ॥ दुर्योधनोबभौसैन्येमहतिस्यन्दनेस्थितः ॥ तथान्येधार्तराष्ट्राश्चस्यन्दनेस्यन्दनेस्थिताः ॥ १५ ॥

चतुर्योजनमात्रैश्चछत्रैर्मुक्ताविलम्बिभिः ॥ सरथेनापिभीष्मेणकृपेणगुरुणासह ॥ १६ ॥ बाह्लीककर्णशल्यैश्चसोमदत्तेनधीमता ॥ अश्व
त्थाम्नाचधौम्येनलक्ष्मणेनधनुष्मता ॥१७॥ शकुनेनचवीरेणतथादुःशासनेनच ॥ संजयेनतथासाक्षाद्भूरिणायक्षकेतुना ॥१८॥ सुयोधनो
नृपैरेजेयथाशक्रोमरुद्गणैः ॥ इन्द्रप्रस्थात्पाण्डुपुत्रैःप्रेषितंपृतनाद्वयम् ॥१९॥ तदैवचागतंराजन्कौरवाणांसहायकृत् ॥ अक्षौहिणीभिःषोडश
भिःकुरूणांचलतांतदा ॥ २० ॥ चचालभूर्दिशोनेदूरजोव्याप्तंनभोभवत् ॥ तारकेवबभौसूर्योगजाश्वरथरेणुभिः ॥ २१ ॥ अन्धकारोभव
द्भूमौदेवाःसर्वेपिशंकिताः ॥ ॥ यत्रतत्रगजानाञ्चचोदनाभिश्चभूरुहाः ॥ २२ ॥ निपेतुस्तुरगैर्वीरैःक्षणंभूखण्डमण्डलम् ॥ सेनाःकुरूणांवृ
ष्णीनांयुयुधुश्चपरस्परम् ॥ २३ ॥ तीक्ष्णैःशस्त्रैर्यथासप्तसमुद्रास्तरलैर्लये ॥ हयाहयैरिभाश्चेभैरथिनोरथिभिःसह ॥ २४ ॥ श्येनैःश्येना
इवक्रव्येपत्तयःपत्तिभिर्मृधे ॥ महामात्यैर्महामात्याःसूताःसूतैर्नृपैर्नृपाः ॥ २५ ॥ युयुधुःक्रोधसंयुक्ताःसिंहैःसिंहाइवौजसा ॥ खड्गैःकुन्तैःश
क्तिभिश्चभल्लैःपट्टिशमुद्गरैः ॥ २६ ॥ गदाभिर्मुसलैश्चक्रैस्तोमरैर्भिंदिपालकैः ॥ शतघ्नीभिर्भुशुण्डीभिःकुठारैश्चस्फुरत्प्रभैः ॥ २७ ॥ चि
च्छिदुर्बाणपटलैःशिरांसिक्रोधमूर्च्छिताः ॥ बाणान्धकारेसञ्जातेप्रद्युम्नोधन्विनांवरः ॥ २८ ॥ दुर्योधनेनयुयुधेधनुष्टंकारयन्मुहुः ॥ अनि
रुद्धश्चभीष्मेणदीप्तिमांश्चकृपेणवै ॥ २९ ॥ भानुर्द्रोणेनसाम्बस्तुबाह्लीकेनमहात्मना ॥ मधुःकर्णेनचायुध्यद्बृहद्भानुःशलेनवै ॥ ३० ॥
चित्रभानुर्हरेःपुत्रःसोमदत्तेनधीमता ॥ अश्वत्थाम्नावृकश्चैवारुणोधौम्येनमैथिल ॥ ३१ ॥ पुष्करोलक्ष्मणेनाशुदुर्योधनसुतेनवै ॥ वेदबा
हुःकृष्णसुतःशकुनेनमहामृधे ॥३२॥ दुःशासनेनसमरेश्रुतदेवोहरेःसुतः ॥ तथाहियुयुधेयुद्धेसञ्जयेनसुनन्दनः ॥ ३३ ॥ विदुरेणगदःसाक्षा
त्कृतवर्माचभूरिणा ॥ अक्रूरोयुयुधेराजन्नाहवेयक्षकेतुना ॥ ३४ ॥ एवंपरस्परंयुद्धंबभूवतुमुलंमहत् ॥ कार्ष्णिर्विलोडयामासदुर्योधनबलंम
हत् ॥ ३५ ॥ बाणसंघेनवाराहोदंष्ट्र्याचयथार्णवम् ॥ बाणसंभिन्नकुम्भानांकरिणांप्रपतन्तिखात् ॥ ३६ ॥ मुक्ताफलानिरेजुःकौरात्रौता
रागणाइव ॥ बाणैःसम्पातयामासरथिनःसारथीन्रथान् ॥ ३७ ॥ महामृधेमैथिलेन्द्रवेगैर्वातोयथातरून् ॥ दुर्योधनस्तदाप्राप्तोधनुष्टंका
रयन्मुहुः ॥ ३८ ॥ प्रद्युम्नंताडयामाससायकैर्दशभिर्मृधे ॥ तान्प्रचिच्छेदभगवान्प्रद्युम्नोधन्विनांवरः ॥ ३९ ॥ दुर्योधनःपुनस्तस्यकवचे

सायकान्दश ॥ निचखानस्वर्णपुंखान्भित्त्वावर्मतनौगताः ॥ ४० ॥ सहस्रैर्बाणपटलैःसहस्राश्वाञ्जघानह ॥ चिच्छेदबाणशतकैःकोदण्डं
सगुणंपरम् ॥ ४१ ॥ शम्बरारेर्महावीरोधृतराष्ट्रसुतोबली ॥ प्रद्युम्नस्तंरथंत्यक्त्वाथान्यमारुह्यसत्वरम् ॥ ४२ ॥ कृष्णदत्तंधनुर्नीत्वासज्यंकृ
त्वाविधानतः ॥ एकंबाणंसमाधायकर्णांतंतच्चकर्षह॥४३॥ भुजदण्डस्यवेगेनतद्रथेनिचखानह ॥ गृहीत्वातद्रथंबाणोभ्रामयित्वाघटीद्वयम्॥
॥ ४४ ॥ आकाशात्पातयामासकमण्डलुमिवार्भकः ॥ पतनेनरथःसद्यश्चूर्णीभूतोबभूवह ॥ ४५ ॥ सस्रुताश्चहयाःसर्वेपञ्चतांप्रापुरग्रतः ॥
अन्यंरथंसमास्थायधार्तराष्ट्रोमहाबलः ॥ ४६ ॥ प्रद्युम्नंताडयामासदशभिःसायकैर्मृधे ॥ तैस्ताडितोहरेःपुत्रोमालाहतइवद्विपः ॥ ४७ ॥
कृष्णदत्तेचकोदण्डेतथैकंबाणमादधे ॥ बाणस्तंसरथंनीत्वायावत्प्रागान्महाम्बरे ॥ ४८ ॥ तावद्बाणोद्वितीयोपितंगृहीत्वाययौत्वरम् ॥
तावत्तृतीयःसम्प्राप्तोनीत्वातंमन्दिराजिरे ॥४९॥ धृतराष्ट्रसमीपेचसरथंसाश्वसारथिम् ॥ आकाशात्पातयामासपद्मकोशमिवानिलः॥५०॥
बाणोपितंपातयित्वातूणेकार्ष्णेःसमाययौ ॥ पतनेनविशीर्णोभूद्गारइवतद्रथः ॥ सुयोधनोमूर्च्छितोभूदुद्वमन्रुधिरंमुखात् ॥ ५१ ॥
॥ इति श्रीमद्गर्गाचार्यसंहितायांविश्वजित्खण्डेनारदबहुलाश्वसंवादे कौरवयुद्धवर्णनंनामविंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ छ ॥
॥ नारदउवाच ॥ ॥ दुर्योधनेगतेतत्रहाहाकारोमहानभूत् ॥ तदादेवव्रतोभीष्मोगांगेयःप्रययौत्वरम् ॥ १ ॥ यदूनांपश्यतांतेषांधनुष्ट
ङ्कारयन्मुहुः ॥ भस्मीकर्तुंयदुबलंवनंवह्निरिवज्वलन् ॥ २ ॥ सर्वधर्मभृतांश्रेष्ठोमहाभागवतःकविः ॥ वीरयूथाग्रणीर्येनरामोपियुधितो
षितः ॥ ३ ॥ शिरस्त्रीमुकुटीगौरःसितश्मश्रुःपितामहः ॥ यथाषोडशवर्षीयोयुद्धान्तंविचरन्बलात् ॥ ४ ॥ बाणैर्निपातयामासानिरुद्धस्य
बलंमहत् ॥ करिणश्छिन्नशिरसोहयास्तेभिन्नकन्धराः ॥ ५ ॥ खड्गहस्ताभीष्मबाणैःपत्तयोपिद्विधाभवन् ॥ रथाश्चूर्णीकृताजाताहतसू
ताश्वनायकाः ॥ ६ ॥ अधोमुखाऊर्ध्वमुखाश्छिन्नपादानृपात्मजाः ॥ खड्गहस्ताधनुर्हस्ताःपतिताश्छिन्नबाहवः ॥ ७ ॥ केचिद्द्वैश्छिन्नक
वचानिपेतुर्भूमिमण्डले ॥ अश्वैर्वीरैरथैर्नागैःपतितैःस्वर्णभूषितैः ॥ ८ ॥ युद्धमण्डलमारेजेवनंवृक्षैर्हतैर्यथा ॥ शस्त्रदन्ताबाणकेशाध्वजवस्त्रा
करिस्तना ॥ ९ ॥ रथाङ्गकुण्डलाराजन्महामारीवभूर्वभौ ॥ क्षतजस्रावसम्भूतारथाश्वनरवाहिनी ॥ १० ॥ आपगाभून्महादुर्गानरैर्वैतर

करिस्तनी ॥ ९ ॥ रथाङ्गकुण्डलाराजन्महामारीवभूवैभौ ॥ क्षतजस्रावसम्भूतारथाश्वनरवाहिनी ॥ १० ॥ आपगाभून्महादुर्गानिरैवैतर

णीयथा ॥ कूष्माण्डोन्मादवेतालानदन्तोभैरवंस्वनम् ॥ ११ ॥ हरमालार्थमागत्यजगृहुर्नृशिरांसिच ॥ रथेनातिपताकेनानिरुद्धोधन्वि
नांवरः ॥ १२ ॥ स्वबलंपतितंदृष्ट्वाप्रागाद्भीष्मंमृधेमहान् ॥ प्रलयाब्धिमहावर्तभीमसंघर्षनादिनीम् ॥ १३ ॥ धनुर्ज्यांतस्यचिच्छेदबा
तुण्डा स्त्री णेनैकेनकार्ष्णिजः ॥ तुण्डयातीक्ष्णयाराजन्गरुडःसर्पिणींयथा ॥ १४ ॥ भीष्मोन्यद्धनुरादायसज्यंकृत्वातदात्मवान् ॥ सर्वेषांपश्यतां
तत्रब्रह्मास्त्रंसन्दधेमृधे ॥ १५ ॥ ततःप्रादुष्कृतंतेजःप्रचण्डंवीक्ष्यमाधवः ॥ स्वबलस्यापिरक्षार्थंब्रह्मास्त्रंसन्दधेस्वयम् ॥ १६ ॥ द्वादशा
दित्यसंकाशेयुयुधातेपरस्परम् ॥ त्रीँल्लोकान्दहतीद्वेयेनिरुद्धस्तंजहारह ॥ १७ ॥ गाङ्गेयस्यापिकोदण्डंतडिद्वर्णंयदूत्तमः ॥ चिच्छेदसा
यकैःसूर्योनीहारमिवरश्मिभिः ॥ १८ ॥ भीष्मोगृहीत्वाथगदांलक्षभारविनिर्मिताम् ॥ प्राहिणोदनिरुद्धायसिंहनादंतदाकरोत् ॥ १९ ॥
गृहीत्वातांवामहस्तेगरुत्मानिवपन्नगीम् ॥ प्रद्युम्नोभगवान्साक्षात्प्राहिणोत्स्वांगदांहृदि ॥ २० ॥ गदाप्रहारव्यथितोमूर्च्छितःपतितोर
थात् ॥ बभौसूर्योयथाकाशाद्गांगेयोमृधमण्डले ॥ २१ ॥ कृपाचार्योपितत्रैवानिरुद्धायमहात्मने ॥ शक्तिंचिक्षेपसहसारुषाप्रस्फुरिताधरः॥
॥ २२ ॥ दीप्तिमान्कृष्णपुत्रस्तुपथिचिच्छेदतांनृप ॥ खड्गेनशितधारेणकुवाक्येनेवमित्रताम् ॥ २३ ॥ द्रोणाचार्योमहाबाहुर्भानूपरिरुषा
न्वितः ॥ चिक्षेपपार्वतंचास्त्रंधनुष्टङ्कारयन्मुहुः ॥ २४ ॥ पतन्तःपर्वताव्योम्नश्चूर्णयन्तोद्विषद्बलम् ॥ तेषांपातेनराजेन्द्रहाहाकारोमहान
भूत् ॥ २५ ॥ तदाहरेःसुतोभानुर्वायव्यास्त्रंसमादधे ॥ तद्वातेनाद्रयःसर्वेउड्डिताह्यभवन्रणात् ॥ २६ ॥ बाह्लिकस्तुतदाक्रुद्धोब्रह्मास्त्रंसन्द
धेततः ॥ भस्मीभूतंबलंजातंवह्निनेवमहद्वनम् ॥ २७ ॥ पार्जन्यमाददेतत्रसाम्बोजाम्बवतीसुतः ॥ तेनशान्तिंगतोवह्निर्ज्ञानेनैवत्व
हङ्कृतिः ॥ २८ ॥ ॥ कर्णस्ततोमधुंहित्वासाम्बोपरिरुषान्वितः ॥ जघानबाणविंशत्याजगर्जघनवद्बली ॥ २९ ॥ तद्बाणैःसरथः
साम्बोवभ्रामघटिकाद्वयम् ॥ क्रोशंपुनःप्रपतितःकिञ्चिद्व्याकुलमानसः ॥ ३० ॥ पुनर्गदांसमादायरथंत्यक्त्वासमेत्यसः ॥ तता
डगदयाकर्णंसाम्बोजाम्बवतीसुतः ॥ ३१ ॥ गदाप्रहारव्यथितःपतितोधरणीतले ॥ मूर्च्छांप्रापरणेराजन्कर्णोवीरोमहाबलः ॥ ३२ ॥
सांबोपिस्वधनुर्नीत्वारथमारुह्यवेगतः ॥ शलंजघानविंशत्यासोमदत्तंचपञ्चभिः ॥ ३३ ॥ द्रौणिंचदशभिर्बाणैर्धौम्यंषोडशभिस्सह ॥

लक्ष्मणंदशभिस्तत्रशकुनिंपञ्चभिस्तथा ॥ २४ ॥ दुःशासनंचविंशत्याविंशत्यासञ्जयंपृथक् ॥ भूरिंबाणशतैराजन्यक्षके शतैः शितैः ॥
 ॥ २५ ॥ बाणैर्जघानसमरेजगर्जघनवद्बली ॥ दशभिर्दशभिर्नेतॄनेकैकेनगजान्हयान् ॥२६॥ पञ्चभिःपञ्चभिर्वीरान्बाणैःसाम्बस्तताडह ॥
वीक्ष्यजाम्बवतीसूनोःसाम्बस्यकरलाघवम् ॥ २७ ॥ स्वेपरेसैनिकाःसर्वेविस्मयंपरमङ्गताः ॥ तदाभीष्मःसमुत्थायगृहीत्वाधनुरुत्तमम् ॥
॥ २८ ॥ चिच्छेददशभिर्बाणैःसाम्बकोदंडमुत्तमम् ॥ भीष्मोमहाबलोवीरोद्रोणाचार्यश्चसायकैः ॥ २९ ॥ कर्णस्त्रयोयदुबलंजघ्नुर्ज्ञानं
यथागुणाः ॥ दुर्योधनःपुनर्योद्धुंरथमारुह्यमानद ॥ ४० ॥ अहौक्षिणीभिर्दशभिर्नादयन्नाययौमृधे ॥ ४१ ॥ देवौपुराणौपुरुषौतदा
विर्बभूवतुर्मैथिलरामकृष्णौ ॥ सुपर्णतालध्वजशालियानौप्रद्योतयन्तौपरितोदिशस्तौ ॥ ४२ ॥ तदाजयारावसमाकुलाःसुरागन्धर्व
मुख्याश्चजगुर्मनोहरम् ॥ सुरानकादुन्दुभयोविनेदुःश्रीलाजपुष्पैर्ववृषुःसुरस्त्रियः ॥ ४३ ॥ तदैवनेमुर्यदवःपरेश्वरौदुर्योधनाद्याःकुरवस्तुसर्व
तः ॥ निधायशस्त्राणिददुर्बलिंपरंसर्वेप्रसन्नाःकृतहस्तसम्पुटाः ॥ ४४ ॥ प्रद्युम्नमुख्यान्स्वसुतान्मदोद्धतान्निर्भर्त्स्यवाग्भिःपरमेश्वरौ
तदा ॥ प्रणम्यदेवव्रतमुख्यकौरवान्समेत्यदुर्योधनमूचतुःपरौ ॥ ४५ ॥ ॥ श्रीरामकृष्णावूचतुः ॥ ॥ राजन्यदेभिःकिलबालबुद्धि
भिस्तत्क्षम्यतांमाभवदुर्मनाः स्वतः ॥ यद्वातुकिंचित्परुषंप्रकीर्तितंप्रकीर्त्यतांनौभवतानृपेश्वर ॥ ४६ ॥ माभूत्कुरूणांभुवियादवानांक
दापिकिञ्चित्कलिरेवराजन् ॥ संबंधिनोज्ञातयएवसर्वेनिचोलवस्त्रांतवहप्रियार्थाः ॥ ४७ ॥ ॥ नारदउवाच ॥ ॥ पूजितौकुरुभिःश
श्वद्रामकृष्णौसुरेश्वरौ ॥ प्रद्युम्नाद्यैःसयदुभीरेजतुर्मैथिलेश्वर ॥ ४८ ॥ ॥ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडे नारदबहुलाश्व
संवादेकुरुदेशविजयेकौरवसम्मेलनंनामैकाविंशतितमोऽध्यायः ॥ २१ ॥ ॥ श्रीनारदउवाच ॥ दुर्योधनंशान्तयित्वासानुजैःकुरु
भिःसह ॥ जग्मतुःपाण्डवान्द्रष्टुमिन्द्रप्रस्थंयदूत्तमौ ॥ १ ॥ इन्द्रप्रस्थात्ततोराजाऽजातशत्रुर्युधिष्ठिरः ॥ भ्रातृभिःस्वजनैःसार्द्धंनेतुंकृष्णं

समाययौ ॥ २ ॥ शंखदुन्दुभिनादेनब्रह्मघोषेणवेणुभिः ॥ पुष्पवर्षप्रकुर्वद्भिरिन्द्रप्रस्थनिवासिभिः ॥ ३ ॥ रामकृष्णौपरिष्वज्यदोर्भ्यांरा
जायुधिष्ठिरः ॥ परमांनिर्वृतिंलेभेयोगीवानन्दसंवृतः ॥ ४ ॥ प्रद्युम्नाद्याहरिसुताःप्रणेमुःश्रीयुधिष्ठिरम् ॥ युधिष्ठिरोनुजग्राहकराभ्यांतान्कृ

जायुधिष्ठिरः ॥ परमांनिर्वृतिंलेभेयोगीवानन्दसंवृतः ॥ ४ ॥ प्रद्युम्नाद्याहरिसुताःप्रणेमुःश्रीयुधिष्ठिरम् ॥ युधिष्ठिरोनुजयाहकराभ्यांतान्कृ

ताशिषः ॥ ५ ॥ अर्जुनंभीमसेनश्चपरिरभ्यहरिःस्वयम् ॥ पप्रच्छकुशलंतेषांयमाभ्यांचाभिवन्दितः ॥ ६ ॥ परिपूर्णतमौसाक्षाद्रामकृष्णौ
स्वयंहरी ॥ असंख्यब्रह्माण्डपतीहरिदासेनपूजितौ ॥ ७ ॥ प्रस्थाप्ययदुमुख्यांश्चप्रद्युम्नादीन्ससैनिकान् ॥ समग्रांजगतींजेतुंचाज्ञांदत्त्वा
विधानतः ॥८॥ मिलित्वासानुजंधर्मंसर्वेशौभक्तवत्सलौ ॥ द्वारकांजग्मतूराजन्गौरश्यामौमनोहरौ ॥९॥ इत्थंश्रीकृष्णचरितंमयातेकथितं
नृप ॥ चतुष्पदार्थदंनृणांकिंभूयःश्रोतुमिच्छसि ॥ १० ॥ ॥ बहुलाश्वउवाच ॥ ॥ कुशस्थलींगतेकृष्णेसबलेपुरुषोत्तमे ॥ ततश्चकारकिं
साक्षात्प्रद्युम्नोभगवान्हरिः ॥ ११ ॥ अद्भुतंतस्यचरितंश्रवणीयंमनोहरम् ॥ मुक्तानामपिभक्तानांजिज्ञासूनांपुनःकिमु ॥ १२ ॥ अर्था
र्थिनामर्थदंसदार्तानामार्तिनाशनम् ॥ चतुर्विधानांजीवानांसर्वेषांपापनाशनम् ॥ १३ ॥ कथंदिग्विजयंकृत्वादिग्जयार्थीहरेःसुतः ॥ आ
जगामपुनःसैन्यैरेतन्मेवदतत्त्वतः ॥ १४ ॥ देवर्षेत्वंब्रह्मसुतोभगवान्सर्वदर्शनः ॥ श्रीकृष्णस्यमनःसाक्षात्तस्मैतेहरयेनमः ॥ १५ ॥ ॥ श्री
नारदउवाच ॥ ॥साधुपृष्टंत्वयाराजन्धन्यस्त्वंतत्प्रभाववित् ॥ श्रीकृष्णचरितंश्रोतुंपात्रंत्वमसिभूतले ॥ १६ ॥ कृष्णेयातेजातशत्रूर
क्षार्थंस्नेहतोनृप ॥ शत्रुभ्यःशंकितःकार्ष्णेःप्रायुंक्ताशुकिरीटिनम् ॥१७॥ अथकार्ष्णिर्यदुश्रेष्ठःफाल्गुनेनसमंनृप॥विकर्षन्महतींसेनांत्रिगर्ता
न्प्रययौत्वरम्॥१८॥त्रिगर्ताधीश्वरोधन्वीसुशर्मातेनशंकितः ॥ उपायनंददौतस्मैप्रद्युम्नायमहात्मने ॥१९॥ विराटेनतथाराज्ञापूजितोयाद
वेश्वरः ॥ सरस्वतींनदींस्नात्वाकुरुक्षेत्रंददर्शह ॥२०॥ पृथूदकंबिन्दुसरस्त्रितंकूपंसुदर्शनम् ॥ स्नात्वासारस्वतान्प्रागादत्वादानान्यनेकशः॥
॥२१॥ सारस्वताधिपोराजाकुशाम्बोनददौबलिम्॥कौशाम्बीनगरीमेत्यदुर्योधनवशानुगः॥२२॥चारुदेष्णःसुदेष्णश्चचारुदेहश्चवीर्यवान् ॥
सुचारुश्चारुगुप्तश्चभद्रचारुस्तथापरः ॥ २३ ॥ चारुचन्द्रोविचारुश्चचारुश्चदशमस्तथा ॥ रुक्मिणीनन्दनाह्येतेप्रद्युम्नेनप्रणोदिताः ॥ २४॥
सिन्धुदेशहयारूढाःसर्वेषांपश्यतांगताः ॥ कौशाम्बींनगरीमेत्यचक्रुर्नाराचदुर्दिनम् ॥२५॥ बाणैःप्रासादशिखराध्वजकुम्भादितोलिकाः ॥
चूर्णीभूतानिपेतुःकौलंकाट्टालायथामृगैः ॥ २६ ॥ बाणान्धकारेचकृतेरुक्मिणीनन्दनैर्यदा ॥ तदोपायनपाणिःसन्कुशाम्बोनिर्गतःपु
रात् ॥ २७ ॥ कृताञ्जलिःशम्बरारिंदत्त्वानत्वाबलिंबहुम् ॥ जुगोपनगरींराजाभयार्तोभयविह्वलः ॥ २८ ॥ तदैवसौवीरपतिःसुदेवआभी

रनाथोपिविचित्रनामा ॥ चित्रांगदःसिन्धुपतिर्महौजाःकाश्मीरपोजांगलपःसुमेरुः ॥ २९ ॥ लाक्षेश्वरोधर्मपतिर्बिडौजागान्धारमुख्योपिसु
योधनस्य ॥ वशेस्थितास्तेपिभयात्किलैतेदत्त्वाबलिंनेमुरतीवकार्ष्णिम् ॥ ३० ॥ ययौकार्ष्णिर्महाबाहुःस्वसैन्यपरिवारितः ॥ अर्बुदा
न्म्लेच्छदेशांश्चजेतुंकलिकारिवोद्भटः ॥ ३१ ॥ कालस्यापिसुतश्चण्डोयवनेन्द्रोमहाबलः ॥ कार्ष्णिंसमागतंश्रुत्वासंमुखात्कोपपूरितः ॥
॥ ३२ ॥ पितृहन्तुःसुतंहत्वायास्याम्यपचितिंपितुः ॥ इत्थंविचार्यमनसाम्लेच्छानांदशकोटिभिः ॥ ३३ ॥ मदच्युतंप्रोन्नदन्तंगजमारु
ह्यरक्तदृक् ॥ निर्ययौसम्मुखेयोद्धुंप्रद्युम्नस्यमहात्मनः ॥ ३४ ॥ आगतांमहतींसेनांशितबाणप्रवर्षिणीम् ॥ चण्डप्रणोदितांदृष्ट्वाप्रद्युम्नोवा
क्यमब्रवीत् ॥ ३५ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ सेनांहत्वापियश्चाण्डंशिरस्त्रसहितंशिरः ॥ आनेष्यतेतंस्वबलेकरिष्यामिध्वजापतिम् ॥
॥ ३६ ॥ ॥ श्रीनारदउवाच ॥ ॥ एवंकार्ष्णौवदत्यारात्फाल्गुनोवानरध्वजः ॥ एकोविवेशगाण्डीवीधनुष्टंकारयन्मुहुः ॥ ३७ ॥ वी
रान्रथान्गजानश्वान्सन्मुखस्थान्द्विधाकरोत् ॥ गाण्डीवमुक्तैर्विशिखैर्गाण्डीवीरणदुर्मदः ॥ ३८ ॥ केचिच्छिन्नभुजाःपेतुःशक्तिखड्गर्ष्टि
पाणयः ॥ छिन्नपादाश्छिन्नमुखाःकेचिद्वीराःसकञ्चुकाः ॥ ३९ ॥ दुद्रुवुःकरिणोयुद्धेभिन्नकक्षाश्चसक्षताः ॥ गतघण्टाःश्लथन्नीडाःपातय
न्तःकरैर्जनान् ॥ ४० ॥ जिष्णुबाणैर्द्विधाभूतैर्गजैरश्वैरणाङ्गणम् ॥ बभौक्षेत्रंशंकुलयाकूष्माण्डशकलैरिव ॥ ४१ ॥ तदैवदुद्रुवुर्म्लेच्छा
स्त्यक्त्वास्वंस्वंरणाङ्गणम् ॥ नभोर्करश्मिसंभिन्नानीहारपटलाइव ॥ ४२ ॥ गजारूढोम्लेच्छपतिःशक्तिंचिक्षेपजिष्णवे ॥ भ्रामयित्वामै
थिलेंद्रसिंहनादमथाकरोत् ॥ ४३ ॥ विद्युल्लतामिवायान्तींबाणैःकृष्णसखोबली ॥ गाण्डीवमुक्तैराजेन्द्रलीलयाशतधाच्छिनत् ॥ ४४ ॥
यावच्चण्डोमहाम्लेच्छोधनुर्जग्राहरोषतः ॥ तावच्चिच्छेदगाण्डीवीबाणेनैकेनलीलया ॥ ४५ ॥ द्वितीयंधनुरादायसचण्डश्चण्डविक्रमः ॥
प्रलयाब्धिमहावर्तभीमसंघर्षनादिनीम् ॥ ४६ ॥ चिच्छेदसिञ्जिनींजिष्णोर्गरुत्मानिवपन्नगीम् ॥ बीभत्सुःस्वमसिंनीत्वास्फुरंतंचर्मणासह
॥ ४७ ॥ जघानतद्गजंकुम्भेशैलइन्द्रोयथापविः ॥ अग्निदत्तेनखड्गेनभिन्नकुम्भोगजोनदन् ॥ ४८ ॥ जानुभ्यांधरणींस्पृष्ट्वाकश्मलंपरमं
ययौ ॥ चण्डःखड्गंगृहीत्वाथप्राहरत्पाण्डुनन्दनम् ॥ ४९ ॥ तत्खड्गंचर्मणोत्रीयप्राहिणोत्स्वकुरूद्वहः ॥ सशिरस्त्रंशिरस्तस्यदेहाच्छि

यये ॥ चण्डःखड्गंगृहीत्वाथप्राहरत्पाण्डुनन्दनम् ॥ ४९ ॥ तत्खड्गंचर्मणाग्रीयप्राहिणोत्स्वकुरूद्वहः ॥ सशिरस्त्राशिरस्तस्यदेहाद्

न्नंबभूवह ॥ ५० ॥ सज्यंकृत्वाधनुर्जिष्णुर्निधायविशिखेचतत् ॥ आकृष्यपातयामासप्रद्युम्नस्यबलेमहत् ॥५१॥ तदादुन्दुभिनादोभूज्जयारा
वसमाकुलः ॥ अर्जुनस्योपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ ५२ ॥ तदैवकार्ष्णिःसबलस्यजिष्णुञ्चकारनाथंविजयध्वजस्य ॥ संवीज्यमानं
सितचामराद्यैःकपिध्वजंयादववृन्दमुख्यैः ॥५३ ॥ वेगवानर्बुदाधीशः प्रद्युम्नंशरणंगतः ॥ उपायनंददौभीरुर्नमस्कृत्यकृताञ्जलिः ॥५४॥
मौरंगेशोमन्दहासोहयानांशतलक्षणम् ॥ दत्त्वाभीरुर्नमश्चक्रेप्रद्युम्नायमहात्मने ॥ ५५ ॥ इत्थंखण्डंभारताख्यंजित्वाकार्ष्णिर्यदूत्तमः ॥
हिमाद्रिंदक्षिणीकृत्यप्रागुदीचींदिशंययौ ॥५६॥ इति श्रीमद्गर्गा०संहितायांविश्वजित्खण्डेनारदबहुलाश्वसंवादेइंद्रप्रस्थत्रिगर्तवैराटकुरुजांग
लकोशाम्बसारस्वतसौवीराभीरसिन्धुकाश्मीरजांगललक्षगान्धारार्बुदम्लेच्छमौरंगदेशविजयेदिग्विजयोनामद्वाविंशतितमोऽध्यायः॥२२॥
॥ नारदउवाच ॥ ॥ नदानद्यःसमुद्राश्चरथवीथिंददुर्नृप ॥ धर्षितास्तेजसातस्मैससैन्यायमहात्मने ॥ १ ॥ कैलासगिरिपार्श्वेचकरवीर
स्यसानुषु ॥ बाणस्यशोणितपुरंप्रययौयादवेश्वरः ॥ २ ॥ बाणासुरोतिसंक्रुद्धोयदून्वीक्ष्यागतान्पुनः ॥ अक्षौहिणीभिर्द्वादशभिर्युद्धंकर्तुं
मनोदधे ॥ ३ ॥ तदैवसाक्षात्पुरुषःपुराणोमहेश्वरोनन्दिवृषस्थितोसौ ॥ हिमाद्रिपुत्रीसहितस्त्रिशूलीसमेत्यबाणंनृपमाहदेवः ॥ ४ ॥
॥ श्रीशिवउवाच ॥ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् ॥ असंख्यब्रह्माण्डपतिर्गोलोकेशःपरात्परः ॥ ५ ॥ त्रयोवयंतत्कला
हिब्रह्मविष्णुशिवाह्वयाः ॥ मूर्ध्नाज्ञांयस्यबिभ्रतित्वादृशानांचकाकथा ॥ ६ ॥ तस्यपौत्रेत्वयाबद्धेनिरुद्धेयेनतेभुजाः ॥ छिन्नाःकृतानजाना
सिसंग्रामेतंहरिंस्वयम् ॥ ७ ॥ तस्मात्तेसामदानाभ्यांपूजनीयाहरेःसुताः ॥ अनिरुद्धःपूजनीयोजामाताातेनसंशयः ॥ ८ ॥ ॥ नददामित्व
नुज्ञांतेयुद्धायासुरपुंगव ॥ नचेद्युद्धंकुरुबलाद्धथादृष्टोमतस्तव ॥ ९ ॥ ॥ श्रीनारदउवाच ॥ ॥ शिवप्रबोधितोबाणोनिरुद्धंधन्विनांवर
म् ॥ समाहूयचसम्पूज्यपारिबर्हंददौपुनः ॥ १० ॥ ससैन्यंसादरेणापिप्रद्युम्नंपूज्यबन्धुवत् ॥ गजायुतंचाश्वकोटिंरथानांपंचलक्षकम् ॥ ११ ॥
ददौबाणोमहाबाहुःप्रद्युम्नायमहात्मने ॥ अथकार्ष्णिर्महाबन्धुःस्वसैन्यपरिवारितः ॥ १२ ॥ अलकांप्रययौधन्वीपुरींगुह्यकमण्डिताम् ॥
श्रीनन्दालकनन्दाभ्यांगंगाभ्यांपरिखीकृताम् ॥ १३ ॥ रत्नसोपानयुक्ताभ्यांयक्षीभिःपरिशोभिताम् ॥ विद्याधरीभिःपरितःकिन्नरी

भिर्मनोहराम् ॥ १४ ॥ दिव्याभिर्नागकन्याभिःपुरींभोगवतीमिव ॥ धनदोनददौतस्मैप्रद्युम्नायबलिंनृप ॥ १५ ॥ हरेःप्रभावविदपिवि ष्णोर्मायाबलंत्वहो ॥ लोकपालोस्म्यहंनित्यमित्यज्ञानविमोहितः ॥ १६ ॥ नोदितोबलिभिर्यक्षैर्युद्धंकर्तुंमनोदधे ॥ निर्धनोहिधनंप्राप्य तृणवन्मन्यतेजगत् ॥ १७ ॥ नवानांतुनिधीनांतुपतीनांकिमुवर्णनम् ॥ तदैवहेममुकुटोदूतोधनदनोदितः ॥ कार्ष्णिमेत्यसभामध्येनत्वेदं प्राहमानद ॥ १८ ॥ ॥ हेममुकुटउवाच ॥ ॥ धनेश्वरोराजराजोलोकपालोलकेश्वरः ॥ तेनयत्कथितंराजञ्छृणुत्वंतद्यदूत्तम ॥ १९ ॥ देवराजोयथाशक्रःस्मृतोनान्योदिविप्रभुः ॥ तथैकोराजराजोहंकथितोभूतलेमहान् ॥ २० ॥ मनुष्यधर्माराजेन्द्रैःपूजितोहंसदाभुवि ॥ उग्रसेनेनदातव्यंमह्यंसोपायनंपरम् ॥ २१ ॥ पराक्तस्मैनदास्यामियदुराजायभूभृते ॥ नमन्यसेचेत्संग्रामंकरिष्यामिनसंशयः ॥ २२ ॥ ॥ नारदउवाच ॥ ॥ एवंदूतवचःश्रुत्वाप्रद्युम्नोभगवान्हरिः ॥ चकारकोपंरक्ताक्षोरुषाप्रस्फुरिताधरः ॥ २३ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ वृष्णीन्द्रंराजराजेन्द्रंराजराजोनवेत्तितम् ॥ शक्रादीनांतुयःसाक्षान्मुकुटैर्घृष्टपादुकः ॥ २४ ॥ सुधर्मांपारिजातंचतस्माइन्द्रोददौभयात् ॥ श्यामकर्णान्हयान्पाशीतस्मैदत्वाननामह ॥ २५ ॥ अनेनराजराजेनभीरुणानिधयोनव ॥ प्राप्तास्तंहिनजानातिराजराजोमहाबलम् ॥ ॥ २६ ॥ वर्ततेतत्सभामध्येपरिपूर्णतमोहरिः ॥ असंख्यब्रह्माण्डपतिःश्रीकृष्णोभगवान्स्वयम् ॥ २७ ॥ यस्यैकमूर्ध्नितिलवद्दृश्यतेमण्ड लंभुवः ॥ उग्रसेनसभामध्येसोपिनित्यंविराजते ॥ २८ ॥ उग्रसेनप्रेषितोहंकुबेरायमहात्मने ॥ नाराचानांबलिंदातुंतत्करिष्यामिसाम्प्र तम् ॥ २९ ॥ ॥ नारदउवाच ॥ ॥ एवमुक्त्वागृहीत्वास्वंकोदण्डंचण्डविक्रमः ॥ चकारभुजदण्डाभ्यांटङ्कारंताडयन्गुणम् ॥ ३० ॥ प्रत्यञ्चास्फोटनेनैवमण्डितोभूत्तडित्स्वनः ॥ ननादतेनब्रह्माण्डंसप्तलोकैर्बिलैःसह ॥ विचेलुर्दिग्गजास्ताराराजन्भूखण्डमण्डलम् ॥ ३१ ॥ तदैवबधिरीभूतापृथिव्याजनमण्डली ॥ तदैवहेममुकुटेदूतेतस्मात्पलायिते ॥ निषंगात्स्वरमाकृष्यप्रद्युम्नोधन्विनांवरः ॥ ३२ ॥ प्रतिशा ङ्गस्वधनुपिबाणमेकंसमादधे ॥ द्वादशादित्यसंकाशंद्योतयन्मण्डलंदिशाम् ॥ ३३ ॥ चिच्छेदगुह्यकेशस्यबाणश्छत्रंसचामरम् ॥ तदा कद्धोराजराजोदृष्ट्वाचित्रमिदंमहत् ॥ ३४ ॥ आरुह्यपुष्पकंसैन्यैर्युद्धकामोविनिर्ययौ ॥ घंटानादेनयक्षेणमन्त्रिणापार्श्वमौलिना ॥ ३५ ॥

नलकूबरमणिग्रीवौशुशुभातेध्वजाग्रतः ॥ तुरङ्गवदनाःकेचिन्मृगेन्द्रवदनाःपरे ॥३६॥ शिशुमारमुखाःकेचित्केचिन्नक्रमुखानृप ॥ अर्धपिङ्गा
अर्धकृष्णऊर्ध्वकेशामदोत्कटाः ॥ ३७ ॥ वक्रदन्ताललज्जिह्वाबृहदोष्ठामहाबलाः ॥ करालास्याःसकवचाःखड्गचर्मगदाधराः ॥ ३८ ॥
शक्तिहस्तायष्टिहस्ताभुशुण्डीपरिघायुधाः ॥ धनुर्बाणधरायक्षाःकेचित्परशुपाणयः ॥ ३९ ॥ यक्षाणांहस्तिवाहानांरथिनामश्विनांतथा ॥
विरेजुर्निर्गतानांचमण्डलानिसहस्रशः ॥ ४० ॥ शंखदुन्दुभिनादैश्चसूतमागधबन्दिभिः ॥ रेजिरेश्रीदवीराःकौमेघाइवतडित्स्वनैः ॥४१॥
एवंयक्षेषुमत्तेषुकोटिशोनिर्गतेषुच ॥ दिव्यान्महायोगमयाञ्छिवक्षेत्राद्विदेहराट् ॥ ४२ ॥ आययौतत्सहायार्थंप्रमथानांबलंमहत् ॥ भूता
श्चप्रमथाःकेचित्करालास्यामदोत्कटाः ॥ ४३ ॥ डाकिन्योयातुधानाश्चवेतालाःसविनायकाः ॥ कूष्माण्डोन्मादसंयुक्ताःप्रेतामातृगणाः
परे ॥ ४४ ॥ पिशाचाश्चपिशाच्यश्चब्रह्मराक्षसभैरवाः ॥ नदन्तोभैरवंनादंछिन्दिभिन्दीतिवादिनः ॥ ४५ ॥ इत्थंतुभूतावलयःकोटिशश्चा
ययुस्तदा ॥ रोदस्याच्छादितेभूतामेघैःसांवर्तकैरिव ॥ ४६ ॥ मयूरस्थःकार्तिकेयोमूषकस्थोगणेश्वरः ॥ प्रमथैर्गीयमानौतौढक्कावादित्रना
दिभिः ॥ ४७ ॥ सर्वेषामग्रतःप्राप्तौवीरभद्रेणसंयुतौ ॥ इत्थंपुण्यजनानांतुगणानांयदुभिःसह ॥ ४८ ॥ बभूवतुमुलंयुद्धमद्भुतंरोमहर्षणम् ॥
रथिनोरथिभिस्तत्रपत्तिभिःसहपत्तयः ॥४९॥ हयाहयैरिभाश्चेभैर्युयुधुस्तेपरस्परम् ॥ रथेभाश्वपदातीनांचरणैरुत्थितंरजः ॥ छादयामासरा
जेन्द्रससूर्यंव्योममण्डलम्॥५०॥इतिश्रीमद्गर्गा॰सं॰वि॰ना॰संवादेकरवीरदेशविजयेयक्षदेशप्रयाणंनामत्रयोविंशतितमोऽध्यायः ॥ २३ ॥
॥ श्रीनारदउवाच ॥ ॥ शस्त्रान्धकारेसंजातेमणिग्रीवोमहाबलः ॥ बिभेदारिबलंबाणैःकुवाक्यैर्मित्रतामिव ॥ १ ॥ मणिग्रीवस्यबाणौघै
र्गजाश्वरथपत्तयः ॥ निपेतुःसक्षताभूमौवृक्षावातहताइव ॥ २ ॥ चन्द्रभानुर्हरेःपुत्रःसत्यभामात्मजोबली ॥ मणिग्रीवस्यकोदण्डमच्छि
नद्बाणपञ्चभिः ॥ ३ ॥ दशभिस्तद्रथंछित्वाजगर्जघनवद्बली ॥ मणिग्रीवोपिचिक्षेपशक्तिंस्वांचन्द्रभानवे ॥ ४ ॥ भासयन्तींदिशःशश्व
न्महोल्कामिवमैथिल ॥ अग्रहीच्चन्द्रभानुस्तांवामहस्तेनलीलया ॥ ५ ॥ तयाजघानसमरेमणिग्रीवंमहाबलम् ॥ पुनर्जगर्जसमरेचन्द्रभा
नुर्महाबलः ॥ ६ ॥ तत्प्रहारेणपतितेमणिग्रीवेप्रमूर्च्छिते ॥ चन्द्रभानुंबाणजालैर्नलकूबरनोदिताः ॥ ७ ॥ छादयामासुरसुरावर्षादित्यंयथा

म्बुदाः ॥ दीप्तिमान्कृष्णपुत्रस्तुखड्गमुद्यम्यवेगवान् ॥८॥ विवेशयक्षसेनासुनीहारेषुयथारविः ॥ तस्यखड्गप्रहारेणकेचिद्यक्षाद्विधाभवन् ॥
॥ ९ ॥ केचिद्विच्छिन्नशिरसश्छिन्नपादांसबाहवः ॥ भिन्नहस्ताश्छिन्नकर्णाश्छिन्नोष्ठाःपेतुराहवे ॥ १० ॥ तेषांशिरोभिर्बीभत्सैःसकिरी
टैःसकुण्डलैः ॥ सशिरस्त्रैःस्वद्रक्तैर्महामारीवभूर्बभौ ॥ ११ ॥ शेषाविदुद्रुवुर्यक्षाःसक्षताभयविह्वलाः ॥ हाहाकारस्तदाजातोयक्षसेना
सुमैथिल ॥१२॥ धनुष्टंकारयन्प्राप्तोदंशितोनलकूबरः ॥ रथेनातिपताकेनमाभैष्टेत्यभयंददौ॥१३॥ पञ्चभिःकृतवर्माणमर्जुनंदशभिःशरैः ॥
दीप्तिमन्तश्चविंशत्याताडनलकूबरः ॥ १४ ॥ कृतवर्मामहाबाहुर्जघाननलकूबरम् ॥ पञ्चभिर्विशिखैराजन्नादयन्मण्डलंदिशाम् ॥
॥ १५ ॥ तेबाणाःकवचंभित्त्वातनुंभित्वाधरातलम् ॥ विविशुःपश्यतांतेषांवल्मीकंफणिनोयथा ॥ १६ ॥ वीक्ष्यतद्बाणभिन्नांगंमूर्छितंनलकू
बरम् ॥ अपोवाहरणात्सूतोहेममालीतिनामभाक् ॥ १७ ॥ घण्टानादःपार्श्वमौलिःकुबेरस्यचमन्त्रिणौ ॥ जघ्नतुर्बाणपटलैर्यदूनामुद्भटंबलम्
॥१८॥ स्वर्णपुंखैस्तीक्ष्णमुखैर्गृध्रपक्षैर्मनोजवैः ॥ द्योतयद्भिर्दिशःसर्वामार्तण्डकिरणैरिव ॥ १९ ॥ ततोर्जुनोमहावीरःप्रतिबाणान्समादधे ॥
बाणसंघर्षणजायुद्धेविस्फुलिङ्गाःसहस्रशः ॥ २० ॥ विरेजुर्नृपखद्योतचञ्चलालातचक्रवत् ॥ सर्वंतद्बाणपटलंक्षणमात्रेणचाच्छिनत् ॥२१॥
गाण्डीवमुक्तैर्विशिखैर्गाण्डीवीरणदुर्मदः ॥ योजनद्वयमात्रेणतद्रथौस्मध्वजौबलात् ॥ २२ ॥ अर्जुनोबाणपटलैश्चकारशरपञ्जरम् ॥ हतावि
मावितिज्ञात्वासर्वेपुण्यजनास्त्वरम् ॥ २३ ॥ दुद्रुवुःस्वंरणंत्यक्त्वापरंहाहेतिवादिनः ॥ तदातुभूताबलयःकोटिशश्चाययुर्मृधे ॥ २४ ॥
डाकिन्यःकोटिशोराजंश्चिक्षिपुर्वारणान्मृधे ॥ भक्षयंत्योनरानश्वांश्चर्वयंत्योरथान्पृथक् ॥ २५ ॥ नरेनरेपृथग्भूताधावन्तोदशभिर्दश ॥
प्रमथाःपातयामासुः खट्वाङ्गेनजनान्मुहुः ॥२६॥ यातुधानाश्चर्वयन्तःशिरांसिरणमण्डले ॥ वेतालाश्चकपालेनपिबन्तोरुधिरंबहु ॥२७॥
विनायकाश्चनृत्यन्तःप्रेतागायन्तएवहि ॥ कूष्माण्डाश्चतथोन्मादाःशिरांसिजगृहुर्मृधे ॥ २८ ॥ शिवस्यमुण्डमालार्थंवीराणांभूमिगामि
नाम् ॥ तथामातृगणाब्रह्मराक्षसाभैरवादयः ॥ २९ ॥ शिरांसिकन्दुकानीवक्षेपयन्तोमुहुर्मुहुः ॥ हसन्तःप्रहसन्तश्चसाट्टहासंसमाकुलः ॥
॥ ३० ॥ पिशाचाविकरालास्याःकुर्वन्तःकैपिकुत्सितम् ॥ पिशाच्यःक्षतजन्तूष्णींपाययन्त्यःशिशून्मृधे ॥ ३१ ॥ मारोदीरितिवादिन्यो

नेत्राण्यपिददामत्त् ॥ इत्थंगणबलंदृष्ट्वाबलदेवानुजोबली ॥ २२ ॥ गदोगदांसमादायजगर्जवनवन्मृधे ॥ लक्षभारभृतागुर्व्यागदयातद्ब
लंमहत् ॥ २३ ॥ पोथयामासहिगदोवज्रेणेन्द्रोयथागिरीन् ॥ कूष्माण्डोन्मादवेतालाःपिशाचाब्रह्मराक्षसाः ॥ २४ ॥ निपेतुर्मूर्च्छिता
भूमौतद्गदाभिन्नमस्तकाः ॥ डाकिनीर्भिन्नदन्ताश्चप्रमथान्भिन्नकन्धरान् ॥ २५ ॥ यातुधानांश्छिन्नमुखांश्चकारसमरेगदः ॥ गद
यामर्दिताःप्रेताद्रुद्रुवुस्तेदिशोदश ॥ २६ ॥ वाराहदंष्ट्र्याभग्नालयेदैत्यायथानृप ॥ पलायितेभूतगणेवीरभद्रःसमागतः ॥ ३७ ॥
गदन्तताडगदयाबलदेवानुजम्बली ॥ गदोपरिगदांनीत्वागदःस्वांप्राहिणोद्गदाम् ॥ ३८ ॥ तयोर्युद्धमभूद्धोरंगदाभ्यांमैथिलेश्वर ॥ विस्फु
लिंगान्क्षरंत्यौद्वेगदेचूर्णीबभूवतुः ॥ ३९ ॥ मल्लयुद्धंतयोरासीन्नोदयंतौपरस्परम् ॥ भुजैश्चजानुभिःपादैःपातयंतोगिरीन्बहून् ॥ ४० ॥
करवीरंसमुत्पाट्यवीरभद्रोगिरिंबलात् ॥ अट्टहासंतदाकुर्वन्गदोपरिसमाक्षिपत् ॥ ४१ ॥ गदोगिरिंसंगृहीत्वातस्योपरिसमाक्षिपत् ॥
गृहीत्वाथगदंवीरंवीरभद्रोबलाद्बली ॥ ४२ ॥ चिक्षेपचौजसाराजन्नाकाशेलक्षयोजनम् ॥ गदोपिपतितोभूमौकिंचिद्व्याकुलमानसः ॥४३॥
गृहीत्वावीरभद्राख्यंभ्रामयित्वामहाबलः ॥ ओजसाप्राक्षिपच्छीघ्रमाकाशेलक्षयोजनम् ॥ ४४ ॥ वीरभद्रस्तुपतितःकैलासशिखरोपरि ॥
गदाप्रहारव्यथितोमूर्च्छितोघटिकाद्वयम् ॥ ४५ ॥ कार्तिकेयस्तदाप्राप्तःशक्तिमुद्यम्यवेगवान् ॥ अनिरुद्धायसांबायशक्तिंचिक्षेपसत्वरम् ॥
॥ ४६ ॥ अनिरुद्धरथंभित्त्वासांबंसांबरथंपुनः ॥ गजान्रथान्सहस्रंचवीरलक्षंमृधाङ्गणे ॥ ४७ ॥ भित्त्वानदंतीस्फूर्जंतीचपलेवदिशोदश ॥
विवेशभूमौफूत्कारंकुर्वंतीपन्नगीवसा ॥ ४८ ॥ तदाक्रुद्धोमहाबाहुःसांबोजांबवतीसुतः ॥ कृत्वाथसिंजिनीघोषंनिषंगाद्बाणमाददे ॥ ४९ ॥
एकोपिसबहिस्तूणादशरूपीबभूवह ॥ चापेशतंकर्षणेचसहस्रंरूपमादधे ॥ ५० ॥ मोक्षणेलक्षरूपाणिकोटिरूपाणिवैरिषु ॥ अनेकरूपी
विशिखःशिखिनंशिखिवाहनम् ॥५१॥भित्त्वाबिभेदवीराणांकोटिशःकोटिशोरणे ॥ कार्तिकेयेचभिन्नाङ्गेकिंचिद्व्याकुलमानसे ॥ गणेश्वर
स्तदाप्राप्तोमूषकस्थोगजाननः ॥ ५२ ॥ गोमूत्रपत्रमृगनाभिविचित्रकुंभंश्रीकुंकुमाकलितसुन्दरवक्रतुण्डम् ॥ सिंदूरपूरितकपोलमनोहरा
भंकर्पूरधूलिधवलीकृतकर्णवर्णम् ॥ ५३ ॥ व्यालोलकर्णहतमत्तमधुव्रतैस्तैःश्रीगंडजातमदिरामदविह्वलाङ्गैः ॥ संगीततालकुसुमाकरगी

तरागैःसंसेवितंगणपतिंकृतभालचंद्रम् ॥ ५४ ॥ बालार्कवर्णममलाङ्गदहेमहारंग्रैवेयमौलिकिरणैःपरितःस्फुरंतम् ॥ आखुस्थमेकदशनंगज
भव्यमूर्तिंपाशांकुशांबुजकुठारचयंदधानम् ॥ ५५ ॥ प्रांशुंचतुर्भुजमतीवमृधेप्रवृत्तंकांश्चित्प्रगृह्यचकरेणधृतांकुशेन ॥ संमर्दयंतमुरुधारप
रश्वधेनश्रीभार्गवेंद्रमिवशस्त्रभृतःसमस्तान् ॥५६॥ वीरेभवाजिरथसंघबलंनिपात्यसांबंप्रगृह्यसरथंप्रधनाक्षिपंतम् ॥ तंवीक्ष्यविस्मितमनाः
सगणोथकार्ष्णिःपुत्रंसुबुद्धमनिरुद्धमुवाचसम्यक्॥५७॥ इति श्रीम०सं०वि०ना०यक्षयुद्धेगणयुद्धवर्णनंनामचतुर्विंशतितमोऽध्यायः ॥२४॥
॥ प्रद्युम्नउवाच ॥ ॥ श्रीकृष्णस्यकलासाक्षाद्गणेशोयंमहाबलः ॥ जेतुंनशक्योदिविजैर्मनुष्यैस्तुकुतोभुवि ॥ १ ॥ वर्ततेयस्यनिकटे
तस्यनास्तिपराजयः ॥ श्रीकृष्णेनवरोदत्तःपुरास्मैशंकरालये ॥२॥ यद्ययंवर्ततेचात्रतदानस्याज्जयश्चनः ॥ शत्रुपक्षगतोयंवैश्रीकृष्णस्यवरो
र्जितः ॥ ३ ॥ तस्मात्त्वंचंडमार्जारोभूत्वाखुंयुक्तितोबलात् ॥ विद्रावयमहाबुद्धेफूत्कारैश्चदिशोदश ॥ यावद्बलंविजेष्यामितावद्विद्रावयत्व
रम् ॥ ४ ॥ नारदउवाच ॥ ॥ अथानिरुद्धोभगवांश्चंडमार्जाररूपधृक् ॥ अलक्षितोगणेशेननज्ञातोविष्णुमायया ॥ ५ ॥ फूत्कार
मुत्कटंकुर्वन्नुत्पपाताखुसंमुखे ॥ विदारयन्भुवंराजन्सततंनखरैःखरैः ॥ ६ ॥ गणेशेनसहैवाखुर्दृष्ट्वाशुभयविह्वलः ॥ दुद्रावत्वरितंप्रोद्यन्कं
पितोरणमण्डलात्॥ ७ ॥ तमन्वधावत्कुपितोमार्जरःस्थूलरूपधृक् ॥ मूषकंस्वमपोवाहगणेशोपिमुहुर्मुहुः ॥ ८ ॥ नाययौस्वंरणंचा
खुश्चंडमार्जारपीडितः ॥ सप्तद्वीपान्सप्तसिन्धून्दिशासुविदिशासुच ॥ ९ ॥ धावन्वैसप्तलोकेषुनलेभेशर्ममैथिल ॥ यत्रयत्रगतश्चाखुर्गणे
शेनसमन्वितः ॥१०॥ तत्रतत्रगतोराजन्मार्जारश्चंडविक्रमः॥ एवंसमूषकेयातेगणेशेविदिशांतरे॥११॥ विस्मितेषुसयक्षेषुगणेषुप्रमथेषुच ॥
पुष्पकस्थःकुबेरोसौमायांचक्रेथगौह्यकीम्॥ १२ ॥ गृहीत्वास्वंधनुर्दिव्यंनमस्कृत्यमहेश्वरम्॥समंत्रंकवचंधृत्वाबाणसङ्घंसमादधे ॥ १३ ॥
तदैवाच्छादितंव्योममेघैःसांवर्तकैरिव॥तडित्स्वनैर्महाभीमैस्तमोभूत्स्तनयित्नुभिः॥ १४॥बिन्दवोहस्तिसदृशानिपेतुःसोपलामृधे ॥ धाराभि
रतिघोराभिर्ववृषुर्वारिदास्ततः॥१५॥क्षणेन[illegible]लोकम्॥पर्वतो[illegible]दृश्यंतोरणमण्डले ॥१६॥ प्राकृतप्रलयंज्ञात्वायाद ॥१५५
वाभयविह्वलाः ॥ त्यक्त्वाशस्त्राणितेप्रोचुःश्रीकृष्णेतिमुहुर्मुहुः ॥ १७ ॥ ज्ञात्वातांगौह्यकींमायांप्रद्युम्नोभगवान्हरिः ॥ सत्त्वात्मिकांच

स्वांविद्यांसर्वमायोपमार्दिनीम्॥१८॥ जप्त्वाकृत्वाकामबीजंवाणमध्येनिधायतत् ॥ मुखेचप्रणवंधृत्वापुंखेश्रीबीजमेवच ॥१९॥ आकृष्यक
र्णपर्यंतंकृष्णंस्मृत्वाचतुर्भुजम्॥चिक्षेपविशिखंचापाद्दोर्दण्डाभ्यांतडित्स्वनात् ॥२०॥ कोदण्डमुक्तोविशिखोद्योतयन्मण्डलंदिशाम्॥जघा
नगौह्यकींमायामंधकारंयथारविः ॥ २१ ॥ भयभीतोराजराजःपुष्पकस्थोरणांगणात् ॥ पलायमानोयक्षैश्चकंपितःस्वपुरींययौ ॥ २२ ॥
प्रद्युम्नस्योपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ जहसुर्यादवाःसर्वेजयारावसमाकुलाः ॥२३॥ तदातिधर्षितोराजन्राजराजःकृताञ्जलिः ॥ बलिंनीत्वा
ययौशीघ्रंप्रद्युम्नस्यापिसंमुखे ॥ २४ ॥ गजेंद्राणांद्विलक्षंचद्विशुण्डादण्डशालिनाम् ॥ दद्भिश्चतुर्भिर्युक्तानामद्रीन्स्पर्धयतांमदैः ॥ २५ ॥
दशलक्षंरथानांचमुक्तातोरणशालिनाम् ॥ शताश्वयोजितानांचरुक्माणांसूर्यवर्चसाम् ॥ २६ ॥ दशार्बुदंतथाराजन्हयानांचन्द्रवर्चसाम् ॥
शिबिकानांचतुर्लक्षंमाणिक्यैरग्निवर्चसाम्॥२७॥ पंजरस्थायिनांराजञ्छार्दूलानांद्विलक्षकम् ॥ चित्रकाणांमृगाणांचगवयानांतथैवच॥२८॥
मृगयासारमेयानांकोटिकोटिंविदेहराट् ॥ २९ ॥ शुकानांसारिकाणांचकलकंठप्रवादिनाम् ॥ हंसानांस्वर्णवर्णानामन्येषांचित्रपक्षिणाम् ॥
पंजरस्थायिनांराजँल्लक्षंलक्षंनृपेश्वर ॥ ३० ॥ विमानंविष्णुदत्ताख्यंमुक्तादामविलंबितम् ॥ अष्टयोजनमुच्चांगंनवयोजनविस्तृतम् ॥ ३१ ॥
लक्षकुंभध्वजोपेतंनिर्मितंविश्वकर्मणा ॥ कामगंस्वर्णशिखरंसहस्रादित्यसुप्रभम् ॥ ३२ ॥ सहस्रंकल्पवृक्षाणांकामधेनुशतंतथा ॥ चिंताम
णीनांचशतंशतंदिव्याश्मनांतथा ॥३३॥ यत्स्पर्शेनापिलोहस्तुहेमत्वंयातिमैथिल ॥ छत्राणांचामराणांचहेमसिंहासनंशतम् ॥ ३४ ॥ तथा
हिदिव्यपद्मानांमालाकिंजल्किनीशतम् ॥ शतंपीयूषद्रोणस्यफलानिविविधानिच ॥३५॥ खचिद्रत्नसुवर्णानांभूषणानांसुवाससाम्॥ दिव्या
नांकंबलानांचकोटिशःपात्रसंचयम्॥३६॥अमोघानांचशस्त्राणांकोटिसौवर्णशालिनाम् ॥ गजैर्नरैर्भारवाहैःप्रेरितांश्चनिधीन्नव॥३७॥दत्त्वाब
लिंराजराजःप्रद्युम्नायमहात्मने ॥ दक्षिणीकृत्यतंनत्वाप्राहेदंहर्षपूरितः ॥ ३८ ॥ ॥ कुबेरउवाच ॥ ॥ नमस्तुभ्यंभगवतेपुरुषायमहात्मने ॥
अनादयेसर्वविदेनिर्गुणायगुणात्मने ॥३९॥ प्रधानपुरुषेशायप्रत्यग्धाम्नेनमोनमः ॥ स्वयंज्योतिःस्वरूपायश्यामलांगायतेनमः ॥ ४० ॥
नमस्तेवासुदेवायनमःसंकर्षणायच ॥ प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः ॥ ४१ ॥ मदनायचमारायकंदर्पायनमोनमः ॥ दर्पका

यचकामायपंचबाणायतेनमः ॥ ४२ ॥ अनंगायनमस्तुभ्यंनमस्तेशंबरारये ॥ हेमन्मथनमस्तुभ्यंनमस्तेमीनकेतन ॥ ४३ ॥ मनोभवाय
देवायनमस्तेकुसुमेषवे ॥ अनन्यजन्मनेतुभ्यंरतिभर्त्रेनमोनमः ॥ ४४ ॥ नमस्तेपुष्पधनुषेमकरध्वजतेनमः ॥ स्मरायात्मभुवेनित्यंजगद्वि
जयकारिणे ॥ नमोरुक्मवतीभर्त्रेसुंदरीपतयेनमः ॥ ४५॥ इदंकरिष्यामिकरोमिभूमन्ममेदमस्तीतितवेदमाब्रुवन् ॥ अहंसुखीदुःखयुतःसुहृ
ज्जनोलोकोह्यहंकारविमोहितोखिलः ॥ ४६ ॥ प्रधानकालाशयदेहजैर्गुणैःकुर्वन्विकर्माणिजनोनिबध्यते ॥ काचेर्भकंसैकतएवजीवनं
गुणेचसर्पंप्रतनोतिसोक्षिभिः ॥ ४७ ॥ कृतंमयाहेलनमद्यमोहतस्त्वन्मायथामोहितचेतसाप्रभो ॥ नमन्यसेबालकृतंपितेवहिमाभूत्पुनर्मेम
तिरीदृशीमनाक्॥४८॥ सदाभवेत्त्वच्चरणारविंदयोर्भक्तिःपरायांचविदुर्गरीयसीम् ॥ ज्ञानंचवैराग्ययुतंशिवायनंदेहिप्रशस्तंनिजसाधुसंगमम्
॥ ४९ ॥ ॥ नारदउवाच ॥ ॥ प्रद्युम्नस्यशुभंस्तोत्रंप्रातरुत्थाययःपठेत् ॥ संकटेतस्यसततंसहायःस्याद्धरिःस्वयम् ॥ ५० ॥ इत्युक्तवंतंयक्षे
शंप्रद्युम्नोभगवान्हरिः ॥ तथास्तूक्त्वाददौराजन्पद्मरागशिरोमणिम् ॥ ५१ ॥ माभैरित्यभयंदत्त्वालीलाछत्रंसचामरम् ॥ सिंहासनंमणि
मयंप्रादाच्छ्रीयादवेश्वरः ॥ ५२ ॥ कार्ष्णिंप्रदक्षिणीकृत्यराजराजोधनेश्वरः ॥ नत्वाययौराजधानीमलकामलकेश्वरः ॥ ५३ ॥ जितं
श्रुत्वाराजराजंप्रद्युम्नेनमहात्मना ॥ नकेपियुयुधुस्तेनराजानश्चबलिंददुः ॥ ५४ ॥ अथकार्ष्णिर्महाबाहुर्नादयन्दुंदुभीन्बहून् ॥ समस्तवा
हिनीयुक्तःप्राग्ज्योतिषपुरंययौ ॥ ५५ ॥ भौमासुरसुतोनीलोधर्षितस्तस्यतेजसा ॥ सद्यस्तस्मैबलिंप्रादात्प्रद्युम्नायमहात्मने ॥ ५६ ॥
प्राग्ज्योतिषपुरद्वाराद्द्विविदोनामवानरः ॥ पुराप्रद्युम्नबाणेनताडितोयोमहाबलः ॥५७॥ सउत्थायरुषाविष्टोदशनैर्नखरैःखरैः ॥ विदार्यवी
रानश्वांश्चभ्रूभङ्गैःप्रजगर्जह ॥५८॥लांगूलेनरथान्बद्ध्वाप्राक्षिपल्लवणांभसि ॥ गृहीत्वासगजान्दोर्भ्यांविचिक्षेपांबरेबलात् ॥५९॥ शत्रुंज्ञात्वा
कपिंकार्ष्णिःप्रतिशार्ङ्गेशरंदधे ॥ नीत्वाशरस्तंसहसाभ्रामयित्वांबरेबलात् ॥ ६० ॥ पूर्ववत्पातयामासकिष्किंधायांमहाकपिम् ॥ पुनराग
तवान्बाणःप्रद्युम्नस्येषुधौस्फुरन् ॥ ६१ ॥ इतिश्रीग० सं० वि० ना० ब० यक्षदेशविजयप्राग्ज्योतिषपुरविजयोनामपंचविंशतितमोऽध्यायः
॥२५॥ ॥नारदउवाच॥ अथकार्ष्णिःपरान्देशान्दिव्यद्रुमलताकुलान् ॥ सहस्रपत्रवद्भिश्चसरोभिःशोभितान्ययौ ॥१॥ अक्षौहिणीशतयुतः

प्रद्युम्नश्चण्डविक्रमः ॥ यक्षैर्दिष्टेनमार्गेणखण्डंकिंपुरुषंययौ ॥२॥ रङ्गवल्लीपुरंयत्रहेमकूटगिरेरधः ॥ तस्यकिंपुरुषाऊचुःशंबरारेश्चशृण्वतः॥
॥ ३ ॥ ॥ किंपुरुषाऊचुः ॥ ॥ अहोतिधन्यामथुरापुरीवराबभूवयस्यांपरमेश्वरोहरिः ॥ अहोतिधन्यंसततंयदोःकुलंजातोहियस्मिन्नखि
लाण्डपालकः ॥ ४ ॥ धन्यंचतच्छूरसुतस्यमंदिरंगोलोकनाथेनपवित्रितंकृतम् ॥ धन्यंपरंमाथुरमण्डलंसुरैःसुदुर्लभंयत्रचचारमाधवः॥५॥
महावनंधन्यतमंमनोहरंपितुर्गृहाद्यत्रगतोहरिःशिशुः ॥ चचारकृष्णःशिशुनाबलेनहियशोदयादुग्धमुखःसुलालितः ॥ ६ ॥ वृंदावनंपुण्यत
मंपरात्परंश्रीकृष्णपादांबुजरेणुराजितम् ॥ गाःपालयन्यत्रचचारबालोगोपालबालैःसबलःस्वयंहरिः ॥ ७ ॥ योदानलीलांकिलमानलीलां
श्रीरासलीलांव्रजसुंदरीभिः ॥ वृंदावनेयत्रचचारकृष्णोयस्यापिगायंतियशस्त्रिलोकाः ॥ ८ ॥ अहोतिधन्यावृषभानुनंदिनीलीलावतीसा
निजलोकशालिनी ॥ चचारकृष्णेनकालिंदनंदिनीतटेमिलिंदध्वनिसंकुलेवने ॥ ९ ॥ अहोतिधन्यास्तिकलिंदनंदिनीश्रीकृष्णवामांससमु
द्भवाया ॥ तटेमिलिंदध्वनिसंकुलेवटेतत्स्पर्शनाद्यातिनरःकृतार्थताम् ॥१०॥ समुद्भवोयोहरिवक्षसोगिरिर्गोवर्द्धनोनामगिरींद्रराजराट्॥वि
राजतेसव्रजमण्डलेपरोयद्दर्शनाज्जन्मपुनर्नविद्यते ॥ ११ ॥ अहोतिधन्यायदुमण्डलीभिर्विराजतेभूमितलेमनोहरा ॥ वैकुंठलीलाधिकृताकु
शस्थलीयथातडिद्भिर्जलदावलिर्दिवि ॥ १२ ॥ यत्रैवसाक्षात्पुरुषःपरेश्वरोधृत्वाचतुर्व्यूहमलंविराजते ॥ यस्तूग्रसेनायददौनृपेशतांकृष्णा
यतस्मैहरयेनमोनमः ॥ १३ ॥ प्रणोदितस्तेननृपेणधीमताजगद्विजेतुंमकरध्वजोमहान् ॥ कृत्वाथतद्दर्शनमद्यदुर्लभंवयंकृतार्थाहिभवेमः
सर्वतः ॥ १४ ॥ ॥ नारदउवाच ॥ इत्थंहरिर्नृपयशोविशदैश्चरित्रैरुद्यत्त्रिलोकममलंविशदीचकार ॥ पूर्णेंदुरश्मिमिलितैस्तरलैः
स्फुरद्भिःप्रोद्यद्भिरुद्धृतइवामलदुग्धसिन्धुः ॥ १५ ॥ इत्थंयशःस्वममलंनृपशंबरारिःश्रुत्वातिहर्षिततनुःप्रददौधनानि ॥ केयूरहारनवरत्न
मनोहराणितेभ्यःकिरीटमणिकुण्डलकंकणानि ॥ १६ ॥ रंगवल्लीपुराधीशःसुबाहुश्चंन्द्रवंशजः ॥ नत्वाबलिंददौसोपिप्रद्युम्नायमहात्मने
॥ १७ ॥ तस्मैप्रसन्नोभगवान्प्रद्युम्नोमीनकेतनः ॥ दत्त्वाचूडामणिंदिव्यंपप्रच्छेदंमहामनाः ॥ १८ ॥ ॥ श्रीप्रद्युम्नउवाच ॥ ॥ रंगव
ल्लीपुरस्यापिनामकेनप्रकाशितम् ॥ एतद्ब्रूहिसुबाहोमेश्रुतंपूर्वंत्वयाकिल ॥ १९ ॥ ॥ सुबाहुरुवाच ॥ ॥ देवासुरैःपुराराजन्मथितःक्षीर

सागरः ॥ विनिर्गतानिमथनाद्रत्नानिचचतुर्दश ॥२०॥ निर्गतंकलशंतस्मात्सुधापूर्णंमनोहरम् ॥ तंददर्शहरिःसाक्षान्नेत्राभ्यांपुष्करेक्षणः॥ ॥ २१ ॥ तन्नेत्रहर्षबिंदुश्चकलशेनिपपातह ॥ तस्माद्वृक्षःसमुद्भूतस्तुलसीतिप्रकथ्यते ॥ २२ ॥ रङ्गवल्लीतितन्नामचकारमधुसूदनः ॥ अत्र किंपुरुषेखण्डेहेमकूटगिरेरधः ॥ २३ ॥ तस्याश्चरङ्गवल्ल्याः कौस्थापनांसचकारह ॥ रंगवल्लीमहावृक्षः सदात्रैवविराजते ॥ २४ ॥ तन्नाम्नेदं सुप्रसिद्धंरंगवल्लीपुरंक्षितौ ॥ अत्रनित्यंहिहनुमानार्ष्टिषेणेनरागिणा ॥ २५ ॥ दर्शनार्थंसमायातिमध्याह्नेरामपूजकः ॥ ॥ नारदउवाच ॥ ॥ इतिश्रुत्वाशंबरारीरंगवल्लींमनोहराम् ॥ २६ ॥ दृष्ट्वाप्रदक्षिणीकृत्यदेशानन्याञ्जगामह ॥ हेमकूटतटीभूतंवनंप्राप्तंभयङ्करम् ॥ २७ ॥ झिल्लीझंकारसंयुक्तंसिंहचित्रकनादितम् ॥ वन्यैःकरीन्द्रैःसंयुक्तंशिवालूकरुतावृतम् ॥ २८ ॥ कीचकाश्वत्थमंदारवटभूर्जसमाकुलम् ॥ कृष्णा हरीतकीवल्लीखदिरैःसघनंवनम् ॥ २९ ॥ तस्माद्विनिर्गतः सर्पोदशयोजनलंबितः ॥ अग्रसद्गजवृंदानिफूत्कारंकारयन्मुहुः ॥३०॥ हाहा कारेतदाजातेसेनायांमैथिलेश्वर ॥ प्रचण्डगरलैर्वातैर्भस्मीभूतेदिगंतरे ॥ ३१ ॥ भानुःसुभानुः स्वर्भानुःप्रभानुर्भानुमांस्तथा ॥ चन्द्रभा नुर्बृहद्भानुरतिभानुस्तथाष्टमः ॥ ३२ ॥ श्रीभानुःप्रतिभानुश्चसत्यभामात्मजादश ॥ एतेजघ्नुःशरैस्तीक्ष्णैः सर्परौद्रंमदोत्कटम् ॥ ३३ ॥ बाणैःसंभिन्नसर्वांगः पतितोधरणीतले ॥ सर्परूपंविहायाशुगन्धर्वोभूत्स्फुरद्द्युतिः ॥ ३४ ॥ नत्वाश्रीकृष्णपुत्रांस्तान्द्योतयन्मण्डलंदिशाम् ॥ पुष्पैर्वर्षत्सुदेवेषुविमानेनदिवंययौ ॥ ३५ ॥ ॥ बहुलाश्वउवाच ॥ ॥ गन्धर्वोयंतुकः पूर्वंकेनपापेनसर्पताम् ॥ प्रातःकथंवदमुनेत्वं परावरवित्तमः ॥ ३६ ॥ ॥ नारदउवाच ॥ ॥ आर्ष्टिषेणस्ययोभ्रातासुमतिर्नामसुंदरः ॥ रामायणंहनुमतःपठितुंससमागतः ॥ ३७ ॥ हेमकूटेहनुमतःकुर्वतोरामसेवनम् ॥ प्रातःकालात्समारभ्यघटिकाश्चचतुर्दश ॥३८॥ सलक्ष्मणंरामचन्द्रंध्यायतोजानकीपतिम् ॥ फूत्कारैः सर्पवत्तस्यध्यानभंगंचकारह ॥ ३९ ॥ तदाक्रुद्धोमहावीरोहनूमान्वानरेश्वरः ॥ शापंददौसुमतयेत्वंसर्पोभवदुर्मते ॥ ४० ॥ तदैवतस्यचर णौनत्वाप्राहकृताञ्जलिः ॥ हेदेवपाहिपाहीतिदीनंमांशरणागतम् ॥ ४१ ॥ अथप्रसन्नोभगवान्सुमतिंप्राहधर्मवित् ॥ द्वापरांतेशरैस्तीक्ष्णै र्हरिपुत्रधनुश्च्युतैः ॥ भिन्नदेहःस्वांप्रकृतिंयास्यसित्वंनसंशयः ॥ ४२ ॥ गन्धर्वःसुमतिर्नामविमुक्तोभूद्विदेहराट् ॥ सतांशापोपिवरवद्

रोमोक्षार्थदः किमु ॥ ४३ ॥ अथकार्ष्णिर्महाबाहुश्चैत्रदेशान्मनोहरान् ॥ वसंतमाधवीवृन्दैःशोभितान्सजगामह ॥४४॥ सहस्रदलपद्मानां
षट्पदध्वनिशालिनाम् ॥ पतन्तिरेणवोयत्रसरःस्वाबीरचूर्णवत् ॥४५॥ एलालवंगलतिकाःक्षुण्णाःसैन्यांत्रिभिःपथि ॥ चक्रुर्मत्तान्महावी
रान्स्पृशत्यत्रसुगन्धिना ॥ ४६ ॥ श्रीखण्डकेतकीवायुर्वायुर्यत्रसुशीतलः ॥ तेनभृंगावलीरेजेकारिकर्णप्रताडिता ॥ ४७ ॥ यत्रवैपुरुषाराः
जन्नागायुतसमाबले ॥ वलीपलितदौर्गंध्यस्वेदक्लमविवार्जिताः ॥ ४८ ॥ त्रेतायुगसमःकालोवर्ततेयत्रनित्यशः ॥ आयुश्चायुतवर्षाणांदिव्यौ
षधिनदीगुणैः ॥ ४९ ॥ पीयूषतुल्यंतोयंचहेमभूमिर्विराजते ॥ मुक्ताविद्रुमवैडूर्य्यरत्नोत्पत्तिश्चयत्रवै ॥ ५० ॥ सुंदर्यःप्रमदारामानित्य
यौवनभूषिताः ॥ स्फुरंत्युपवनेष्वारात्सौदामिन्योघनेष्विव ॥ ५१ ॥ यत्रवैनगरीरम्यावसंततिलकाशुभा ॥ शृंगारतिलकोनामराजायत्र
महाबलः ॥ ५२ ॥ जैत्रान्वीरान्समाहूयगजमारुह्यदंशितः ॥ योद्धुंविनिर्ययौराजन्प्रद्युम्नस्यापिसंमुखे ॥ ५३ ॥ सांबःसुमित्रः पुरुजिच्छत
जिच्चसहस्रजित् ॥ विजयश्चित्रकेतुश्चवसुमान्द्रविडः क्रतुः ॥५४॥ जांबवत्याः सुताह्येतेचक्रुर्नाराचदुर्दिनम् ॥ पलायितेषुत्नैतेषुबाणैर्भिन्नेषु
मैथिल ॥ ५५ ॥ बाणान्धकारेसंजातेमहान्कोलाहलोह्यभूत् ॥ तदाशृंगारतिलकोगजारूढोमहाबलः ॥ ५६ ॥ त्रिशूलेनतदासाम्बंहृदि
विव्याधरोषतः ॥ अन्यान्सम्पातयामासशरैःकोदण्डनिर्गतैः ॥ ५७ ॥ एकाकीविचरन्युद्धेवनेवैश्वानरोयथा ॥ तदागदः समागत्यतद्गजं
सुमदोत्कटम् ॥ ५८ ॥ शुण्डादण्डेसंगहीत्वापातयामासभूतले ॥ दूरेप्रपतितःशीघ्रंशृंगारतिलकोनृपः ॥५९॥ सद्योभयातुरोभूत्वायुद्धेबद्धांज
लिःस्वतः ॥ तुरंगाणामर्बुदंचरथानांलक्षमेवच॥६०॥गजानामयुतंराजाप्रद्युम्नायबलिंददौ ॥ इत्थंकिंपुरुषंखण्डंजित्वाकार्ष्णिर्महाबलः६१॥
नैषाददर्शितैर्मार्गैर्हरिवर्षंततोययौ ॥६२॥ इति श्रीमद्ग०सं०वि०ना०रङ्गवल्लीचैत्रदेशाकिंपुरुषखण्डविजयोनामषड्विंशतितमोऽध्यायः॥२६॥
॥ नारदउवाच ॥ हरिवर्षनामखंडंसर्वसंपत्तिसंयुतम् ॥ तस्यसीमागिरिः साक्षान्निषधोनाममैथिल ॥ १ ॥ वीरकोदंडटङ्कारघोषैर्व्याप्तव
नांतरात् ॥ उड्डितास्तुमहागृध्राःक्रोशमात्रवपुर्धराः ॥ २ ॥ तीक्ष्णतुण्डाःसगरुडाःसर्वेदीर्घायुषोनृप ॥ अग्रसन्सैनिकान्नागान्हयांस्तेपिबु
भुक्षिताः ॥ ३ ॥ आकाशेपक्षिभिर्व्याप्तेजातेपक्षप्रभंजने ॥ सेनायामन्धकारेणहाहाकारोमहानभूत् ॥४॥ तदाकार्ष्णिर्महाबाहुस्तार्क्ष्यमस्त्रं

समाददे ॥ तद्बाणान्निर्गतः साक्षाद्वैनतेयः खगेश्वरः ॥ ५ ॥ सेनायामन्धकारेणव्याप्तायांपतगेश्वरः ॥ कांश्चित्तुण्डप्रहारेणकांश्चित्पक्षैः स्फुरत्प्रभैः ॥ ६ ॥ गृध्रान्कलिंगान्गरुडान्पातयामासभूतले ॥ भग्नदर्पाश्छिन्नपक्षाः सक्षताः पक्षिणश्शते ॥ ७ ॥ भयातुरादुद्रुवुस्तेताक्ष्र्येणापि दिशोदश ॥ ततः कार्ष्णिर्महाबाहुर्दशार्णान्विषयान्ययौ ॥ ८ ॥ दशार्णदेशाधिपतिः शुभाङ्गः सूर्यवंशजः ॥ नागायुतसमोयुद्धेनिष्कौशांबीपुरीपतिः ॥ ९ ॥ वेदव्यासमुखाच्छ्रुत्वाप्रद्युम्नंचण्डपौरुषम् ॥ दशार्णांतांनदींदीर्घांसमुत्तीर्यसमाययौ ॥ १० ॥ कृताञ्जलिः शुभाङ्गो सौकिरीटेनानतानन: ॥ ददौबलिंसुरत्नानांप्रद्युम्नायमहात्मने ॥ ११ ॥ प्रद्युम्नोभगवान्साक्षात्सर्वगः सर्ववित्परः ॥ पप्रच्छेदंशुभाङ्गंतंलोकसंग्रहकाम्यया ॥ १२ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ दशार्णोयंकथंदेशः केननाम्नाबभूवह ॥ एतन्मेब्रूहिहेराजन्निष्कौशाम्बीपुरीपते ॥ १३ ॥ शुभाङ्गउवाच ॥ हिरण्यकशिपुंहत्वानृसिंहोभगवान्पुरा ॥ प्रह्लादेनत्विहागत्यहरिवर्षस्थितोभवत् ॥ प्रह्लादंभगवान्प्राहनृसिंहोभक्तवत्सलः ॥ १४ ॥ ॥ श्रीनृसिंहउवाच ॥ ॥ शांतस्यतवभक्तस्यमयापुत्रपिताहतः ॥ तस्मान्नघातयिष्यामिवंशंतेहिमहामते ॥ १५ ॥ ॥ शुभांगउवाच ॥ ॥ इतिप्रवदतोक्षिभ्यामानन्दजलबिन्दवः ॥ पतिताः कौचतेराजन्सरोभून्मङ्गलायनम् ॥ ॥ १६ ॥ तदाप्राप्तवरोराजन्प्रह्लादोहर्षविह्वलः ॥ नृसिंहंप्राहधर्मात्मानत्वाभूत्वाकृताञ्जलिः ॥ १७ ॥ ॥ प्रह्लादउवाच ॥ ॥ मातुःपितुर्मयासेवानकृतासात्वतांपते ॥ ऋणात्तयोः कथंमुच्येवदैतत्परमेश्वर ॥ १८ ॥ ॥ श्रीनृसिंहउवाच ॥ ॥ मन्नेत्रजलसम्भूतेतीर्थेवैमंगलायने ॥ स्नानंकुरुमहाभागमुच्यसेदशभिर्ऋणैः ॥ १९ ॥ मातुःपितुश्चभार्यायाः सुतानांगुरुदेवयोः ॥ विप्राणांचप्रपन्नानामृषीणांपितृणामृणम् ॥ २० ॥ यःस्नास्यतिमहातीर्थेसर्वहेलनतत्परः ॥ ऋणैश्चदशभिः सोपिमुच्यतेनात्रसंशयः ॥ २१ ॥ ॥ शुभाङ्गउवाच ॥ ॥ दशार्णमोचनेतीर्थेस्नात्वाकायाधवोनृणी ॥ भूत्वाद्यापिसमायातिस्नातुंतन्निषधाद्रिरेः ॥ २२ ॥ दशार्णमोचनेतीर्थेदशार्णोदेशउच्यते ॥ तत्स्रोतःसुसमुद्भूतादशार्णेयंनदीस्मृता ॥ २३ ॥ ॥ नारदउवाच ॥ ॥ तच्छ्रुत्वाभगवान्कार्ष्णिः सर्वैः परिकरैःसह ॥ दशार्णमोचनेतीर्थेदानंस्नानञ्चकारह ॥ २४ ॥ दशार्णमोचनस्यापिकथांयः शृणुयान्नृप ॥ ऋणैश्चदशभिः सोपिमुच्यतेमुक्तिभाग्भवेत् ॥ २५ ॥ ॥ इतिश्री

दानमेनमचकारह ॥ २४ ॥ दशार्णमोचनस्यापिकथयेयःशृणुयान्नृप ॥ ऋणैश्चदशभिःसोपिमुच्यतेमुक्तिभाग्भवेत् ॥ २५ ॥ ॥ इतिश्री

मद्गर्गाचार्यसंहितायांश्रीविश्वजित्खण्डेनारदबहुलाश्वसंवादे दशार्णदेशविजये हरिवर्षखण्डविजयोनामसप्तविंशतितमोऽध्यायः ॥ २७ ॥
॥ श्रीनारदउवाच ॥ ॥ अथकार्ष्णिर्महाबाहुःसुमेरोरुत्तरान्कुरून् ॥ ययौशृङ्गवतःपार्श्वेविचित्रान्वृद्धिसंवृतान् ॥ १ ॥ भद्रांगंगांततःस्ना
त्वावाराहीनगरंययौ ॥ कुरुखण्डाधिपस्तस्यांचक्रवर्तीगुणाकरः ॥ २ ॥ महासंभृतसंभारोदेवर्षिगणसंवृतः ॥ अश्वमेधंसमारेभेदशमं
सगुणाकरः ॥ ३ ॥ तेनोत्सृष्टंहयंश्वेतंश्यामकर्णमनोहरम् ॥ तस्यपुत्रोवीरधन्वारक्षितुंनिर्गतोऽभवत् ॥ ४ ॥ अक्षौहिणीभिर्दशभिर्मण्डितश्च
ण्डविक्रमः ॥ विचचारमहावीरोवीक्ष्यमाणस्तुरंगमम् ॥५॥ वीरश्चन्द्रश्चसेनश्चचित्रगुर्वेगवान्वृषः ॥ आमःशंकुर्वसुःश्रीमान्कुन्तिर्नाग्नजितेः
सुताः ॥ ६ ॥ सर्वतस्तंहयंशुभ्रंगृहीत्वाहर्षपूरिताः ॥ कस्योत्सृष्टंवदंतस्तेकार्ष्णिसैन्यंसमाययुः ॥ ७ ॥ प्रद्युम्नस्तद्भालपत्रंपठित्वाविस्मि
तोभवत् ॥ सर्वेविसिष्मयुर्यदवोगृहीतपरमायुधाः ॥ ८ ॥ तदैवसेनासम्प्राप्ताविचिन्वन्तीहयंनृप ॥ दृष्ट्वारजोयदुबलाद्दूरेतस्थौसुविस्मिता ॥
॥ ९ ॥ गुणाकरेराजनिचण्डविक्रमेनदस्यवःस्युःकुरुखण्डमण्डले ॥ गवांनकालोनहिचक्रवातकःकुतोरजःप्राप्तमहोर्कमण्डलम् ॥ १० ॥
एवंवदंतीपरवाहिनीस्वतःकोदण्डघोषंदरदस्वनम्परम् ॥ करीन्द्रचीत्कारतुरंगह्रेषणंवादित्रमिश्रंसमुपाशृणोत्ततः ॥ ११ ॥ तदोद्धवःकृ
ष्णसुतप्रणोदितोबलं समेत्याशुसवीरधन्वनः ॥ प्रणम्यतंप्राहरथस्थितंनृपंगुणाकरस्यौरसमर्कतेजसम् ॥ १२ ॥ ॥ उद्धवउवाच ॥ ॥
उग्रसेनःक्षितीशेंद्रोद्वारकेशोयदूत्तमः ॥ जम्बूद्वीपनृपाञ्जित्वाराजसूयंकरिष्यति ॥ १३ ॥ तेनप्रणोदितोवीरःप्रद्युम्नोधन्विनांवरः ॥
जित्वातंभारतंखण्डंतथाकिंपुरुषंनृप ॥ १४ ॥ हरिवर्षंततोजित्वाकुरुखण्डंसमागतः ॥ अक्षौहिणीदशयुतोधनदेनापिपूजितः ॥ १५ ॥
उपायनंत्वयादेयंप्रद्युम्नायमहात्मने ॥ तेननीतंयज्ञपशुमाहर्तुंकःक्षमःक्षितौ ॥ १६ ॥ श्रीकृष्णचन्द्रोभगवान्सहायस्तस्यविद्यते ॥ शुभं
स्याद्दानमानाभ्यांनचेद्युद्धंभविष्यति ॥ १७ ॥ ॥ वीरधन्वोवाच ॥ ॥ गुणाकरोनृपेशोयंशक्रेणापिप्रपूजितः ॥ नदास्यतिबलिंसोपि
प्रद्युम्नायमहात्मने ॥ १८ ॥ शृंगवत्पर्वतेरम्येवाराहोविद्यतेहरिः ॥ यस्यसेवांसदाभूमिःकरोतिपरमादरात ॥ १९ ॥ तस्यक्षेत्रेतपस्ते
पेध्यात्वादेवंगुणाकरः ॥ वर्षाणामयुतेपूर्णेहरिर्वाराहरूपधृक् ॥ २० ॥ सन्तुष्टोनृपातिंभक्तंवरंब्रूहीत्युवाचह ॥ राजोवाचहरिंनत्वारोमां

चप्रेमविह्वलः ॥ २१ ॥ भगवंस्त्वामृतेदेवोऽसुरोन्योपिनरोथवा ॥ भांजेतानभवेद्भूमावीप्सितोयंवरोमया ॥ २२ ॥ तथास्तुचोक्त्वा भगवांस्तत्रैवांतरधीयत ॥ तस्मात्तस्यपशोःशीघ्रंकर्तव्यंमोचनंस्वतः ॥ २३ ॥ नचेद्भवद्भिश्चकलिंकरिष्यामिनसंशयः ॥ श्री नारदउवाच ॥ ॥ इत्युक्तउद्धवस्तस्मात्स्वांसेनामेत्यभूपते ॥ २४ ॥ शशंससर्वंयद्भूतंयदूनांसदसित्वरम् ॥ श्रुतकर्मावृषोवीरः सुबाहुर्भद्रएकलः ॥ २५ ॥ शांतिर्दर्शःपूर्णमासःसोमकोवरएवच ॥ कालिन्दीनन्दनाह्येतेप्रद्युम्नस्यप्रपश्यतः ॥ २६ ॥ अहौक्षिणी भिर्दशभिर्वृतायोद्धुंसमागताः ॥ उत्तरैःकुरुभिःसार्द्धंयदूनांचण्डविक्रमैः ॥ २७ ॥ बभूवतुमुलंयुद्धमब्धीनामब्धिभिर्यथा ॥ स्फुरद्भि र्निशितैःशस्त्रैरेजिरेवीरपुङ्गवाः ॥ २८ ॥ वर्षाकालेयथाराजंस्तडिद्भिःसर्वतोघनाः॥ परिघैर्मुसलैःखड्गैःशक्तिकुंतपरश्वधैः ॥ २९ ॥ गदा भिःप्रासबाणौघैर्युयुधुर्वीरपुङ्गवाः ॥ क्षणमात्रेणरुधिरप्रभवारौद्ररूपिणी ॥ ३० ॥ नदीबभूवराजेंद्रशतयोजनविस्तृता ॥ विदुद्रुवुस्तदा शेषाउत्तराःकुरवोजनाः ॥ ३१ ॥ शरत्कालेयथाप्राप्तेमेघसंघाइतस्ततः ॥ पूर्णमासोमहावीरःकालिंदीनंदनोबली ॥ ३२ ॥ चूर्णयामास बाणौघैःस्यंदनंवीरधन्वनः ॥ वीरधन्वापिविरथोधनुष्टंकारयन्मुहुः ॥ ३३ ॥ जघानबाणविंशत्यापूर्णमासंमहाबलम् ॥ पूर्णमासःस्वबाणे नमध्यतस्तान्द्विधाकरोत् ॥ ३४ ॥ वीरधन्वाथचिच्छेदधनुर्ज्यांतस्यनादिनीम् ॥ बाणेनैकेनराजेंद्रकुवाक्येनेवमित्रताम् ॥३५॥ लक्षभा रमयींगुर्वींगदामादायसत्वरम् ॥ जघानवीरधन्वानंपूर्णमासोमहाबलः ॥ ३६ ॥ गदाप्रहारव्यथितोवीरधन्वामदोत्कटः ॥ परिघेणजघाना शुपूर्णमासंहरेःसुतम् ॥ ३७ ॥ पूर्णमासःसमुत्थायपवनंनामपर्वतम् ॥ समुत्पाट्यस्थितोभूत्वाहस्ताभ्यांश्रीहरेःसुतः ॥ ३८ ॥ वीरधन्वास मुत्पाट्यपाहिपात्रंचपर्वतम् ॥ स्थितोभूत्वामहाबाहुर्ननादरणमण्डले ॥ ३९॥ द्वयोराक्षेपणात्सद्योमर्दितौधर्षितौगिरी ॥ पतितौभूतलेचूर्णी चक्रतुश्चोत्तरान्कुरून् ॥ ४० ॥ गृहीत्वावीरधन्वाख्यंपूर्णमासोहरेःसुतः ॥ भ्रामयित्वाथचिक्षेपवाराह्यांपुरिवेगतः ॥ ४१ ॥ वीरधन्वा प्रपतितोगुणाकरक्रतुस्थले ॥ मूर्च्छितोभग्नवेगोभूद्वमन्रुधिरंमुखात् ॥ ४२ ॥ हाहाकारोमहानासीद्द्वाराह्यांपुरिमैथिल ॥ देवदुंदुभयोने दुर्नरदुंदुभयस्तदा ॥ ४३ ॥ पूर्णमासोपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ यज्ञादुत्थायनृपतिःपुत्रंदृष्ट्वाचमूर्च्छितम् ॥ ४४ ॥ गृहीत्वादिव्यकोदं

ण्डंयुद्धंकर्तुंमनोदधे ॥ होताधर्मविदांश्रेष्ठोमुनीन्द्रःसर्ववित्कविः ॥ गन्तुमभ्युदितंवीक्ष्यवामदेवस्तमब्रवीत् ॥ ४५ ॥ ॥ वामदेवउवाच ॥ ॥
राजंस्त्वंहिनजानासिपरिपूर्णतमंहरिम् ॥ सुराणांमहदर्थायजातंयदुकुलेस्वयम् ॥ ४६ ॥ भुवोभारावतारायभक्तानांरक्षणायच ॥ भूत्वायदु
कुलेसाक्षाद्द्वारकायांविराजते ॥ ४७ ॥ तेनकृष्णेनपुत्रोयंप्रद्युम्नोयादवेश्वरः ॥ उग्रसेनमखार्थायजगज्जेतुंप्रणोदितः ॥ ४८ ॥ ॥ गुणाक
रउवाच ॥ ॥ परिपूर्णतमस्यापिश्रीकृष्णस्यमहात्मनः ॥ लक्षणंवदमेब्रह्मंस्त्वंपरावरवित्तमः ॥ ४९ ॥ ॥ वामदेवउवाच ॥ ॥ यस्मिन्स
र्वाणितेजांसिविलीयंतेस्वतेजसि ॥ तंवदंतिपरंसाक्षात्परिपूर्णतमंहरिम् ॥ ५० ॥ अंशांशोंशस्तथावेशःकलापूर्णःप्रकथ्यते ॥ व्यासाद्यै
श्चस्मृतःषष्ठःपरिपूर्णतमःस्वयम् ॥ ५१ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोनान्यएवहि ॥ एककार्यार्थमागत्यकार्यकोटिंचकारह ॥ ५२ ॥ ॥
॥ नारदउवाच ॥ ॥ श्रुत्वाकृष्णस्यमाहात्म्यंबलिंनीत्वागुणाकरः॥ वैरंविसृज्यप्रद्युम्नदर्शनार्थंसमाययौ॥५३॥ कार्ष्णिंप्रदक्षिणीकृत्यनत्वा
दत्त्वाबलिंततः ॥ अश्रुपूर्णमुखोभूत्वाप्राहगद्गदयागिरा ॥५४॥ ॥गुणाकरउवाच॥ ॥ अद्यमेसफलंजन्मकुलंमेऽद्यदिनेशुभम् ॥ अद्यक्रतुक्रि
याःसर्वाःसफलास्तवदर्शनात् ॥ ५५ ॥ त्वदङ्घ्रिभक्तिःपरमार्थलक्षणासदाभवेत्सज्जनसंगमात्परा ॥ त्वमेवसाक्षान्निजभक्तवत्सलःपरेशभू
मन्परिपाहिपाहि ॥ ५६ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ ज्ञानवैराग्यसंयुक्ताभक्तिस्तेप्रेमलक्षणा ॥ मद्भक्तसङ्गमोभूयाच्छ्रीःस्याद्भागवतीत्वि
ह ॥ ५७ ॥ ॥ नारदउवाच ॥ इत्युक्त्वाभगवान्कार्ष्णिःप्रसन्नोभक्तवत्सलः ॥ ददौतस्मैनृपतयेहयमेधतुरङ्गमम् ॥ ५८ ॥ ॥ इति
श्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडे नारदबहुलाश्वसंवादेउत्तरकुरुखण्डविजयोनामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥
॥ नारदउवाच ॥ ॥प्रद्युम्नोथमहाबाहुर्जित्वाराद्उत्तरान्कुरून् ॥ हिरण्मयंनामखण्डंजेतुंकार्ष्णिर्जगामह ॥ १ ॥ यत्रसीमागिरिर्दीर्घःश्वे
तोनामस्फुरद्द्युतिः ॥ तत्रकूर्मोहरिःसाक्षादर्यमायस्यदेशकः ॥ २ ॥ पुष्पमालानदीतीरेनाम्नाचित्रवनंमहत् ॥ सपुष्पफलभाराढ्यंकंदमूल
निधिःस्वतः ॥ ३ ॥ वानराःसन्तितत्रापिवंशजानलनीलयोः ॥ न्यस्ताःश्रीरामचंद्रेणत्रेतायांमैथिलेश्वर ॥ ४ ॥ सैन्यघोषंचतेश्रुत्वायुद्ध
कामाविनिर्गताः ॥ प्रद्युम्नसैन्येचोत्पेतुर्भ्रूभङ्गैःक्रोधमूर्च्छिताः ॥ ५ ॥ नखैर्दंतैश्चलांगूलैर्गजानश्वान्नरान्नृप ॥ इतस्ततःप्रधावन्तःपातय

 मासुरुद्भटाः ॥ ६ ॥ लांगूलैश्चरथान्बद्ध्वाचिक्षिपुश्चाम्बरेबलात् ॥ विजयध्वजनाथस्यविजयस्यार्जुनस्यच ॥७॥ रथंबद्ध्वाथलांगूलेकेचिदु 
 त्पेतुरम्बरे ॥ कपिध्वजध्वजेसाक्षात्कपींद्रोहनुमान्प्रभुः ॥ ८ ॥ क्रोधाढ्यः फाल्गुनसखः उत्पपातरणांगणे ॥ धृत्वातत्रवपुर्दीर्घंशतयोज
नविस्तृतम् ॥ ९ ॥ लाङ्गूलेनचतान्बद्ध्वापातयामासभूतले ॥ तदाप्रहर्षिताःसर्वेज्ञात्वाश्रीरामकिंकराः ॥ १० ॥ नेमुस्तंसर्वतोराजन्कृ 
ताञ्जलिपुटाःशनैः ॥ केचिदालिंगनंचक्रुःकेचिदुत्पेतुरोजसा ॥ ११ ॥ केचिच्चुचुम्बुर्लाङ्गूलंकेचित्पादंचवानराः ॥ तानालिंग्यमहावी
रःस्पृष्ट्वासत्पाणिनापुनः ॥ १२ ॥ दत्त्वाशिषंतत्कुशलंपप्रच्छाथाञ्जनीसुतः ॥ नत्वातंवानराःसर्वेजग्मुश्चित्रवनंनृप ॥ १३ ॥ हनुमानर्जु
नस्यापिध्वजेह्यंतरधीयत ॥ मकराख्यांस्ततोदेशान्प्रद्युम्नोमीनकेतनः ॥ १४ ॥ ययौवृष्णिवरैःसार्द्धंदुंदुभीन्वादयन्मुहुः ॥ मकरस्यगिरेः
पार्श्वेदुंदुभिध्वनिमिश्रितः ॥ १५ ॥ मधुभक्ष्यामधुकराः कोटिशःप्रोड्डिताःकिल ॥ तैर्दंशितंबलंसर्वंहस्तिचीत्कारसंयुतम् ॥ १६ ॥ तदा
कार्ष्णिर्महाबाहुःपवनास्त्रंसमादधे ॥ तद्वाततताडिताराजन्गतास्तेपिदिशोदश ॥ १७ ॥ तत्रदेशेजनाराजन्सर्वेवैमकराननाः ॥ ततस्तु
डिंडिभोदेशस्तत्रहस्तिमुखाजनाः ॥१८॥ एवंदेशांस्ततः पश्यंस्त्रिशृंगाविषयान्गतः ॥ कार्ष्णिर्ददर्शतत्रापिमनुष्याञ्छृंगधारिणः ॥ १९ ॥
त्रिशृंगस्यगिरेःपार्श्वेनगरींस्वर्णचर्चिकाम् ॥ हेमसौधमयींदिव्यांरत्नप्राकारमंडिताम् ॥ २० ॥ हिरण्यवर्णैःपुरुषैःस्त्रीजनैश्चतडिद्द्युभिः ॥
नागैश्चनागकन्याभिःपुरींभोगवतीमिव ॥ २१ ॥ चंद्रकांतानदीतीरेशोभितांमंगलायनाम् ॥ कार्ष्णिःसमाययौराजन्यथाशक्रोमरावतीम्
॥ २२ ॥ तत्रराजामहावीरोनाम्नादेवसखोबली ॥ मन्मुखात्तद्बलंश्रुत्वाबलिंनीत्वाहिरण्मयम् ॥ प्रद्युम्नंपूजयामासभक्त्यापरमयापुनः ॥२३॥
तंपप्रच्छमहाबाहुःप्रद्युम्नोभगवान्हरिः ॥ चंद्रवत्तेकथंशोभासर्वेषांचवदाशुमे ॥ २४ ॥ ॥ देवसखउवाच ॥ ॥ अर्यम्णापितृपतिनाकृ
मेरूपस्यमापतेः ॥ अंघ्रीप्रक्षालितौतेनवारिणाभून्ममहानदी ॥ २५ ॥ श्वेतपर्वतशृंगाच्चावतरंतीयदूत्तम ॥ पृषध्राख्योमनुसुतोगोपालो
गुरुणाकृतः ॥ २६ ॥ जघानकपिलांरात्रावसिनासिंहशंकया ॥ वसिष्ठेनतदाशप्तः शूद्रत्वंसमुपागतः ॥ २७ ॥ कुष्ठेनपीडिततनुः पर्यटं
स्तीर्थमाचरन् ॥ अस्यांनद्यांयदास्नातोगलत्कुष्ठान्मनोःसुतः ॥ मुक्तोभूच्चंद्रवत्तस्यदेहशोभाबभूवह ॥ २८ ॥ चंद्रकांतानदीचेयंप्रसिद्धा 

स्तीर्थमाचरन् ॥ अस्यांनद्यांयदास्नातोगलत्कुष्ठान्मनोःसुतः ॥ मुक्तोभूच्चंद्रवत्तस्यदेहशोभाबभूवह ॥ २८ ॥ चंद्रकांतानदीचेयंप्रसिद्धा
भूद्धिरण्मये ॥ तस्यांमुक्तोयतः स्नात्वागलत्कुष्ठान्मनोः सुतः ॥ २९ ॥ तस्यांस्नानंचकर्तारोवयंसर्वेनृपोत्तम ॥ रूपेणचंद्रतुल्याःकोभ
वामोत्रनसंशयः ॥ ३० ॥ ॥ नारदउवाच ॥ ॥ इतिश्रुत्वामहाबाहुः प्रद्युम्नोयादवैःसह ॥ चंद्रकांतांनदींस्नात्वाददौदानान्यनेकशः ॥
॥ ३१ ॥ इति श्रीग०संहि०वि०नारदब०सं०मकरडिंडिमासिंहक्रौञ्चत्रिशृंगदेशविजयेहिरण्यखण्डविजयोनामैकोनत्रिंशोध्यायः ॥ २९ ॥
॥ श्रीनारदउवाच ॥ ॥ एवंहिरण्मयंखण्डंजित्वाकार्ष्णिर्महाबलः ॥ जगामरम्यकंखण्डंदेवलोकमिवस्फुरन् ॥१॥ तस्यसीमागिरिः साक्षा
न्नीलोनामनगाधिराट् ॥ तत्रोत्तरेकालदेशेनगरीभीमनादिनी ॥ २ ॥ कालनेमिसुतस्तत्रकलंकोनामराक्षसः ॥ त्रेतायुगेरामचंद्राद्री
तोयुद्धात्पलायितः ॥ ३ ॥ लंकापुर्य्याइहागत्यवासकृद्राक्षसैः सह ॥ रक्षसामयुतेनासौयुद्धायकृतनिश्चयः ॥ ४ ॥ खरारूढःकृष्णवर्णोयदू
नांबलमाययौ ॥ यदूनांराक्षसानांचघोरंयुद्धंबभूवह ॥ ५ ॥ प्रघोषोगात्रवान्सिंहोबलप्रबलऊर्ध्वगः ॥ सहओजोमहाशक्तिरपराजितए
वच ॥ ६ ॥ लक्ष्मणानंदनाह्येतेश्रीकृष्णस्यसुताःशुभाः ॥ सर्वेषामग्रतःप्राप्ताबाणैस्तीक्ष्णैःस्फुरत्प्रभैः ॥ ७ ॥ राक्षसानांबलंजघ्नुर्वायुवेगै
र्यथाघनम् ॥ बाणौघैश्छिन्नभिन्नांगाराक्षसारणदुर्मदाः ॥ ८ ॥ त्रिशूलानांमुद्गराणांवर्षंचक्रुर्मदोत्कटाः ॥ कलंकस्तुतदाप्राप्तश्चर्वयन्वारणा
न्रथान् ॥ ९ ॥ हयान्नरान्सशस्त्रास्त्रान्मुखेचिक्षेपसत्वरम् ॥ गजान्पादेषुचोन्नीयसनीडान्रत्नकंबलान् ॥ १० ॥ घंटानादसमायुक्तान्प्रा
क्षिपच्चांबरेबलात् ॥ प्रघोषःश्रीहरेःपुत्रःकपीन्द्राह्वंसमादधे ॥ ११ ॥ तद्बाणान्निर्गतःसाक्षाद्वायुपुत्रोमहाबलः ॥ गृहीत्वामुद्गरंघोरंवज्रमिंद्रइव
प्रभुः ॥ १२ ॥ राक्षसान्पर्वताकारान्पातयामासभूतले ॥ कांश्चित्करेणचोन्नीयचिक्षेपगगनेबलात् ॥१३॥ कांश्चिद्ददारदोर्भ्यांतान्पातया
मासभूतले॥ परिवार्यासुरान्कांश्चिल्लांगूलेनमहाबलः॥१४॥वातस्तूलमिवाकाशेचिक्षेपशतयोजनम्॥ हनूमंतंतदाज्ञात्वाकलंकोराक्षसेश्वरः॥
॥ १५ ॥ लक्षभारमयींगुर्वींगदांचिक्षेपनादयन् ॥ उत्पपातकपिर्वेगाद्गदाभूमौपपातह ॥ १६ ॥ उत्पतन्वानराधीशोभ्रूभङ्गंकारयन्मुहुः ॥
मुष्टिनाघातयित्वातंकिरीटंतस्यचाददे ॥ १७ ॥ कलंकोपितदातस्मैत्रिशूलंस्वंसमाददे ॥ उत्पतन्सकपिर्वेगात्पृष्ठदेशंपपातह ॥ १८ ॥
हनुमांस्तंतदादोर्भ्यांपातयित्वामहीतले ॥ वैडूर्य्यपर्वतंनीत्वातस्योपरिसमाक्षिपत् ॥ १९ ॥ गिरिपातेनचूर्णाङ्गोमर्दितःपंचतांययौ ॥ त

दाजयजयारावःशंखध्वनियुतोऽभवत् ॥ २० ॥ हनुमान्भगवान्साक्षात्तत्रैवान्तरधीयत ॥ प्रद्युम्नस्योपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ २१ ॥
अथकार्ष्णिर्महाबाहुःस्वसैन्यपरिवारितः ॥ मनोहरांस्वर्णमयींमानवींनगरींययौ ॥ २२ ॥ नैःश्रेयसवनंयत्रकल्पवृक्षलतावृतम् ॥ हरिचंदन
मंदारपारिजातोपशोभितम् ॥ २३ ॥ संतानामोदसंमिश्रवायुभिःसुरभीकृतम् ॥ केतकीचंपकलताकुटजैःपरिसेवितम् ॥२४॥ माधवीनांल
ताजालैःपुष्पितैःसफलैर्नतैः ॥नदद्भिर्हंगालिकुलैर्वैकुंठमिवसुन्दरम्॥२५॥योजनानांपंचशतंलंबितंमानवंगिरिम् ॥ अधोधःशोभितंराजञ्छ
तयोजनविस्तृतम् ॥२६॥ पुंस्कोकिलैःकोकिलैश्चमयूरैःसारसैःशुकैः ॥ चक्रवाकैश्चकोरैश्चहंसैर्दात्यूहकूजितम् ॥२७॥ सर्वर्तुपुष्पशोभाढ्य
माक्षिपन्नंदनंवनम् ॥ मृगशाबारमन्तेवैशार्दूलैःसहमैथिल ॥२८॥ नकुलाःफणिभिःसार्द्धंयत्रवैरविवर्जिताः ॥ अथुतंसरसांयत्रभ्रमरध्वनिसं
युतम् ॥ २९ ॥ सहस्रपत्रैःकमलैःशतपत्रैःस्फुरत्प्रभैः ॥ इतस्ततोवर्तमानमानंदमिवमूर्तिमत् ॥ ३० ॥ तद्वनंसुन्दरंदृष्ट्वानिर्गतान्नगरीजना
न् ॥ प्रपच्छवाञ्छितंसाक्षात्प्रद्युम्नःसर्ववित्कविः ॥ ३१ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ कस्येयंनगरीरम्याकस्येदंवनमद्भुतम् ॥ वदताशुसवि
स्तारंहेलोकाःपुण्यशालिनः ॥ ३२ ॥ ॥ जनाऊचुः ॥ ॥ वैवस्वतोमनुर्नामयोद्यैवंवर्ततेनृप ॥ मानवेचगिरौरम्येमत्स्यंनारायणंहरिम् ॥
॥ ३३ ॥ वर्तमानंसदानत्वाकरोतिविपुलंतपः ॥ तस्येयंनगरीरम्यातस्यनैःश्रेयसंवनम् ॥ ३४ ॥ वैकुण्ठाच्चसमानीतंश्रीहरेःकृपयानृप ॥
वैकुण्ठाच्चसमानीताभूमिश्चायंगिरिस्तथा ॥ ३५ ॥ यूयंसर्वेपिराजानस्तस्यवंशभवाःक्षितौ ॥ सूर्यवंशांतरेराजंश्चन्द्रवंशान्तरेहिभोः ॥३६॥
॥ श्रीनारदउवाच ॥ ॥ क्षत्रियाणांचसर्वेषांवृद्धंतंप्रपितामहम् ॥ श्राद्धदेवंमनुंज्ञात्वाविस्मितोभूद्धरेःसुतः ॥ ३७ ॥ श्रुत्वावचस्तदासद्यो
भ्रातृभिर्यदुभिर्वृतः ॥ मानवाद्रिंसमारुह्यश्राद्धदेवंददर्शह ॥ ३८ ॥ शतसूर्यप्रभंकांत्याद्योतयंतंदिशोदश ॥ महायोगमयंसाक्षाद्रुटजेशा
न्तरूपिणम् ॥ ३९॥ वेदव्यासशुकाद्यैश्चवसिष्ठधिषणादिभिः ॥ परस्परंमहाराजशृण्वंतंश्रीहरेर्यशः ॥४०॥ ननामकार्ष्णिर्यदुभिःसहैवतंकृ
ताञ्जलिस्तत्रसमास्थितोभवत् ॥ मनुःसमुत्थायहरेःप्रभावविदत्वासनंगद्गदयागिराऽब्रवीत् ॥ ४१ ॥ ॥ मनुरुवाच ॥ ॥ नमस्तेवासुदेवा
यनमःसंकर्षणायच ॥ प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः ॥ ४२ ॥ अनादिरात्मापुरुषस्त्वमेवत्वंनिर्गुणोसिप्रकृतेःपरस्त्वम् ॥ सदावशी

यनमःसंकर्षणायच ॥ प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः ॥ ४२ ॥ अनादिरात्मापुरुषस्त्वमेवत्वंनिर्गुणोसिप्रकृतेःपरस्त्वम् ॥ सदावशी

कृत्यबलात्प्रधानंगुणैःसृजस्यत्सिचपासिविश्वम् ॥ ४३ ॥ ततोविवेकंसविहायसर्वतोमत्वाखिलंचात्रमनोमयंजगत् ॥ भजेपरंनिर्गुणमादि
पूरुषंसर्वज्ञमाद्यंपुरुषंसनातनम् ॥ ४४ ॥ जागर्तियोस्मिन्छयनंगतेसतिनायंजनोवेदसतःपरन्तम् ॥ पश्यन्तमाद्यंपुरुषंहियज्ञनोनपश्यति
स्वच्छमलंचतंभजे ॥ ४५ ॥ यथानभोग्निःपवनोनसज्जतेघटेनकाष्ठेनरजोभिरावृतैः ॥ तथाभवान्सर्वगुणैश्चनिर्मलोवर्णैर्यथास्यात्स्फटिको
महोज्वलः ॥ ४६ ॥ व्यंगेनवालक्षणयाचवाक्पथैरर्थैःपदस्फोटपरायणैःपरम् ॥ नज्ञायतेयद्धनिनोत्तमेनसद्वाच्येनतद्ब्रह्मकुतस्तुलौकि
कैः ॥ ४७ ॥ वदंतिकेचिद्धुविकर्मकर्तृयत्कालंचकेचित्परयोगमेवतत् ॥ केचिद्विचारंप्रवदन्तियच्चतद्ब्रह्मेतिवेदांतविदोवदंति ॥ ४८ ॥
यंनस्पृशन्तीहगुणानकालजाज्ञानेन्द्रियंचित्तमनोनवुद्धयः ॥ महन्नवेदोवदतीतितत्परंविशंतिसर्वेनलविस्फुलिङ्गवत् ॥ ४९ ॥ हिरण्यग
र्भंपरमात्मतत्त्वंयद्वासुदेवंप्रवदंतिसन्तः ॥ एवंविधंत्वांपुरुषोत्तमोत्तमंमत्वासदाहंविचराम्यसंगः ॥ ५० ॥ ॥ श्रीनारदउवाच ॥ ॥ मनो
वाक्यंतदाश्रुत्वाप्रद्युम्नोभगवान्हरिः ॥ मन्दस्मितोमनुंप्राहगीर्भिःसंमोहयन्निव ॥ ५१ ॥ ॥ श्रीप्रद्युम्नउवाच ॥ ॥ त्वन्नोगुरुःक्षत्रिया
णामादिस्त्वंप्रपितामहः ॥ मत्पूजनीयोवृद्धोसिश्लाघ्योधर्मधुरंधरः ॥ ५२ ॥ वःप्रजाश्चवयंराजन्रक्ष्याःपाल्याश्च सर्वशः ॥ भवतातप्यतेदि
व्यंतपस्तेनजगत्सुखम् ॥ ५३ ॥ मृग्यस्त्वत्सदृशःसाधुःपरमात्माहरिःस्वयम् ॥ नृणामन्तस्तमोहारीसाधुरेवनभास्करः ॥ ५४ ॥ ॥ श्री
नारदउवाच ॥ इत्युक्त्वाभगवान्कार्ष्णिरनुज्ञाप्यप्रणम्यतम् ॥ परिक्रम्यमनुंराजन्स्वयंभूमौजगामह ॥ ५५ ॥ इतिश्रीगर्गाचार्यसंहितायां
विश्वजित्खण्डेनारदबहुलाश्वसंवादेमानवदेशविजयेः कालदेशरम्यकखण्डविजयोनामत्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ छ ॥ ॥छ॥
॥ श्रीनारदउवाच ॥ ॥ इत्थंतुरम्यकंखंडंजित्वाकार्ष्णिर्महाबलः ॥ सुमेरोःपूर्वदिग्भागेकेतुमालंजगामह ॥ १ ॥ तस्यसीमागिरिःसा
क्षान्माल्यवान्नाममैथिल ॥ चतुर्नाम्नीयत्रगंगामहापातकनाशिनी ॥ २ ॥ गिरेर्माल्यवतःपार्श्वेपुरीमन्मथशालिनी ॥ रत्नप्राकारसौधैश्च
देवधानीवशोभिता ॥ ३ ॥ यत्रवैपुरुषाराजन्कामदेवसमप्रभाः ॥ शारदेंदीवरश्यामाःपद्मपत्रनिभेक्षणाः ॥ ४ ॥ पीतांबरधरानार्य्यःपु
ष्पहारमनोहराः ॥ क्रीडंतिकंदुकैर्यत्रकामिन्योनवयौवनाः ॥५॥ यद्देहामोदपवनोन्मत्तालिकुलनादिताः ॥ सुगंधीकरोतिभूभागंसमंताच्छ

तयोजनम् ॥ ६ ॥ तत्पुरीवासिनोलोकानिर्गतास्तेबहुश्रुताः ॥ जगुर्यशःश्रीमुरारेःप्रद्युम्नस्यापिशृण्वतः ॥७॥ ॥ केतुमालवासिनऊचुः ॥
आदावुरंगशयनोजगदार्त्तिहारीसाक्षात्प्रधानपुरुषेश्वरआदिदेवः ॥ यःप्रार्थितःसुरवरैर्भुवनावनायतस्मैनमोभगवतेपुरुषोत्तमाय ॥ ८ ॥
जातोगतःपितृगृहात्पितरौविमोक्ष्यनंदालयंशिशुतनुःसतुनंदपत्न्या ॥ संलालितःसघृणयाबहुमङ्गलश्रीःप्राणप्रहारमकरोत्किलपूतनायाः
॥ ९ ॥ बालोबभञ्जशकटंशयनंप्रकुर्वन्दैत्यंनिपात्यमहदद्भुतमश्मपृष्ठे ॥ मात्रेप्रदर्श्यनिजरूपमलंकृतोभूद्गर्गेणसंकथितसुन्दरभाग्यलक्ष्मीः
॥ १० ॥ संछालितोव्रजजनैर्नवनीतचौरःश्यामोमनोहरवपुर्मृददःसबालः ॥ भित्त्वाजघासदधिपात्रमतीवदध्नोवृक्षौबभञ्जजननीलघुदास
बद्धः ॥ ११ ॥ वृंदावनेसविचरन्सहवत्सगोपैर्वत्सासुरंचविनिपात्यकपित्थवृक्षे ॥ सद्योविगृह्यखरतुण्डपुटेचदोर्भ्यांदैत्यंददारसबकंतृणव
त्तटिन्याम् ॥ १२॥ संधारयंश्चशिशुभिर्बहुवत्ससंघान्वेणुंक्वणन्मदनमोहनवेषभृद्यः ॥ गोपानघासुरमुखेप्रहितान्जुगोपगोगोपवत्सकवपुः
सचकारसद्यः ॥ १३ ॥ क्षेत्रज्ञआत्मपुरुषोभगवाननंतःपूर्णःप्रधानपुरुषेश्वरआदिदेवः ॥ धृत्वावपुःसविहरन्व्रजबालकेषुसंमोहयन्विधिम
जोविचचारकृष्णः ॥ १४ ॥ चिक्षेपधेनुकमसौबलिनंबलेनतालेप्रगृह्यसहसाफणिकालियाख्यम् ॥ बभ्रामवह्निमपिबदनुजंप्रलंबंसद्योजघा
नसबलोदृढमुष्टिनाच ॥ १५ ॥ संचारयन्व्रजपशून्मधुरंक्वणन्योवेणुंवनेव्रजवधूनिजगीतकीर्तिः ॥ दिव्यांबराणिसजहारवराङ्गनानांविप्रा
ङ्गनाभिरभितःकृतभक्तभोजः ॥ १६ ॥ देवेभिवर्षतिपशून्कृपयारिरक्षुर्गोवर्धनंप्रकृतिबालइवोच्छिलींध्रम् ॥ बिभ्रद्गिरिंसगजराडिवकंजमे
कहस्तेशचीपतिवचोभिरतःस्तुतोऽभूत् ॥ १७ ॥ नंदंजुगोपवरुणात्स्वजनायलोकंदिव्यंपरंचतमसोदिविदर्शयित्वा ॥ श्रीरासमण्डलग
तोव्रजसुंदरीणांरेमेकालिंदतटिनीपुलिनेऽगनाभिः ॥ १८ ॥ मानंहरन्मदनयौवनमानिनीनामंतर्दधेव्रजवधूनिजगीतकीर्तिः ॥ स्रग्वीमनोह
रवपुर्विरहातुराणांसाक्षाद्धरिर्मदनमोहनआविरासीत् ॥ १९ ॥ वृन्दावनेशबरराजवरांगनाभिर्विष्णुर्विभूतिभिरिवोद्युभिरादिदेवः ॥
रेमेस्तुतःसुरवरैःसचरासरङ्गेकेयूरकुण्डलकिरीटविटंकवेषः ॥ २० ॥ नंदंविमोक्ष्यफणिनःप्रददौपमोक्षंदिव्यंमणिंसचजहारहशंखचूडात् ॥
गोपस्तुतोवृषभरूपधरंहरिष्टंभूमौनिपात्यनिजवानकरेणशृङ्गे ॥ २१ ॥ कंसःपरंभयमवापचतेनकेशीसंप्रेपितःसघनमेघवपुःप्रचण्डः ॥

उत्सृज्यतंचतरसापुनरापतंतंश्रीबाहुनासुखगतेनजघानकृष्णः ॥२२॥ योनारदेनबहुवर्णितभाग्यलक्ष्मीर्व्योमासुरोव्यसुरकारिपरेणयेन ॥
अक्रूरवर्णितमहोदयआदिदेवोगोपीजनातिविरहातुरचित्तचौरः ॥२३॥ श्वाफल्कयेस्तुतिकरायनिजंस्वरूपमंतर्दधेजलचयेसचदर्शयित्वा ॥
संप्रापतत्रमथुरोपवनंपरेशोगोपालकैश्वसबलोमथुरांददर्श ॥ २४ ॥ स्वैरंचरन्मधुपुरेरजकंनिकृत्यकृष्णःप्रदायचवरानथवायकाय ॥ मा
लाकृतंसमनुकंप्यचकारकुब्जामृज्वींधनुश्चसहसानमयन्बभंज ॥२५॥ द्वारिद्विपंचविनिहत्यद्विपांश्चमल्लान्हत्वाप्रगृह्यविनिपात्यसरंगभूमौ ॥
कंसंहरिस्तुपितरावथमोचयित्वाबंधान्नृपंपुरिचकारमहोग्रसेनम् ॥ २६ ॥ नंदंप्रसाद्यबहुदानकरोयदूंस्तानाहूयतर्प्यसुधनैश्चनिवेदयित्वा ॥
विद्यामधीत्यसददौप्रमृतंह्यपत्यंकृत्वावधंदनुजपंचजनस्यकृष्णः ॥२७॥ गोपीजनान्समनुगृह्यसचोद्धवेनाक्रूरेणहास्तिनपुरेत्वथपांडुपुत्रान् ॥
कृष्णोविजित्यबलिनंचजरासुतंचभस्मीचकारमुचुकुंददृशात्मकालम् ॥ २८ ॥ निर्माय चाद्भुतपुरंस्थितएत्यकृष्णोनिन्येचकुंडिनपुरात्कि
लभीष्मकन्याम् ॥ पुत्रेणशंबरमरिंनिजघानचादाद्राज्ञेमणिंयुधिविजित्यसऋक्षराजम् ॥ २९ ॥ भामापतिःसचशिरःशतधन्वनस्तुहत्वाहु
वाहसवितुश्चसुतांपरेशः ॥ आवंत्यराजतनुजांसजहारकृष्णःसत्यांस्वयंवरगृहेवृषभान्दमित्वा ॥ ३० ॥ कैकेयराजतनुजांसजहारभद्रांश्री
लक्ष्मणामखिलभद्रपतेःसुतांच ॥ भौमंविजित्यसबलंयुधिशस्त्रसंघैर्निन्येचषोडशसहस्रवरांगनाश्च ॥३१॥ भामेच्छयासुरतरुंचसभांसुधर्मां
शक्रंविजित्यसजहारकलत्रमित्रः ॥ योरुक्मिणंचनिजघानबलेनगोष्ठ्यांबाणस्यबाहुनिचयंशतधाच्छिनत्सः ॥३२॥तेनोग्रसेनकृतवैथजग
द्विजेतुंसंप्रेषितोनिजसुतःकिलशंबरारिः ॥ योत्रागतोभुविविजित्यनृपान्समस्ताञ्च्छ्रीकेतुमालपतयेत्रनमोस्तुतस्मै ॥ ३३ ॥ ॥ नारदउ
वाच ॥ ॥ प्रसन्नःश्रीहरिःकार्ष्णिःकुण्डलेकटकानिच ॥ हीरान्मणीन्गजानश्वान्ददौतेभ्योमहामनाः ॥ ३४ ॥ पुरोमन्मथशालिन्याःपतिः
संवत्सरोमहान् ॥ प्रद्युम्नायबलिंप्रादान्नमस्कृत्यप्रजापतिः ॥३५॥ अथकार्ष्णिर्महाबाहुर्दिव्यंकामवनंययौ ॥ जनैरगम्यंगम्यंचप्रजापतिदु
हितृभिः ॥ ३६ ॥ सुन्दरंमन्मथाक्रीडंवृतंकामास्त्रतेजसा ॥ नारीणांयत्रपततिव्यसुर्गर्भोनुवत्सरम् ॥ ३७ ॥ तदापरात्कामवनाद्विनिर्ग
तःश्रीपुष्पधन्वानृपपंचसायकः ॥ पीतांबरःश्यामतनुर्मनोहरस्ततानकोदंडगुणध्वनिंस्मरः ॥ ३८ ॥ यद्बाणतोयादवपुंगवाःस्वतःससै

निकाःसाश्वगजाःपदातिभिः ॥ निपेतुराराात्किलकामविह्वलास्तद्बाणवेगस्यनवर्णनंभवेत् ॥ ३९ ॥ अथाशुकार्ष्णौजगदीश्वरेश्वरेप्र
लीनतांप्रापजलेजलंयथा ॥ सद्योविसिष्मुर्यदवःससैनिकाविज्ञायपूर्णंनृपरुक्मिणीसुतम् ॥ ४० ॥ ॥ इति श्रीमद्गर्गाचार्यसंहिता
यांविश्वजित्खण्डे नारदबहुलाश्वसंवादे मन्मथदेशविजयेकेतुमालखंडविजयोनामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥ छ ॥ ॥ छ ॥
॥ श्रीनारदउवाच ॥ ॥ अथकार्ष्णिर्महाबाहुःकेतुमालंविजित्यसः ॥ भद्राश्वंप्रययौधन्वीखण्डंयोगसमृद्धिमत् ॥ १ ॥ यस्यसीमागि
रिःसाक्षाद्राजतेगन्धमादनः ॥ सीतानाम्नीयत्रगङ्गावहंतीपापनाशिनी ॥ २ ॥ वेदक्षेत्रेमहातीर्थेसर्वपापप्रमोचने ॥ हयग्रीवोमहाविष्णुर्य
त्रसंनिहितोहरिः ॥ ३ ॥ भद्रश्रवाधर्मसुतस्तस्यसेवांकरोतिहि ॥ गङ्गातीरस्यपुलिनेप्रद्युम्नस्यमहात्मनः ॥ बभूवुःशिबिरव्यूहाहेमाम्ब
रमनोहराः ॥ ४ ॥ भद्रश्रवाधर्मसुतोमहात्माभद्राश्वदेशाधिपतिर्महौजाः ॥ प्रदक्षिणीकृत्यननामभक्त्यादत्वाबलिंकृष्णसुतायचाह ॥
॥ ५ ॥ भद्रश्रवोवाच ॥ ॥ ॥ त्वंसाक्षाद्भगवान्पूर्णःपरिपूर्णतमःस्वयम् ॥ साधूनांरक्षणार्थायजगज्जेतुंविनिर्गतः ॥ ६ ॥ भगवञ्छ
म्बरोनामदैत्यःपूर्वंजितस्त्वया ॥ तस्यभ्रातामहादुष्टःकनीयानुत्कचःस्मृतः ॥ ७ ॥ गोकुलेकृष्णचन्द्रेणमारितःशकटस्थितः ॥ तस्यभ्रा
तामहादुष्टोज्येष्टोस्तिशकुनिःस्थितः ॥ जेतुंयोग्यस्त्वयादेवनान्यैरपिकदाचन ॥ ८ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ कस्यवंशेसमुद्भूतः
शकुनिर्नामदैत्यराट् ॥ कस्मिन्पुरेस्थितिस्तस्यबलंकिंवदधर्मज ॥ ९ ॥ ॥ भद्रश्रवोवाच ॥ ॥ कश्यपश्यमुनेर्दित्यामादिदैत्यौ
बभूवतुः ॥ हिरण्यकशिपुर्ज्जेष्ठोहिरण्याक्षोनुजस्तथा ॥ १० ॥ हिरण्याक्षस्यतस्यापिबभूवुर्नवपुत्रकाः ॥ शकुनिःशंबरोहृष्टोभूतसंता
पनोवृकः ॥ ११ ॥ कालनाभोमहानाभोहरिश्मश्रुस्तथोत्कचः ॥ देवकूटाद्दक्षिणाहिजठरस्यगिरेरधः ॥ १२ ॥ पुरीचन्द्रावतीनाम
दैत्यानांदुर्गमंडिता ॥ शकुनिस्तत्रवसतिभ्रातृभिःषड्भिरावृतः ॥ १३ ॥ यदायदाहिमुनिभिर्यज्ञारंभोभवेदिह ॥ तदातदाहितेना
पिभंगोकारियदूत्तम ॥ १४ ॥ पुरंदरस्य [illegible] ॥ आस्ते [illegible] कामधेनुःसुरद्रुमः ॥ १५ ॥ यस्मात्र
संतिशक्राद्याउद्विग्नाःसात्वतांपते ॥ जेतुंयोग्यस्त्वयादेवदेवध्रुग्दैत्यपुंगवः ॥ १६ ॥ त्वयाजितंजगत्सर्वंभक्तानांशांतिकारिणा ॥ प्रद्यु

श्रायनमस्तुभ्यंचतुर्व्यूहायतेनमः ॥ गोविप्रसुरसाधूनांछंदसांपतयेनमः ॥ १७ ॥ ॥ नारदउवाच ॥ ॥ एवंसंप्रार्थितःसाक्षात्प्रद्युम्नोभगवान्ह
रिः॥देवायभद्रश्रवसेमाभैरित्यभयंददौ ॥१८॥ अथकार्ष्णिर्महाबाहुःस्वसैन्यपरिवारितः॥ पुरींचन्द्रावतींगंतुंप्रस्थानमकरोत्तदा॥१९॥मन्मु
खाच्छकुनिःश्रुत्वाप्रागच्छंतंयदूत्तमम् ॥ दैत्यानांसदसिप्राहशूलमुद्यम्यदैत्यराट्॥२०॥शकुनिरुवाच ॥ दिष्ट्यादिष्ट्याहिशत्रुर्मेप्रद्युम्नोत्र
समागतः ॥ जेतुंयोग्योमयादैत्याभ्रातुर्मय्यस्तिवागृणम् ॥२१॥ भ्रातामेशंबरोनामयेनपूर्वंचमारितः ॥ तस्मात्तंघातयिष्यामिप्रद्युम्नंयदुभिः
सह॥२२॥तस्माद्यातबलंतस्यविध्वस्तंकुरुतासुराः ॥ पश्चात्पुरंदरादींश्चघातयिष्यामिनिर्जरान् ॥२३॥ ॥ नारदउवाच ॥ ॥ इतिश्रुत्वावच
स्तस्यदैत्योहृष्टोमहाबलः ॥ आययौसंमुखेयोद्धुंदैत्यकोटिसमावृतः ॥ २४ ॥ प्रद्युम्नोभगवान्साक्षाल्लीलामानुषविग्रहः ॥ महत्याःसर्वसे
नायागृध्रंव्यूहंचकारह ॥ २५ ॥ गृध्रचञ्चौवर्तमानोनिरुद्धोधन्विनांवरः ॥ ग्रीवायामर्जुनःपृष्ठेसाम्बोजाम्बवतीसुतः ॥ २६ ॥ पादयोरुभ
योराजन्नास्थितौदीप्तिमद्गदौ ॥ कार्ष्णिःसाक्षात्तदुदरेपुच्छेभानुर्हरेःसुतः ॥ २७ ॥ बभूवतुमुलंयुद्धंसीतागङ्गातटेनृप ॥ दैत्यानां यदुभिः
सार्द्धमब्धीनामब्धिभिर्यथा ॥ २८ ॥ बाणैस्त्रिशूलैर्मुशलैर्मुद्गरैस्तोमरार्ष्टिभिः ॥ ववृषुर्दानवाःसर्वेधाराभिरिववारिदाः ॥ २९ ॥ रुरोधसू
र्यंचाकाशंसैन्यपादरजोभृशम् ॥ राजन्सबाणश्चयथावारिदाःप्रावृडुद्भवाः ॥ ३० ॥ वृकोहर्षोनिलोगृध्रोवर्द्धनोनादएवच ॥ महांशःपवनो
वह्निःक्षुदिश्चदशमःस्मृतः ॥ ३१ ॥ मित्रविन्दात्मजाह्येतेयुयुधुर्दानवैःसह ॥ बाणान्धकारेसंजातेवृकोनामहरेःसुतः ॥३२॥ सर्वेषामग्रतःप्रा
तोधनुष्टंकारयन्मुहुः ॥ दैत्यान्बिभेदबाणौघैःकुवाक्यैर्मित्रतामिव ॥ ३३ ॥ गजान्रथान्हयान्वीरान्पातयामासभूतले ॥ निपेतुश्छिन्नक
वचाश्छिन्नचापारणांगणे ॥३४॥ वृकबाणैर्भिन्नपादावृक्षावातहताइव ॥ अधोमुखाऊर्ध्वमुखाबाणौघैश्छिन्नबाहवः॥३५॥रेजूरणांगणेराजन्
भांडव्यूहाइवाहताः ॥ द्विधाभूतागजाबाणैःपतितारणमण्डले ॥ ३६ ॥ विरेजुश्छुरिकाविद्धाःकूष्माण्डशकलाइव ॥ तदैवहृष्टःसंप्राप्तःसिं
हारूढोमहाबलः ॥ ३७ ॥ बिभेदवृकचापस्यसिंजिनींदशभिःशरैः ॥ चतुर्भिश्चतुरोवाहान्द्वाभ्यांसूतंध्वजंत्रिभिः ॥ ३८ ॥ रथंचबाणविं
शत्याबिभेददनुजाधिपः ॥ छिन्नधन्वावृकोभूत्वाहताश्वोहतसारथिः ॥ ३९ ॥ अन्यंरथंसमारुह्यधनुर्जग्राहरोषतः ॥ तावत्तस्यधनुर्हृष्ट

श्चिच्छेदसमरेसुरः ॥ ४० ॥ तदागदांसमादायवृकोयादवपुंगवः ॥ तताडमूर्ध्निपंचास्यंदैत्यंपृष्ठस्थितंपुनः ॥ ४१ ॥ मृगेंद्रःक्रोधसंपूर्णःसमु
त्पत्यरणांगणे ॥ अनेकान्पातयामासनखैर्दंतैःकरैरपि ॥ ४२ ॥ हुंकारंभीषणंकृत्वालोलजिह्वःस्फुरत्सटः ॥ वृकंसंपातयामासरंभादंडंग
जोयथा ॥ ४३ ॥ गृहीत्वातंवृकोदोर्भ्यांपातयित्वामहीतले ॥ तस्योपरिनदंस्तस्थौमल्लोमल्लंयथानृप ॥ ४४ ॥ उत्पतंतंपुनःसिंहंचर्वयंतंत
तुंबलात् ॥ तताडमुष्टिनातंवैमित्रविंदात्मजोबली ॥ ४५ ॥ तस्यमुष्टिप्रहारेणकेसरीपंचतांगतः ॥ तदाक्रुद्धोह्लष्टदैत्यःशूलंचिक्षेपसत्व
रम् ॥ ४६ ॥ शूलंस्फुरन्महोल्काभंचिच्छेदत्वसिनावृकः ॥ तीक्ष्णयातुंडयाराजन्फणिनंगरुडोयथा ॥ ४७ ॥ ह्लष्टोपिस्त्वमसिंनीत्वानादय
न्खंमहाबलम् ॥ जघानतंवृकंमूर्ध्निकंपयन्वसुधातलम् ॥ ४८ ॥ स्वखड्गकोशेतत्खड्गमुपधार्यवृकोबली ॥ कंधरेस्वेनखड्गेनतंतताडस्फुर
च्छुचम् ॥ ४९ ॥ खड्गच्छिन्नंशिरस्तस्यदैत्यस्यपतितंभुवि ॥ रेजेकमण्डलुरिवसकिरीटंसकुंडलम् ॥ ५० ॥ ह्लष्टेमृतेतदादैत्याःशेषाः
सर्वेपलायिताः ॥ भयातुरामहाराजययुश्चन्द्रावतींपुरीम् ॥ ५१ ॥ देवदुंदुभयोनेदुर्नरदुंदुभयस्तदा ॥ श्रीवृकस्योपरिसुराःपुष्पवर्षंप्रचक्रिरे
॥ ५२ ॥ इतिश्रीमद्गर्गाचार्यसंहितायांविश्व० नारदबहुलाश्वसंवादेभद्राश्वखंडगमनेचन्द्रावत्युपाख्यानेह्लष्टदैत्यवधोनामद्वात्रिं० ॥ ३२ ॥
॥ श्रीनारदउवाच ॥ ॥ ह्लष्टंनिपतितंश्रुत्वाशकुनिःक्रोधमूर्च्छितः ॥ भ्रातॄन्संप्रेषयामासदेवानांभयकारकान् ॥ १ ॥ भूतसंतापनोनाम
गजमारुह्यनिर्गतः ॥ वृकःखरंसमारुह्यकालनाभोथसूकरम् ॥ २ ॥ महानाभोमत्तमुष्ट्रंहरिश्मश्रुस्तिमिङ्गिलम् ॥ वैजयंतंरथंजैत्रंमयदै
त्यविनिर्मितम् ॥ ३ ॥ पंचयोजनविस्तीर्णंसहस्राश्वनियोजितम् ॥ मायामयंकामगंचपताकाशतसंवृतम् ॥ ४ ॥ सहस्रकलशा
ढ्यंचमुक्तादामविलंबितम् ॥ रत्नभूषणभूषाढ्यंशतचंद्रसमोज्वलम् ॥ ५ ॥ सहस्रचक्रसंयुक्तंघण्टाटङ्कारभूषणम् ॥ आरुह्यशकुनिःप
श्चाद्योद्धुंकामोविनिर्ययौ ॥ ६ ॥ अक्षौहिणीभिर्द्वादशभिर्दैत्यानांमैथिलेश्वर ॥ धनुःस्वनैर्वीरशब्दैरश्वह्रेषारथस्वनैः ॥ ७ ॥ चीत्का
रैर्हस्तिनामाशामण्डलंतुजगर्जह ॥ दैत्यसेनाप्रयाणेनचकम्पेमण्डलंभुवः ॥ ८ ॥ निपेतुर्गिरयोनेकाविचेलुःसिंधवोनृप ॥ निपाति
तार्गलादेवैर्बभूवाश्वमरावती ॥ ९ ॥ तत्सैन्यंभीषणंदृष्ट्वाप्रद्युम्नोधन्विनांवरः ॥ बलीधैर्यकरःकार्ष्णिःप्राहेदंयदुपुंगवान् ॥ १० ॥

तगलादेवबभूवाश्वमरावती ॥ ९ ॥ ततसैन्यभीषणंदृष्ट्वाप्रद्युम्नोधन्विनांवरः ॥ बलीधैर्यकरःकार्ष्णिःप्राहेदंयदुपुंगवान् ॥ १० ॥

॥ प्रद्युम्नउवाच ॥ ॥ इदंशरीरंभुविपांचभौतिकंफेनोपमंकर्मगुणादिनिर्मितम् ॥ गतागतंकालवशंकदापिहिबुधानशोचन्तियथार्भकेःकृ
तम् ॥११॥ गच्छन्तिचोर्ध्वंकिलसात्विकाजनामध्येचतिष्ठन्तिहिराजसानराः॥ अधःप्रगच्छन्तिहितामसाः परेमुहुर्मुहुस्तेविचरन्तिकर्मभिः
॥ १२ ॥ बिभेत्ययंवागुणसर्पतोयथानेत्रभ्रमेणाचलतीवभूर्यथा ॥ तथाचसर्वंमनसाकृतंजगत्काचेर्भकंह्यर्भकआवृतोयथा ॥ १३ ॥ यथा
सुखंमण्डलवर्तिनांचलंतथास्तिपातालनिवासिनामपि ॥ ॥ तथामराणांक्रतुभिःकृतंस्मरेत्सर्वंत्यजेत्तत्तृणवत्परोदनः ॥ १४ ॥ ऋतोर्गु
णोदेहगुणोघनावलीरात्रिंदिवंयातियथातथाजनाः ॥ दृश्यंचयद्यन्नहिकिंचिदस्तितद्यथाव्रजेद्गच्छतिपांथसंगमः ॥ १५ ॥ दृष्टंयथावस्तु
यदोल्कयातथापारेगतेकिंह्युडुपप्रयोजनम्॥ विधायमार्गंविचरेत्सपक्षिवत्पश्यन्हिसर्वत्रहरिंपरेश्वरम् ॥ १६ ॥ यथेंदुरेकोजलपात्रवृंदगोयथा
ग्निरेकोविदितःसमिच्चये ॥ तथापरात्माभगवाननेकवत्सोंतर्बहिःस्यात्स्वकृतेषुदेहिषु ॥ १७ ॥ योज्ञाननिष्ठोतिविरागमाश्रितःश्रीकृष्ण
भक्तस्त्वनपेक्षकोपियः ॥ तपोवनंवापिगृहंगृहंवनंस्पृशन्तितौतेत्रिगुणानसर्वतः ॥ १८ ॥ ततोमुनिश्चाध्यगमत्परात्परंसुखीसदानंदमयस्तु
बालवत् ॥ देहंनपश्यत्युतसर्वकारणंधृतंचवासोमदिरामदान्धवत् ॥ १९ ॥ सूर्योदयेसर्वतमोविलीयतेप्रदृश्यतेवस्तुगृहेयथाजनैः ॥ ज्ञानो
दयेऽज्ञानतमःपलायतेसभ्राजतेब्रह्मपरंतनौतथा ॥ २० ॥ यथेंद्रियाणांचपृथक्चवर्त्मभिर्नोन्नीयतेर्थस्त्रिगुणाश्रयःपरः ॥ एकंह्यनंत
स्यपरस्यधामतद्यथामुनीनांकिलशास्त्रवर्त्मभिः ॥२१॥ परंपदंकेपिवदन्तिवैष्णवंकेवापिवैकुण्ठपरंपरेशम् ॥ शान्तिंचयत्केपितमःपरंबृहत्
कैवल्यमेकेप्रवदन्तिधामके ॥ २२ ॥ यदक्षरंकेपिदिशंवदन्तिकेगोलोकमाद्यंप्रवदंत्यथापरे ॥ केचिन्निकुंजंनिजलीलयावृतंप्राप्नोतिकृष्णस्य
पदंचतन्मुनिः ॥ २३ ॥ ॥ नारदउवाच ॥ ॥ इति कार्ष्णेर्वचःश्रुत्वासर्वेयादवपुङ्गवाः ॥ शस्त्राणिजगृहुर्दृष्ट्वातज्ज्ञानंधैर्यवर्द्धनम् ॥ २४ ॥
बभूवतुमुलंयुद्धंदैत्यानांयदुभिःसह ॥ सीतागङ्गातटेचाब्धौरक्षसांकपिभिर्यथा ॥ २५ ॥ रथिनोरथिभिस्तत्रपत्तिभिःपत्तयोनृप ॥ अश्व
वाहैरश्ववाहायुयुधुश्चगजागजैः ॥ २६ ॥ केचित्करींद्राउन्मत्तामहामात्यैःप्रणोदिताः ॥ गोमूत्रचयसिंदूरकस्तूरीपत्रभृन्मुखाः ॥ २७ ॥
हेमजालसमायुक्तारक्तकम्बलमण्डिताः ॥ गिरीन्द्राइवदृश्यंतेमुक्तानांमेघडंबरैः ॥२८॥ शुण्डादण्डैश्चफूत्कारैःसचीत्कारैःसशृंखलैः ॥ पात

यंतोरथानश्वान्वीराञ्राजन्रणांगणे ॥ २९ ॥ शुंडादंडैःसंगृहीत्वारथान्साश्वान्ससारथीन् ॥ निपात्यभूमावुत्थाप्यचिक्षिपुश्चांबरेबलात् ॥
॥ ३० ॥ कांश्चिन्ममर्दुःपादाभ्यांसंविदार्यकरैर्दृढैः ॥ सक्षताश्चगजाराजन्प्रधावंतोरणांगणे ॥ ३१ ॥ सपक्षास्तुरगाराजन्नश्ववाहप्रणोदि
ताः ॥ उल्लंघयंतोथरथान्गजकुंभांतरेगताः ॥ ३२ ॥ केचिदश्वैर्महावीराःशक्तिहस्तामदोत्कटाः ॥ जघ्नुर्गजस्थान्नृपतीन्मृगेंद्राइवयूथपान्
॥ ३३ ॥ अश्वारूढाःकेपिसेनांसंविदार्य्यविनिर्गताः ॥ खड्गवेगैःपद्मवनंलीलाभिर्वायवोयथा ॥ ३४ ॥ केचित्परस्परंसाश्वैरुत्पतंतोर
णांगणे ॥ खड्गैर्जघ्नुर्यथाकव्येचंचुभिःपक्षिणोंबरे ॥ ३५ ॥ केचित्खड्गैःपरशुभिःकेचिच्चक्रैःपदातयः ॥ चिच्छिदुर्निशितैर्भल्लैःफलानीव
शिरांसिच ॥ ३६ ॥ संग्रामजिद्बृहत्सेनः शूरःप्रहरणोरिजित् ॥ जयःसुभद्रोवामश्चसत्यकोश्वयुरेवहि ॥ ३७ ॥ भद्रायाश्चसुताह्येतेश्रीकृ
ष्णस्यौरसाःशुभाः ॥ सर्वेषामग्रतः प्राप्तायुयुधुर्दैत्यपुंगवैः॥ ३८ ॥ भूतसंतापनोनामगजारूढोमहासुरः ॥ यदुसैन्येमहाराजचक्रेनाराचदु
र्दिनम् ॥ ३९ ॥ बाणांधकारेचकृतेभूतसंतापनेनवै ॥ संग्रामजित्तदाप्राप्तःश्रीकृष्णस्यसुतोबली ॥ ४० ॥ विव्याधबाणशतकैर्भूतसंतापनं
रणे ॥ प्रलयार्णवसंघोषभीमसंघट्टनादिनीम् ॥ ४१ ॥ धनुर्ज्यांतस्यचिच्छेदभूतसंतापनोबली ॥ संग्रामजिद्धनुश्चान्यद्गृहीत्वास्वंतडि
त्प्रभम् ॥ ४२ ॥ सज्यंकृत्वाविधानेनशतंबाणान्समादधे ॥ तेबाणास्तद्धनुर्ज्यांचकवचंलोहनिर्मितम्॥४३॥भित्त्वाछित्त्वातनुंतस्यगजंभि
त्त्वाविनिर्गताः ॥ बाणप्रहारव्यथितःकिंचिद्व्याकुलमानसः ॥ ४४ ॥ गजंस्वंनोदयामासभूतसंतापनोबली ॥ कालांतकसमंनागंदृष्ट्वासंग्रा
मजिद्बली ॥ ४५ ॥ गृहीत्वास्वमसिंदिव्यंसंजघानरणांगणे ॥ तस्यखड्गप्रहारेणशुंडादण्डोद्विधाभवत् ॥ ४६ ॥ चीत्कारमुत्कटंकुर्वन्र
क्तंसंस्रावयन्करात् ॥ भूतसंतापनंत्यक्त्वाभुवनंकंपयन्गजः ॥ ४७ ॥ निपातयन्महावीरान्घंटानादैर्नदन्मुहुः ॥ नबलात्स्तंभितोदैत्यैःपुरीं
चंद्रावतींययौ ॥ ४८ ॥ कोलाहलोमहानासीद्राजन्नेवंगजेच्युते ॥ भूतसंतापनश्चक्रंश्रीकृष्णस्यसुतायवै ॥ ४९ ॥ चिक्षेपनिशितंशीघ्रंग्री
ष्ममार्तंडवत्स्फुरत् ॥ तदागतंभ्रमद्दृष्ट्वाचक्रंभद्रात्मजोबली ॥ ५० ॥ स्वचक्रेणमहाराजलीलयाशतधाच्छिनत् ॥ जठरस्यगिरेःशृंगंसमु
त्पाट्यमहासुरः ॥ ५१ ॥ चिक्षेपकृष्णपुत्रायनादयन्व्योममंडलम् ॥ संग्रामजिच्चतच्छृंगंगृहीत्वाभुजयोर्बलात् ॥ ५२ ॥ तताडतेनराजेंद्र

भूतसंतापनंरणे ॥ भूतसंतापनोदैत्यःसम्पूर्णंजठरंगिरिम् ॥ ९३ ॥ गहीत्वासंगरेतस्थायुद्धटोदैत्यपुंगवः ॥ अनेनघातयिष्यामित्वांरणेप्र
वदन्मुखात् ॥ ९४ ॥ देवकूटंसमुत्पाट्यगिरिंचश्रीहरेःसुतः ॥ अनेनघातयिष्यामित्वांरणेप्रवदन्मुखात् ॥ ९५ ॥ तस्थौतत्संमुखेराजं
स्तदद्भुतमिवाभवत् ॥ क्षिपंतंपर्वतंदैत्यंभूतसंतापनंनृप ॥ ९६ ॥ तताडगिरिणास्वेनरणेसंग्रामजिद्बली ॥ जठरोदेवकूटश्चद्वौगिरीदै
त्यमस्तके ॥ ९७ ॥ पतितौभूरिभाराढ्यौवज्रसंघर्षनादिनौ ॥ भूतसंतापनस्ताभ्यांपतितःपंचतांगतः ॥ ९८ ॥ तज्ज्योतिःसंग्राम
जितिलीनंजातंविदेहराट् ॥ श्रीसंग्रामजितःसैन्येनेदुर्दुंदुभयस्तदा ॥ भद्रात्मजोपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ ९९ ॥ ॥ इति श्रीम
द्गर्गाचार्यसं० विश्वजित्खण्डे ना० बसं० भद्राश्वखण्डगमनेचंद्रावत्युपाख्यानेभूतसंतापनदैत्यवधोनामत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥
॥ श्रीनारदउवाच ॥ ॥ संग्रामजिन्महायुद्धेभूतसन्तापनेमृते ॥ हाहाकारोमहानासीद्दैत्यसेनासुमैथिल ॥ १ ॥ शकुनिर्वृकःकालना
भोमहानाभस्तथैवच ॥ हरिश्मश्रुश्चपञ्चैतेसम्प्राप्तारणमडण्ले ॥ २ ॥ कार्ष्णिःशकुनिनायुद्धंचदनिरुद्धोवृकेणवै ॥ कालनाभेनसाम्ब
स्तुमहानाभेनदीप्तिमान् ॥ ३ ॥ हरिश्मश्रुसुरेणापिभानुःकृष्णसुतोबली ॥ सर्वेषामग्रतःप्राप्तोऽनिरुद्धोधन्विनांवरः ॥ ४ ॥ विभेदबाणै
र्दैत्यांश्चवज्रेणेन्द्रोयथागिरीन् ॥ अनिरुद्धशरैर्दैत्याश्छिन्नपादांसबाहवः ॥ ५ ॥ निपेतुर्मूर्च्छिताभूमौवृक्षावातहताइव ॥ अनिरुद्धशरैस्ती
क्ष्णैःसंच्छिन्नामेघडम्बराः ॥ ६ ॥ छिन्नकुम्भाभिन्नशुण्डाःपतितारणमण्डले ॥ रुग्णदन्ताश्छिन्नकक्षाःशैलावज्रहताइव ॥ ७ ॥ द्विधाभू
तागजाःपेतुःस्फुरत्कश्मीरकम्बलाः ॥ करिणांभिन्नकुम्भानांमुक्तारेजुःस्फुरत्प्रभाः ॥ ८ ॥ बाणान्धकारेराजेन्द्ररात्रौताराणगणाइव ॥
प्रधर्पिताःकेपिवीराअनिरुद्धशरान्विताः ॥ ९ ॥ निपेतुर्मूर्च्छिताभूमौतदद्भुतमिवाभवत् ॥ केचित्कौरथिनःपेतुस्तेषांशून्यारथाःस्थिताः ॥
॥ १० ॥ कपित्थस्यफलानीवहस्तिलेंडगतानिच ॥ क्षणमात्रेणराजेन्द्रदैत्यानांवाहिनीषुच ॥ ११ ॥ नदीबभूवसंग्रामेभीषणाक्षतजस्रवा
त ॥ द्विपग्राहाचोष्ट्रखरकबन्धाश्वादिकच्छपा ॥ १२ ॥ शिशुमाररथाकेशशैवालाभुजसर्पिणी ॥ करमीनामौलिरत्नहारकुण्डलशर्क
रा ॥ १२ ॥ शस्त्रशुक्तिश्छत्रशंखाचामरध्वजफेनका ॥ रथाङ्गावर्तसंयुक्तासेनाद्वयतटावृता ॥ १४ ॥ शतयोजनविस्तीर्णाबभौवैतरणीय

था ॥ प्रमथाभैरवाभूतावेतालायोगिनीगणाः ॥ १५ ॥ अट्टहासंप्रकुर्वंतोनृत्यंतोरणमण्डले ॥ पिबंतोरुधिरंशश्वत्कपालेननृपेश्वर ॥ १६॥
हरस्यमुण्डमालार्थंजगृहुस्तेशिरांसिच ॥ सिंहारूढाभद्रकालीडाकिनीशतसंवृता ॥ १७ ॥ भक्षयंतीरणेदैत्यानट्टहासंचकारह ॥ विद्या
धर्यस्त्वम्बरस्थागन्धर्व्योप्सरसस्तथा ॥ १८ ॥ क्षत्रधर्मेस्थितान्वीरान्वव्रिरेदेवरूपिणः ॥ परस्परंकलिरभूत्तासांपत्यर्थमम्बरे ॥ १९ ॥
ममानुरूपोनायंवइतिविह्वलचेतसाम् ॥ केचिद्वीराधर्मपरारणरङ्गान्नचालिताः ॥ २० ॥ ययुर्विष्णुपदंदिव्यंभित्त्वामार्तण्डमण्डलम् ॥
अनिरुद्धमृधंदृष्ट्वाकेचिद्दैत्याःपलायिताः ॥ २१ ॥ केचित्स्वंस्वंरणंत्यक्त्वादुद्रुवुस्तेदिशोदश ॥ तदावृकोमहादैत्यःखरारूढोभयंकरः ॥
॥ २२ ॥ आजगामनदन्युद्धेधनुष्टंकारयन्मुहुः ॥ अनिरुद्धस्यापिचापांसिंजिनीसहितंनृप ॥ २३ ॥ चिच्छेददशभिर्बाणैर्वृकोपिरणदुर्म
दः ॥ छिन्नधन्वानिरुद्धस्तुद्वितीयंधनुराददे ॥ २४ ॥ चिच्छेददशभिर्बाणैर्वृकचापंमहाबलः ॥ वृकस्त्रिशूलमुद्यम्यरुषाप्रस्फुरिताधरः ॥
ललज्जिह्वःप्रत्युवाचानिरुद्धंधन्विनांवरम् ॥ २५ ॥ ॥ दैत्यउवाच ॥ ॥ अद्यैवत्वांहनिष्यामिक्षत्रियंस्वल्पविक्रमम् ॥ त्वयासेना
हतामेद्यपश्यविक्रममद्भुतम् ॥ २६ ॥ ॥ अनिरुद्धउवाच ॥ ॥ येवदंतिमुखेनेहतेकुर्वंतिनकिंचन ॥ अद्यैवत्वांहनिष्यामिपश्यमेविक्रमं
परम् ॥ २७ ॥ नचेत्त्वांघातयिष्यामिशृणुताच्छपथंमम ॥ विप्रगोभ्रूणबालानांहत्यामेस्यात्सदैवहि ॥ २८ ॥ ॥ नारदउवा
च ॥ ॥ वृकोपिशपथंकृत्वाखरारूढोमहाबलः ॥ जघानतंत्रिशूलेनानिरुद्धंधन्विनांवरम् ॥ २९ ॥ तच्छूलंवामहस्तेनगृहीत्वाका
र्ष्णिनन्दनः ॥ तताडसहसाराजन्वृकंदैत्यंमहाबलम् ॥ ३० ॥ त्रिशूलस्तमरिंभित्त्वाखरंभित्त्वावनिङ्गतः ॥ ससर्पगोमयचयंचपले
वविदेहराट् ॥ ३१ ॥ खरस्तुपञ्चतांप्राप्तोवृकःसंमूर्च्छितोभवत् ॥ पुनर्वृकःसमुत्थायगृहीत्वामहतींगदाम् ॥ ३२ ॥ चूर्णयामाससहसा
चानिरुद्धरथंबलात् ॥ प्राद्युम्निःशितधारेणखड्गेनारिभुजद्वयम् ॥ ३३ ॥ चिच्छेदभिदुरेणाशुशैलपक्षौयथावृषा ॥ तदाभिन्नभुजोदैत्यःप
द्भ्यामाकंपयन्भुवम् ॥ ३४ ॥ विस्तीर्णंवदनंकृत्वाललज्जिह्वंभयंकरम् ॥ करालदंष्ट्रःप्रपिबन्नाकाशंदैत्यपुंगवः ॥ ३५ ॥ तिमिंतिमिंगिलइ
वप्राग्रसत्कार्ष्णिनंदनम् ॥ दैत्योदरेकृष्णपौत्रःश्रीकृष्णस्यानुकंपया ॥ ३६ ॥ नममारमहाराजकार्ष्णिर्मीनोदरेयथा ॥ वृकोदरेयथाकृ

ष्णोयथागोपाह्वयोदरे ॥ ३७ ॥ बकोदरेयथाकंसोयथावृत्रोदरेवृषा ॥ हाहाकारेतदाजातेयदुसैन्येविदेहराट् ॥ ३८ ॥ गदोगदांसमादाय
बलदेवानुजोबली ॥ तताडमस्तकेदैत्यंवृकंनाममहाबलम् ॥ ३९ ॥ तदाहतशिरादैत्योरेजेक्षतजबिंदुभिः ॥ गरिष्ठजलधाराभिर्यथाविंध्या
चलोनृप ॥ ४० ॥ फाल्गुनःस्वमसिंनीत्वातत्पादौचांजसाहरत् ॥ छिन्नांघ्रिःसपपातोर्व्यांछिन्नपक्षोयथागिरिः ॥ ४१ ॥ अनिरुद्धस्तदुद
रंभित्त्वाखड्गेननिर्गतः ॥ जहारतच्छिरश्चायंयथावज्रेणवृत्रहा ॥ ४२ ॥ तदाजयजयारावोयदुसैन्येबभूवह ॥ देवदुंदुभयोनेदुर्नरदुंदुभयस्त
था ॥ ४३ ॥ अनिरुद्धोपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ कथितंह्यद्भुतंचैतत्किंभूयःश्रोतुमिच्छसि ॥ ४४ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहि
तायांविश्व०नारदबहुलाश्वसंवादे भद्राश्वखण्डगमनेचन्द्रावत्युपाख्याने वृकदैत्यवधोनामचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ छ ॥
॥ बहुलाश्वउवाच ॥ ॥ अहोअत्यद्भुतंयुद्धंमुनेप्राद्युम्निनाकृतम् ॥ वृकेहतेमहादैत्येकिंबभूवरणेपुनः ॥ १ ॥ ॥ नारदउवाच ॥ ॥
वृकंदैत्यंहतंवीक्ष्यकालनाभोमहासुरः ॥ क्रोडारूढोरणंप्रागाद्धनुष्टंकारयन्मुहुः ॥ २ ॥ अक्रूरंबाणविंशत्यागदंचदशभिःशरैः ॥ अर्जुनंदश
भिर्बाणैर्युयुधानंचपंचभिः ॥ ३ ॥ दशभिःकृतवर्माणंकार्ष्णिंबाणशतेनवै ॥ अनिरुद्धंचविंशत्यादीप्तिमंतंचपंचभिः ॥ ४ ॥ सांबंचशतवा
णैश्चविव्याधसमरेसुरः ॥ तद्बाणैर्व्याकुलावीराबभूवुर्घटिकाद्वयम् ॥ ५ ॥ हयाश्वपंचतांप्राप्ताश्चूर्णीभूतारणांगणे ॥ तद्धस्तलाघवंदृष्ट्वाप्रसन्नोरु
क्मिणीसुतः ॥ ६ ॥ कालनाभंसाधुपदैःपूजयामाससंगरे ॥ प्रद्युम्नःस्वधनुर्नीत्वाबाणमेकंसमादधे ॥ ७ ॥ कोदंडमुक्तोविशिखस्तत्क्रोडं
दीर्घरूपिणम् ॥ समुन्नीयभ्रामयित्वास्वर्लोकेलक्षयोजनम् ॥ ८ ॥ आकाशात्पातयामाससमुद्रेभीमनादिनि ॥ प्रद्युम्नोभगवान्साक्षाद्द्वितीयं
बाणमादधे ॥ ९ ॥ सोपिबाणःसमुन्नीयकालनाभंमहाबलम् ॥ भ्रामयन्पातयामासचंद्रावत्यांबलात्पुरि ॥ १० ॥ कालनाभःप्रपतितःकिंचि
द्व्याकुलमानसः ॥ गृहीत्वाथगदांगुर्वींलक्षभारविनिर्मिताम् ॥ ११ ॥ रणंप्राप्तोयदुबलंपोथयामासदैत्यराट् ॥ गजान्रथान्हयान्वीरान्गदया
वज्रकल्पया ॥ १२ ॥ पातयामासवेगेनमहावातोयथातरून् ॥ कांश्चित्कराभ्यांप्रोन्नीयचिक्षेपगगनेबलात् ॥ १३ ॥ अंबरात्तेनिपेतुःकौरा
जन्वर्षोपलाइव ॥ तदागदांसमादायसांबोजांबवतीसुतः ॥ १४ ॥ तताडमूर्ध्नितंदैत्यंकालनाभंमहासुरम् ॥ तयोर्युद्धमभूद्घोरंगदाभ्यांरण

मण्डले ॥ १५ ॥ विस्फुलिंगान्क्षरंत्यौद्वेगदेचूर्णीबभूवतुः ॥ अन्येगदेसमादायतस्थतुःसंगरेचतौ ॥ १६ ॥ कालनाभस्तदाप्राहसांबंजांब
वतीसुतम् ॥ एकेनापिप्रहारेणजेतुंयोग्योसिमांनृप ॥ एकेनापिप्रहारेणहन्मित्वांनात्रसंशयः ॥ १७ ॥ पूर्वंप्रहारंकुरुमेइतिसांबोवदद्रणे ॥
कालनाभोथगदयासांबंमूर्ध्नितताडच ॥१८॥ गदोपरिगदांनीत्वासांबोजांबवतीसुतः ॥ जघानगदयादैत्यंकालनाभमुरस्स्थले ॥१९॥ गद
याभिन्नहृदयउद्वमन्नुधिरंमुखात् ॥ व्यसुःपपातभूपृष्ठेवज्राहतइवाचलः ॥ २० ॥ अभूज्जयजयारावंःसाधुवादःसतांनृप ॥ देवदुंदुभयोने
दुर्नरदुंदुभयस्तदा ॥ २१ ॥ सांबसेनोपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ विद्याधर्यश्चगंधर्वाननृतुश्चजगुर्मुदा ॥ २२ ॥ ॥ इतिश्रीमद्गर्गाचार्य
संहितायांविश्वजित्खण्डेनारदबहुलाश्वसंवादेभद्राश्वखण्डगमनेचन्द्रावत्युपाख्यानेकालनाभदैत्यवधोनामपंचत्रिंशोऽध्यायः ॥ ३५ ॥
॥ श्रीनारदउवाच ॥ ॥ कालनाभेथपतितेमहान्कोलाहलोभवत् ॥ उष्ट्रारूढोमहानाभोदैत्यःप्रातोरणांगणे ॥ १ ॥ मुखादग्निंसमसृ
जन्मायावीदैत्यपुङ्गवः ॥ तेनाग्निनाभूमिवृक्षाजज्वलुश्चदिशोदश ॥ २ ॥ वीराणांकंचुकोष्णीषकटिबंधांगरक्षकाः ॥ प्रजज्वलुर्महाराजमु
ञ्जपुष्पप्रतूलवत् ॥ ३ ॥ समुद्रपट्टनभवैःपीतारुणसितासितैः ॥ हरितैश्चित्रवर्णैश्चसूक्ष्मैःकाश्मीरजैरपि ॥ ४ ॥ हेमरत्नखचिद्भिश्चकंबलैः
सहितागजाः ॥ प्रजज्वलुर्मृधेराजन्वृक्षैःशैलाइवाग्निना ॥ ५ ॥ शिखारत्नश्चामरैश्चहारैर्हैमैःपरिच्छदैः ॥ उत्पतंतोहयायुद्धेमृगाइवदवाग्निना
॥ ६ ॥ ध्वजानांपट्टिकाभिश्चपताकैर्हैमदामभिः ॥ ज्वलंतश्चरथारेजुःशृंगाणीवाग्निनापरे ॥ ७ ॥ सैन्यंभयातुरंदृष्ट्वादीप्तिमान्कृष्णनन्दनः
॥ मायावह्निप्रशांत्यर्थंपर्जन्यास्त्रंसमादधे ॥ ८ ॥ बाणाद्विनिर्गतामेघाःसांवर्तकगणाइव ॥ ववृषुर्जलधाराभिर्नंदंतोभैरवंरवम् ॥९॥ आसा
रेणमहाराजप्रावृट्कालोभवत्क्षितौ ॥ पुंस्कोकिलाःकोकिलाश्चमयूराःसारसादयः ॥१०॥ मण्डूकाःप्रजगुर्गीर्भिरिंद्रगोपाश्चरेजिरे ॥ इंद्रचापे
नदामिन्यामैथिलेन्द्रबभौनभः ॥ ११ ॥ इत्थंशांतिंगतेवह्नौमहानाभोमहासुरः ॥ प्राहिणोन्निशितंशूलंरुषादीप्तिमतेत्वरम् ॥ १२ ॥ शूलं
सपमिवायांतंदीप्तिमान्रोहिणीसुतः ॥ चिच्छेदत्वसिनायुद्धेफणिनंगरुडोयथा ॥ १३ ॥ दशनैश्चोद्भटंचोष्ट्रंमहानाभस्यवाहनम् ॥ दीप्ति
मान्स्वेनखड्गेनसंजघानरणाङ्गणे ॥ १४ ॥ द्विधाभूतःपपातोर्व्यांखड्गसंछिन्नकन्धरः ॥ जगामपंचतामुष्ट्रोमहानाभस्यपश्यतः ॥ १५ ॥

मान्स्वेनखड्गेनसंजघानरणाङ्गणे ॥ १४ ॥ द्विधाभूतःपपातोर्व्यांखड्गसंछिन्नकन्धरः ॥ जगामपंचतांशुष्मीमहानाभस्यपश्यतः ॥ १५ ॥

महानाभोमहादैत्योगजमारुह्यवेगतः ॥ शूलहस्तःपुनःप्रागान्नादयन्व्योममंडलम् ॥ १६ ॥ दीप्तिमानश्वमारुह्यसैंधवंचंचलासितम् ॥
तडित्प्रभेणखड्गेनबभौश्रीकृष्णनंदनः ॥ १७ ॥ तुरगंपार्ष्णिघातेनप्रोत्पतन्धरणीतलात् ॥ आरूढोगजकुंभांतंगिरिशृंगंयथाहरिः ॥१८॥
खड्गेनशितधारेणदीप्तिमान्कृष्णनंदनः ॥ महानाभस्यसहसाशिरःकायादपाहरत् ॥ १९ ॥ बाणवर्षंप्रकुर्वंतींसेनांतस्यदुरात्मनः ॥ जघा
नदीप्तिमान्सिंहोगजयूथंयथासिना ॥ २० ॥ केचित्खड्गेनाभिहताःशेषादैत्याःपलायिताः ॥ देवादीप्तिमतोमूर्ध्निपुष्पवर्षंप्रचक्रिरे ॥ २१ ॥
जगुःकिन्नरगंधर्वाननृतुश्चाप्सरोगणाः ॥ ऋषयोमुनयोदेवास्तुष्टुवुःश्रीहरेःसुतम् ॥ २२ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायांविश्वजित्खं
डेनारदबहुलाश्वसंवादेभद्राश्वखण्डगमने चन्द्रावत्युपाख्यानेमहानाभवधोनामषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ छ ॥ ॥ छ ॥
॥ नारदउवाच ॥ ॥ महानाभंमृतंश्रुत्वासेनांवीक्ष्यपलायिताम् ॥ दैत्यस्तिमिंगिलारूढोहरिश्मश्रुःसमाययौ ॥ १ ॥ हरिश्मश्रुर्महादै
त्योरुषाप्रस्फुरिताधरः ॥ उवाचपरुषंवाक्यंयादवानांचशृण्वताम् ॥ २ ॥ ॥ हरिश्मश्रुरुवाच ॥ ॥ यूयंसर्वेपिमेशत्त्यामनुष्याःस्वल्प
विक्रमाः ॥ शस्त्रैर्जयंतोदीनावैपौरुषंकिंभवादृशे ॥ ३ ॥ भवतांबलवान्कोपिविनाशस्त्रंमयासह ॥ करोतिमल्लयुद्धंवैपौरुषंयेनदृश्यते ॥
॥ ४ ॥ ॥ नारदउवाच ॥ ॥ इत्थंदैत्यवचःश्रुत्वादृष्ट्वातत्प्रोद्भटंवपुः ॥ सर्वेबभूवुस्तेतूष्णींप्रपश्यंतःपरस्परम् ॥ ५ ॥ सर्वेषांपश्यतां
भानुःसत्यभामात्मजोबली ॥ त्यक्त्वाशस्त्राणिसहसातस्थौकृष्णंस्मरन्रणे ॥ ६ ॥ तिमिंगिलात्समुत्तीर्यहरिश्मश्रुर्महाबलः ॥ तस्थौतत्सं
मुखेराजन्भुजमास्फोटयन्ततः ॥ ७ ॥ भुजाभ्यांचभुजौबद्ध्वानोदनांचक्रतुर्बलात् ॥ दंतैर्गजाविववनेप्रहरंतौपरस्परम् ॥ ८ ॥ नोदयामा
सतंभानुंसदैत्यःशतयोजनम् ॥ भुजाभ्यांराजराजेंद्रसिंहःसिंहमिवौजसा ॥ ९ ॥ ततःपुनःकृष्णसुतोहरिश्मश्रुंमहासुरम् ॥ नोदयामासस
हसासहस्रंयोजनंबलात् ॥ १० ॥ कंधरेस्वभुजांकृत्वाकटौचविनिधायतम् ॥ भानुंजानौसंगृहीत्वापातयामासदैत्यराट् ॥ ११ ॥ भानुस्तं
पृष्ठदेशेपिसन्निधायभुजौजसा ॥ गृहीत्वाजंघयोर्दैत्यंपातयामासभूतले ॥ १२ ॥ अथतौपुनरुत्थायभुजावास्फोट्यतस्थतुः ॥ त्वरंतौव
लिनौराजन्सुपर्णफणिनाविव ॥ १३ ॥ दैत्योभुजौजसानीत्वाभानुंश्रीकृष्णनंदनम् ॥ चिक्षेपधृत्वाचरणावाकाशेलक्षयोजनम् ॥ १४ ॥

आकाशात्पतितोभानुः किंचिद्व्याकुलमानसः ॥ प्रह्लादइवशैलाग्राद्रक्षितःकृपयाहरेः ॥ १५ ॥ हरिश्मश्रुंसंगृहीत्वादीर्घश्मश्रौहरेःसुतः ॥
भ्रामयित्वाथचिक्षेपव्योम्नितंलक्षयोजनम्॥१६॥ आकाशात्पतितःसोपिकिंचिद्व्याकुलमानसः॥ मुखेकृत्वास्वकंकूर्चंमुष्टिनातंतताडह ॥
॥ १७ ॥ मुष्टामुष्टिरणंराजन्बभूवघटिकाद्वयम् ॥ निष्पिष्टांगोहरिश्मश्रुर्ग्रावाणंभानुमूर्धनि ॥ १८ ॥ चिक्षेपचमहावेगाद्रक्ताक्षःक्रोधमू
र्च्छितः ॥ भानुर्द्रुमंसंगृहीत्वाप्राक्षिपत्तस्यमस्तके ॥ १९ ॥ सोपिद्रुमंसंगृहीत्वाप्राहिणोद्भानुमूर्धनि ॥ हरिश्मश्रुर्महादैत्योरक्ताक्षःक्रोधमू
र्च्छितः ॥ २० ॥ गजंगृहीत्वाशुंडायांतेनभानुंतताडह ॥ भानुश्चान्यङ्गजन्नीत्वागृहीत्वातद्गजंकरे ॥ २१ ॥ हरिश्मश्रुंमहादैत्यं गजेना
भ्यहनद्दृढम् ॥ महच्चीत्कारंकुर्वन्तंगजंनीत्वानिपात्यतम् ॥ २२ ॥ तस्यदन्तौसमुत्पाट्यताभ्यांभानुंतताडह ॥ भानुमाकाशवागाहकूर्चे
मृत्युःकिलास्यच ॥ २३ ॥ वरेणशिवदत्तेनप्रोज्झितोयंमहासुरः ॥ इतिश्रुत्वावचोभानुर्धावन्क्रोधप्रपूरितः ॥ २४ ॥ संगृहीत्वाभुजाभ्यां
तंपादयोःप्रणदन्मुहुः ॥ भ्रामयित्वामहाराजसर्वेषांपश्यतांसताम् ॥ २५ ॥ पातयामासभूपृष्ठेकमण्डलुमिवार्भकः ॥ मुखात्कूर्चंसमुन्नीयस
मुत्पाट्यकरौजसा ॥ २६ ॥ तताडमुष्टिनामूर्ध्निहरिश्मश्रुंमहासुरम् ॥ तदामृत्युंगतेदैत्येहरिश्मश्रौनृपेश्वर ॥ २७ ॥ देवदुन्दुभयोनेदुर्न
रदुन्दुभयस्तदा ॥ अभूज्जयजयारावोननृतुर्देवनायकाः ॥ २८ ॥प्रसन्नादिविजाराजन्पुष्पवर्षंप्रचक्रिरे ॥ इत्थंश्रीकृष्णपुत्राणांविक्रमः
परमाद्भुतः ॥ २९ ॥ मयातेकथितःपुण्यःकिंभूयःश्रोतुमिच्छसि ॥ ३० ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायां श्रीविश्वजित्खण्डे
नारदबहुलाश्वसंवादेभद्राश्वखण्डेचन्द्रावत्युपाख्यानेहरिश्मश्रुदैत्यवधोनामसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ बहुलाश्वउवाच ॥ ॥ हरिश्मश्र्वादिकान्भ्रातॄन्मृताञ्ज्ञात्वामहासुरः ॥ शकुनिःकिञ्चकाराग्रेवदतन्मुनिसत्तम ॥ १ ॥ नारदउवाच ॥
हरिश्मश्रौहतेराजञ्शकुनिःक्रोधमूर्च्छितः ॥ रणांगणेप्राहदैत्यान्भ्रातृशोकपरिप्लुतः ॥ २ ॥ ॥ शकुनिरुवाच ॥ ॥ हेपौलोमाःकाल
केयाःसर्वेशृणुतमद्वचः ॥ अहोदैवबलंयेनकिंनभूयाद्विपर्ययः ॥ ३ ॥ कालनाभनमभ्रात्रासमुद्रमथनेयमः ॥ जितःपूर्वंसोपिदेवान्मनुष्यैरि
हमारितः ॥ ४ ॥ शम्बरःसूर्यजित्साक्षात्कार्ष्णिनाशिशुनाजितः ॥ उत्कचःशक्रतेजापिमहाबलपराक्रमः ॥ ५ ॥ सोपिबालेनकृष्णेनमा

हमारितः ॥ ४ ॥ शम्बरःसुर्याजत्साक्षात्काष्णिनाशिशुनाजितः ॥ उत्कचःशक्रतेजापिमहाबलपराक्रमः ॥ ५ ॥ सोपिबालेनकृष्णेनमा

रितोनारदाद्भुतम् ॥ समुद्रमंथनेपूर्वमसुराणांचपश्यताम् ॥ ६ ॥ वह्निर्जितोहियेनापिहृष्टःसोपिनिपातितः ॥ यस्याग्रेवरुणः पूर्वंयुद्धभी
तःपलायितः ॥ ७ ॥ भूतसन्तापनःसोपिमारितस्तुच्छविक्रमैः ॥ येनपूर्वंमहाबुद्धेविक्रमैस्तोषितःशिवः ॥ ८ ॥ सवृकोवृष्णिभिस्तुच्छे
र्मारितःसङ्गरेत्रवै ॥ महानाभेनमेभ्रात्रादिविवायुर्विनिर्जितः ॥ ९ ॥ मानुषैर्यादवैरत्रमारितःसोपिसाम्प्रतम् ॥ हादैवयेनस्वर्लोकेजितःशक्र
सुतोबली ॥ १० ॥ निपातितःसोपिचात्रहरिश्मश्रुश्चमानवैः ॥ तस्मादयादवींपृथ्वींकरिष्येशपथोमम ॥ ११ ॥ जरासन्धेनशाल्वेनदन्त
वक्रेणधीमता ॥ शिशुपालेनमित्रेणयुष्माभिःसहितोह्यहम् ॥ १२ ॥ सुतलाच्चसमाहूतैर्दानवैश्चण्डविक्रमैः ॥ देवाञ्जेतुंगमिष्यामिबाणासु
रसमन्वितः ॥ १३ ॥ कार्ष्ण्यादीनुद्भटान्सर्वान्वृष्णीञ्जित्वादुरात्मनः ॥ सस्त्रीकानमरान्बद्ध्वाक्षिपेमेरुगुहामुखे ॥ १४ ॥ गोविप्रसुरसाधूं
श्चच्छन्दांसिचतपस्विनः ॥ यज्ञंश्राद्धंतितिक्षूंश्चनानातीर्थदयायुतान् ॥१५॥ हनिष्यामिनसन्देहःकरिष्यामिसुखंततः ॥ धन्यःकंसोमहावी
र्योदेवानांविजयीबली ॥ नविद्यतेभूमितलेमित्रंमेपरमःसुहृत् ॥ १६ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्त्वाशकुनिर्युद्धेदानवेन्द्रोमहाबलः ॥
आययौदैत्यसहितःप्रद्युम्नस्यापिसम्मुखे ॥ १७ ॥ महाधनुःसमादायलक्षभारसमंदृढम् ॥ मयेननिर्मितंतज्ज्याटंकारंसचकारह ॥१८॥ धनु
ष्टंकारशब्देनदिग्गजाबधिरीकृताः ॥ निपेतुर्गिरयोनेकाविचेलुःसिन्धवोनृप ॥१९॥ ननादसर्वंब्रह्माण्डंचकम्पेमण्डलंभुवः ॥ वीरोपरिगता
वीराज्याघोषेणातिविह्वलाः ॥ २० ॥ रणाद्विदुद्रुवुर्नागाउत्पतन्तोमहामृधे ॥ एवंपलायिताःसर्वेअकस्माद्भयविह्वलाः ॥ २१ ॥ तदाग
दादयोवीराआजग्मुःस्यन्दनेस्थिताः ॥ धनुष्टंकारयंतस्तेमहाबलपराक्रमाः ॥ २२ ॥ शकुनिर्दशभिर्बाणैर्विव्याधार्जुनमाहवे ॥ गाण्डीवी
सरथस्तस्माच्चतुष्क्रोशेपपातह ॥ २३ ॥ गदश्चबाणविंशत्याशकुनिर्युद्धदुर्मदः ॥ चिक्षेपसरथंराजन्नादयन्व्योममण्डलम् ॥ २४ ॥ चत्वा
रिंशच्छरैर्वीरोनिरुद्धंधन्विनांवरम् ॥ विव्याधसरथंराजन्नादयन्व्योममण्डलम् ॥ २५ ॥ साश्वोरथोनिरुद्धस्यषोडशक्रोशमास्थितः ॥ सा
म्बञ्चशितबाणैश्चतताडशकुनिर्मृधे ॥२६॥ साम्बोपिसरथोराजन्नम्बरेसमरांगणात् ॥ द्वात्रिंशद्योजनंमार्गंनिपपातविदेहराट् ॥ कार्ष्णिसमाग
तंदृष्ट्वाशकुनिःक्रोधपूरितः ॥२७॥ सहस्रैर्बाणपटलैःसंजघानरणांगणे ॥ प्रद्युम्नस्यरथोराजन्संभ्रमन्घटिकाद्वयम् ॥२८॥ शतक्रोशेपपातोर्व्यां

कमण्डलुरिवाहतः ॥ सर्वैर्विसिष्मुःशकुनेर्बलंदृष्ट्वाथयादवाः ॥ २९ ॥ जघ्नुर्नानाविधैःशस्त्रैर्दैत्यमद्रिंयथागजाः ॥ गदोऽर्जुनोनिरुद्धस्तुसांबो
जांबवतीसुतः ॥ ३० ॥ धनुष्टंकारयंतस्तेपुनर्युद्धंसमागताः ॥ अथकार्ष्णिर्महाबाहुर्वायुवेगंरथंस्थितः ॥ ३१ ॥ धनुष्टंकारयन्राजन्
प्राप्तोभूद्रणमण्डलम् ॥ प्रलयार्णवसंघट्टभीमसंघर्षनादिनीम् ॥ ३२ ॥ धनुर्ज्यांशकुनेःकार्ष्णिश्चिच्छेददशभिःशरैः ॥ सहस्रैश्चसहस्राश्वान्र
थंचविशिखैःशतैः ॥ ३३ ॥ सारथिंबाणविंशत्यापातयामासभूतले ॥ ततोरथंसमुत्थाप्यहयैरन्यैर्नियोजितम् ॥ ३४ ॥ अन्यंसूतंरथेकृत्वा
रथमारुह्यदैत्यराट् ॥ संदधेसिंजिनींराजन्कोदण्डेचण्डविक्रमे ॥३५॥ शतंबाणान्त्समाकृष्यनिषंगात्पृष्ठतोगतात्॥चापेनिधायकर्णांतमाकृ
ष्यप्राहमन्मथम् ॥ ३६ ॥ ॥ शकुनिरुवाच ॥ ॥ एतैस्त्वांघातयिष्यामिशत्रुमुख्यंमदोत्कटम् ॥ पश्चात्सेनांहनिष्यामियदूनांस्वल्पते
जसाम् ॥ ३७ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ सदावयःकालबलेनदेहिनांप्रयातिछायेवरवेर्मुहुर्मुहुः ॥ तथाचदुःखंचसुखंगतागतंघनाव
लिर्वायुबलेनखेयथा ॥ ३८ ॥ कृतांकृषिंसिञ्चतियांहिसर्वतश्छिनत्तिदात्रेणयथाकृषीवलः ॥ तथाहिकालःस्वकृतांजनावलिंसृजत्ययंपा
तिगुणैर्विलुंपति ॥ ३९ ॥ इदंकरिष्यामिकरोम्यभूवंममेदमस्तीतितदेवमाब्रुवन् ॥ अहंसुखीदुःखयुतःसुहृज्जनोलोकस्त्वहंकारविमोहितोऽ
सुर ॥ ४० ॥ ॥ शकुनिरुवाच ॥ ॥ धन्यस्त्वंराजशार्दूलमुनीन्वाग्भिर्विडंबयन् ॥ स्वभावोदुस्त्यजोनृणांपृथग्भूतस्त्रिभिर्गुणैः ॥
॥ ४१ ॥ ॥ नारदउवाच ॥ ॥ ॥ एवंब्रुवाणावन्योन्यंप्रद्युम्नशकुनीमृधे ॥ युयुधातेमैथिलेन्द्रशक्रवृत्राविवस्थितौ ॥ ४२ ॥ इतितद्धनुषो
मुक्तान्त्रिशिखान्सूर्यरश्मिवत् ॥ चिच्छेदकार्ष्णिर्बाणेनकुवाक्येनेवमित्रताम् ॥ ४३ ॥ लक्षभारमयींगुर्वींगृहीत्वामहतींगदाम् ॥ जघानमू
र्ध्निप्रद्युम्नंशकुनिर्युद्धदुर्मदः ॥ ४४ ॥ प्रद्युम्नोभगवान्साक्षाद्गदयावज्रकल्पया ॥ काचपात्रंयथादण्डस्तद्गदांशतधाकरोत् ॥ ४५ ॥ अथदैत्यो
रुषाविष्टस्त्रिशूलंचस्फुरद्रुचा ॥ प्रद्युम्नस्याहनन्मूर्ध्निशब्दमुच्चैःसमुच्चरन् ॥ ४६ ॥ त्रिशूलेनहरेःपुत्रस्त्रिशूलंशतधाच्छिनत् ॥ कुंतंतीक्ष्णंश
कुनयेप्राहिणोद्रुक्मिणीसुतः ॥ ४७ ॥ कुंतेनविद्धहृदयःकिंचिद्व्याकुलमानसः ॥ पारिघेणहरेःपुत्रंसंततताडरणाङ्गणे ॥ ४८ ॥ यमदण्डंततो
नीत्वारुक्मिणीनन्दनोबली ॥ चूर्णीचकारदैत्यस्यपरिघंपरमाद्भुतम् ॥ ४९ ॥ चञ्चलाश्वांश्चसहसायमदण्डेनवेगतः॥ सारथिंस्यंदनंदिव्यंपात

...नन्दनोबली ॥ चूर्णीचकारदैत्यस्यपरिघंपरमाद्भुतम् ॥ ४९ ॥ चञ्चलाश्वांश्चसहसायमदण्डेनवेगतः॥ सारथिंस्यंदनंदिव्यंपात

यामासभूतले ॥ ५० ॥ सूतेमृत्युंगतेसाश्वेचूर्णीभूतेरथेनृप ॥ परिघेचमहादैत्यःखड्गंजग्राहरोषतः ॥ ५१ ॥ प्रद्युम्नोपिमहावीरोयमदंडेनमै
थिल ॥ द्विधाचकारतत्खड्गंपन्नगंगरुडोयथा ॥ ५२ ॥ यमदंडेनतंदैत्यंस्कंधेकार्ष्णिस्तताडह ॥ तस्याघातेनशकुनिःसद्योमूर्च्छामवापह॥
॥ ५३ ॥ दैत्यसेनांविवेशाशुश्रीकार्ष्णिःक्रोधमूर्च्छितः ॥ निपातयन्महावीरान्वनंवैश्वानरोयथा ॥ ५४ ॥ गजांस्तुरंगांश्चरथान्दैत्यांस्तानात
तायिनः ॥ पातयामासयमवद्यमदंडेनमाधवः ॥ ५५ ॥ छिन्नपादाश्छिन्नमुखाश्छिन्नाङ्गाश्छिन्नबाहवः ॥ दैतेयादनुजायुद्धेमूर्च्छितानिध
नङ्गताः ॥ ५६ ॥ यमरूपधरंदृष्ट्वाप्रद्युम्नंभीमविक्रमम् ॥ त्यक्त्वास्वंस्वंरणंकेचिद्दुद्रुवुस्तेदिशोदश ॥ ५७ ॥ ॥ इति श्रीमद्गर्गा
चार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेभद्राश्वखण्डगमनेचन्द्रावत्युपाख्यानेशकुनियुद्धवर्णनंनामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥
॥ नारदउवाच ॥ ॥ शकुनिःपुनरुत्थायस्वबलंवीक्ष्यपोथितम् ॥ जग्राहसमहाराजलक्षभारसमंधनुः ॥ १ ॥ निधायबाणंनिशितंकोदं
डेचंडविक्रमे ॥ कार्ष्णिंप्राहरणेराजन्शकुनिर्दैत्यराड्बली ॥ २ ॥ ॥ शकुनिरुवाच ॥ ॥ कर्मप्रधानंजगतीतलेमहत्कर्मैवसाक्षाद्गुरु
रीश्वरःप्रभुः ॥ उच्चावचत्वंभवतीहकर्मणातेनैवराजन्विजयःपराजयः ॥ ३ ॥ गवांसहस्रेषुयथाहिवत्सकःस्वमातरंविन्दतिपश्यतांसताम् ॥
तथाहियेनापिकृतंशुभाशुभंनरेषुतिष्ठत्सुतमेवगच्छति ॥ ४ ॥ ततोविजेष्यामिदृढेनकर्मणारिपुंभवंतंशपथःकृतोमया ॥ सद्यःकुरुत्वंप्रति
कारमेवतद्येनापिनस्याद्भुवितेपराजयः ॥ ५ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ कर्मप्रधानंयदिमन्यसेभवान्कालंविनातर्हिफलंचविद्यते ॥ कृते
चपाकेयदिविघ्नताक्वचित्सदाबलिष्ठंसमयंविदुःपरे ॥ ६ ॥ पाकप्रकारेसतिपाकसाधनंकदापिकर्तारमृतेनजन्यते ॥ वदंतिकर्तारमतः
परंपरेनकर्मकालंशृणुदैत्यपुंगव ॥ ७ ॥ योगंविदुःकेपियथाह्ययोगतःकथंभवेत्कौकिलपाकसाधनम् ॥ सर्वंहिवायोगमृतेवृथाभवेत्काले
तथाकर्तरिकर्मणिस्थिते ॥ ८ ॥ योगेतथाकर्मणिकर्तरिस्थितेकालेविधिःसांख्यमृतेवृथाभवेत् ॥ पाकप्रकाराद्यविचारकृद्यदानत
र्हिपाकस्ययथाप्रसाधनम् ॥ ९ ॥ योगकर्मबिधिकारकसांख्यैर्ब्रह्मपूरुषमृतेनहिकिंचित् ॥ तन्नमामिपरिपूर्णतमांशंयेनविश्वमखिलंविदि
तंखे ॥ १० ॥ ॥ शकनिरुवाच ॥ हेप्रद्युम्नमहाबाहोत्वंसाक्षाज्ज्ञानशेवधिः ॥ तवदर्शनमात्रेणनरोयातिकृतार्थताम् ॥ ११ ॥ येत्वत्संगं

समासाद्यवार्तांकुर्वन्तिनित्यशः ॥ तेषांतुमहिमानंहिवक्तुंनालंचतुर्मुखः ॥ १२ ॥ ॥ नारदउवाच ॥ ॥ इत्युक्त्वाशकुनिर्दैत्योमायावीदै
त्यराड्बली ॥ शिक्षितंमयदैत्येनरौरवास्त्रंसमादधे ॥ १३ ॥ महोरगादंदशूकावृश्चिकाश्चविषोत्कटाः ॥ कोटिशोनिर्गताराजन्करालारौद्र
रूपिणः ॥ १४ ॥ तैर्दंशितंबलंसर्वंफूत्कारैर्मत्ततांगतम् ॥ वीक्ष्यकार्ष्णिर्महाबुद्धिर्गरुडास्त्रंसमादधे ॥ १५ ॥ कोटिशोगरुडाबाणान्नील
कंठाःकलापिनः ॥ अन्येचपक्षिणोभीमानिर्गतास्तस्यपश्यतः ॥ १६ ॥ अग्रसन्नुरगान्युद्धेदंदशूकान्सवृश्चिकान् ॥ दीर्घतुंडाबृहत्पक्षाःक्षणा
त्तेऽदृश्यतांगताः ॥ १७ ॥ दैत्योपिराक्षसींमायांगांधर्वींगौह्यकींपुनः ॥ पैशाचींसंदधेराजञ्शकुनिर्युद्धदुर्मदः ॥ १८ ॥ तद्बाणनिर्गताभू
तास्तथाप्रेताश्चकोटिशः ॥ अंगारान्मुमुचुस्तेवैकरालाःकृष्णरूपिणः ॥ १९ ॥ ज्ञात्वाथतामसींमायांपैशाचींमीनकेतनः ॥ सत्त्वास्त्रंसंद
धेबाणेयुद्धाकांक्षीहरेःसुतः ॥ २० ॥ तस्माद्विनिर्गताराजन्कोटिशोविष्णुपार्षदाः ॥ जघ्नुःपिशाचींतांमायांपन्नगींगरुडोयथा ॥ २१ ॥
मायांदैत्योपिमायावीगौह्यकींसंदधेपुनः ॥ संभूताःकोटिशोमेघागर्जंतोभीमरूपिणः ॥ २२ ॥ विण्मूत्रपूयरुधिरमेदोमज्जास्थिवर्षिणः ॥
ज्ञात्वाथगौह्यकींमायांप्रद्युम्नोभगवान्हरिः ॥ २३ ॥ तन्नाशार्थंमहाराजक्रोडास्त्रंसंदधेत्विषौ ॥ तद्बाणाद्यज्ञवाराहोनिर्गतोघर्घरस्वनः ॥
॥ २४ ॥ सटाविधूयवेगेनदंष्ट्रयातीक्ष्णयाघनान् ॥ विदारयन्रणेरेजेवेणून्मत्तगजोयथा ॥ २५ ॥ छित्त्वाथगौह्यकींमायां तत्रैवांतरधी
यत ॥ ततःक्रुद्धोमहादैत्यःशकुनिर्युद्धदुर्मदः ॥ २६ ॥ गांधर्वींमोहिनींमायांचकाररणमण्डले ॥ युद्धंनदृश्यतेतत्रहेमसौधानिकोटिशः ॥
॥ २७ ॥ वस्त्रालंकारयुक्तानिबभूवुःपश्यतांसताम् ॥ विद्याधर्यश्चगन्धर्व्योगायंत्योनृत्यतत्पराः ॥ २८ ॥ मृदंगतालवादित्रैर्मोहनैरागमि
श्रितैः ॥ हावभावकटाक्षैश्चतोषयंत्योजनान्नृप ॥ २९ ॥ मोहिन्यःसुन्दरीरामाःश्यामाःकमललोचनाः ॥ तासांलावण्यरागाभ्यांमोहंयाते
षुवृष्णिषु ॥ ३० ॥ गांधर्वींमोहिनींमायांज्ञात्वाकार्ष्णिर्महाबलः ॥ संदधेतत्प्रहारार्थेज्ञानास्त्रंरणमण्डले ॥ ३१ ॥ ज्ञानोदयेतदाजातेमोह
नाशोनृपेश्वर ॥ नाशंगतायांमायायांशकुनिःक्रोधमूर्च्छितः ॥ ३२ ॥ राक्षसींसंदधेमायांमायावीदैत्यपुङ्गवः ॥ सपक्षैःपर्वतैराजन्क्षणात्त
च्छादितंनभः ॥ ३३ ॥ महांधकारोऽभूत्पृथ्व्यांपरार्द्धेचघनैरिव ॥ दग्धवृक्षशिलास्थीनिकबंधरुधिराणिच ॥ ३४ ॥ गदापरिघनिस्त्रिंश

मुसलादीनिसर्वतः ॥ अंबराद्ववृषुःशैलामेघाइवविदेहराट् ॥ ३५ ॥ रक्षोगणाःशूलहस्ताश्छिंधिभिंधीतिवादिनः ॥ यातुधानाश्चशतशो
भक्षयंतोद्विपान्हयान् ॥ ३६ ॥ सिंहव्याघ्रवराहाश्चदृश्यंतेरणमण्डले ॥ मर्दयंतोनखैर्नागांश्चर्वयंतोवपूंषिवै ॥ ३७ ॥ पलायमानंस्वबलंदृ
ष्ट्वाकार्ष्णिर्महाबलः ॥ जेतुंतांराक्षसींमायांनृसिंहास्त्रंसमादधे ॥ ३८ ॥ आविर्भूतोहरिःसाक्षान्नृसिंहोरौद्ररूपधृक् ॥ स्फुरत्सटोललज्जिह्वो
नखलांगूलभूषितः ॥ ३९ ॥ चलद्वालोभीषणास्योहुंकारेणातिभीषणः ॥ सिंहनादंचकुर्वन्वैसंस्थितोरणमंडले ॥ ४० ॥ ननादतेनब्रह्मां
डंसतलोकैर्बिलैःसह ॥ विचेलुर्दिग्गजास्ताराराजद्भूखंडमंडलम् ॥ ४१ ॥ गृहीत्वाह्यंबरेशैलान्सवृक्षान्नखरैःखरैः ॥ पातयामासभूपृष्ठेदै
त्यानांचप्रपश्यताम् ॥ ४२ ॥ रक्षोगणान्संगृहीत्वापाटयामासवेगतः ॥ यातुधानगणान्पद्भ्यांसममर्दहरिर्मृधे ॥४३॥ सिंहान्व्याघ्रान्वराहा
श्चसंविदार्यनखैःखरैः ॥ चिक्षेपगगनेविष्णुस्तत्रैवांतर्दधेपुनः ॥ ४४ ॥ नाशंगतायांमायायांराक्षस्यांरुक्मिणीसुतः ॥ शंखंदध्मौवि
जयदंमैथिलेंद्ररणांगणे ॥ ४५ ॥ अभूज्जयजयारावोदुंदुभिध्वनिमिश्रितः ॥ प्रद्युम्नस्योपरिसुराःपुष्पवर्षंप्रचक्रिरे ॥ ४६ ॥ स्वमायायांनिर्ग
तायांशकुनिर्दैत्यपुंगवः ॥ सरथःसैनिकैःसार्द्धंतत्रैवांतर्हितोभवत् ॥ ४७ ॥ मायांचकारदैतेयींमयदैत्यप्रदर्शिताम् ॥ हस्तिशुंडासमांधा
रांवर्षंतोतितडित्स्वनाः ॥ ४८ ॥ सांवर्त्तकगणामेघाआजग्मुःपश्यतांसताम् ॥ क्षणात्सर्वेसमुद्रास्तेचंडवातेनवेपिताः ॥ ४९ ॥
क्षुभिताऊर्मिसंघर्षावर्तैःप्लावितभूरुजाः ॥ भूमंडलंसंजनितंप्लावितंचात्मभिःसमम् ॥ ५० ॥ दृष्ट्वाथयादवाःसर्वेप्रापुस्तत्रभयंबहु ॥
वदंतोरामकृष्णेतिविस्मृतस्वपराक्रमाः ॥ ५१ ॥ क्षणमात्रेणराजेंद्रतूष्णींभूताःपराजिताः ॥ तदाकार्ष्णिर्महाबाहुःकोदंडेचंडविक्रमे ॥
बाणंनिधायसहसाश्रीकृष्णास्त्रंसमादधे ॥ ५२ ॥ नवार्ककोटिद्युतिमन्महन्महोवीरंजयन्मैथिलयद्दिशोदश ॥ समागतंतत्रकुशस्थली
दिशःस्वयंपरंस्वार्थमिवात्मवाञ्छितम् ॥ ५३ ॥ तस्मिन्परेतेजसिनूतनांबुदच्छविंसुवर्णांबुजरेणुवाससम् ॥ भृंगावलीकूजितकुंतलाव
लिंस्रजंदधानंनववैजयंतीम् ॥ ५४ ॥ श्रीवत्सरत्नोत्तमचारुवक्षसंचतुर्भुजंपद्मविशालवीक्षणम् ॥ स्फुरत्किरीटंवरहारनूपुरंलसन्नवार्क
द्युतिहेमकुंडलम् ॥ ५५ ॥ विलोक्यदेवंयदवोतिहर्षिताःपरंप्रणेमुःकृतहस्तसंपुटाः ॥ प्रचक्रिरेमैथिलपुष्पवर्षिणोमराजयारावमतीवस

र्वतः ॥ ५६ ॥ दैत्यस्यशकुनेःसज्यंकोदंडंप्राच्छिनद्रुषा ॥ शार्ङ्गमुक्तेनतच्छार्ङ्गीबाणेनैकेनलीलया ॥ ५७ ॥ सच्छिन्नधन्वाशकुनि
स्त्यक्त्वायुद्धंप्रधर्षितः ॥ हेतिसंहेतिमानेतुंययौचन्द्रावतींपुरीम् ॥ ५८ ॥ ॥ इतिश्रीमद्ग० वि० ना० भद्राश्व० चन्द्रावतीयुद्धेश्रीकृष्णागमनंना
मैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ नारदउवाच ॥ दैत्येगतेथशकुनौभगवान्कमलेक्षणः ॥ कार्ष्ण्यादियादवान्सर्वानाहूयेत्थमुवाचह ॥ १ ॥
श्रीभगवानुवाच ॥ ॥ दैत्योयंशकुनिःपूर्वंसुमेरोःपार्श्वउत्तरे ॥ चतुर्युगंवर्जितान्नस्तपसातोषयच्छिवम् ॥२॥ चतुर्युगेव्यतीतेतुसाक्षाद्देवोमहे
श्वरः ॥ प्रसन्नोदर्शनंदत्त्वावरंब्रूहीत्युवाचह ॥ ३ ॥ नत्वातंशकुनिर्दैत्यःकृतांजलिपुटःशनैः ॥ हृष्टरोमाश्रुपूर्णाक्षःप्राहगद्गदयागिरा
॥ ४ ॥ मृतःसन्भूमिसंस्पर्शाद्भूयासंजीवितःप्रभो ॥ आकाशेमेमृतिर्देवमाभूयाद्घटिकाद्वयम् ॥ ५ ॥ दैत्येनोक्तोहरःसाक्षाद्दत्त्वा
तस्मैवरद्वयम् ॥ पंजरस्थंशुकंदत्त्वाप्राहदैत्यंनताननम् ॥ ६ ॥ जीवकल्पंशुकंचैनंरक्षदैत्यसदानघ ॥ अस्मिन्मृतेचज्ञातव्यंनिधनं
स्वंत्वयासुर ॥ ७ ॥ इतिदत्त्वावरंतस्मैरुद्रश्चांतरधीयत ॥ तस्माद्स्यवधोदुर्गोभविष्यतिशुकेमृते ॥ ८ ॥ ॥ नारदउवाच ॥ ॥
इत्युक्त्वावीरसदसिभगवान्देवकीसुतः ॥ सुपर्णंशीघ्रमाहूयप्राहप्रहसिताननः ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ शृणुतार्क्ष्यम
हाबुद्धेगच्छचंद्रावतींपुरीम् ॥ कपटेनशुकंहत्वात्वरमागम्यतांत्वया ॥ १० ॥ ॥ नारदउवाच ॥ ॥ अथतार्क्ष्योमहाबुद्धिर्गत
श्चंद्रावतींपुरीम् ॥ शतयोजनविस्तीर्णांदैत्यसेनासमाकुलाम् ॥ ११ ॥ प्रासादैर्गगनस्पर्शैर्हेमरत्नमनोहरैः ॥ विचित्रोपवनैराजञ्छोभि
तांदैत्यपुंगवैः ॥ १२ ॥ दुर्गेदुर्गेद्वारदेशेरक्षितांदैत्यपुङ्गवैः ॥ तांदृष्ट्वागरुडोराजन्सूक्ष्मरूपंदधारह ॥ १३ ॥ अलक्षितोदैत्यवृन्दैःप
श्यन्प्रासादतोलिकाः ॥ उत्प्लुत्यतनुसूक्ष्मेणशकुनेर्मंदिरंगतः ॥ १४ ॥ प्रेक्ष्यञ्शुकंदैत्यजीवंक्षणंतत्रस्थितोभवत् ॥ युद्धार्थंदंशितं
तत्रशकुनिंदैत्यपुंगवम् ॥ १५ ॥ नानाशस्त्रधरंवीरंक्रोधपूरितमानसम् ॥ गृहीत्वातंपरिकरेप्राहराजन्मदालसा ॥ १६ ॥ ॥ मदा
लसोवाच ॥ ॥ राजन्सर्वेपिसुहृदोनुकूलाभ्रातरस्तव ॥ मारिताःसंगरेभर्त्राप्रोक्ताद्दैत्यपुंगवाः ॥ १७ ॥ त्वयाहियोद्धुंयदुभिरागतो ॥१७
भगवान्हरिः ॥ देहितस्मैबलिंसद्योयेनश्रेयोह्यवाप्स्यसि ॥ १८ ॥ ॥ शकुनिरुवाच ॥ ॥ हनिष्यामियदून्सैन्यैर्मेहताभ्रातरोबला

त ॥ मृत्युर्मेनास्तिभूमध्येशिवस्यापिवरेणमे ॥ १९ ॥ उपद्वीपेचंद्रनाम्निपतंगपर्वतेशुभे ॥ मेजीवरूपीतुशुकोवर्ततेसांप्रतंप्रिये ॥
॥ २० ॥ शंखचूडेनसर्पेणरक्षितोहर्निशंशुकः ॥ एतत्कोपिनजानातिकथंमृत्युश्चमेभवेत् ॥ २१ ॥ ॥ नारदउवाच ॥ ॥ शुकवा
र्तांततःश्रुत्वागरुडोविष्णुवाहनः ॥ उपद्वीपंतुचंद्राख्यंगंतुंतस्मान्मनोदधे ॥ २२ ॥ उत्पतन्गरुडोवेगात्समुद्रस्यतटेगतः ॥ विचिन्वन्द्वी
पचंद्राख्यमाकाशेविचरन्खगः ॥ २३ ॥ शतयोजनविस्तीर्णेसमुद्रेभीमनादिनि ॥ पक्षिराट्सिंहलंप्रापलतावृन्दमनोहरम् ॥ २४ ॥ तत्र
पप्रच्छगरुडःकिंनामास्यजनान्प्रति ॥ सिंहलोकमितिश्रुत्वागरुडःप्रोत्पतन्खगः ॥२५॥ लंकांप्राप्तोमहावेगात्त्रिकूटशिखरेनृप ॥ लंकांज्ञा
त्वाततोवेगात्पांचजन्यंजगामह ॥ २६ ॥ पांचजन्याब्धिनिकटेक्षुधितः पक्षिराड्बली ॥ प्रसह्यमीनाञ्ग्राहतीक्ष्णयातुंडयाभृशम् ॥२७॥
तत्रचैकोमहान्नक्रोलंबितोयोजनद्वयम् ॥ पादेगृहीत्वागरुडंविचकर्षजलांतरे ॥ २८ ॥ बलेनगरुडस्तस्यचकाराकर्षणंतटे ॥ तयोराक
र्षणंराजन्मिथोभूद्घटिकाद्वयम् ॥ २९ ॥ प्रचण्डवेगोगरुडस्तीक्ष्णयातुण्डयाचतम् ॥ तताडपृष्ठेधृष्टांगंदंडेनयमराड्यथा ॥ ३० ॥ नक्र
रूपंविहायाशुसोभूद्विद्याधरोमहान् ॥ नत्वाश्रीगरुडंसाक्षात्प्राहप्रहसिताननः ॥ ३१ ॥ ॥ विद्याधरउवाच ॥ ॥ अहंविद्याधरःपूर्वंनाम्नावै
हेमकुंडलः ॥ आकाशगंगायांस्नातुंगतोदिविजमंडले ॥ ३२ ॥ तत्रस्नानंप्रकुर्वंतंककुत्स्थंमुनिसत्तमम् ॥ पादेगृहीत्वाहास्येनजलांतर्ग
तवानहम् ॥ ३३ ॥ मांशशापककुत्स्थोपित्वंनक्रोभवदुर्मते ॥ मयाप्रसादितःशीघ्रंप्रसन्नःसत्वरंददौ ॥ ३४ ॥ तार्क्ष्यतुंडप्रहारेणनक्रत्वा
त्त्वंविमुच्यसे ॥ तस्यशापादद्यमुक्तःकृपयातवसुव्रत ॥ ३५ ॥ ॥ नारदउवाच ॥ ॥ इत्युक्त्वाथगतेस्वर्गेविद्याध्रेहेमकुंडले ॥ उड्डितो
गरुडस्तस्मात्पक्षाभ्यांव्योममण्डले ॥ ३६ ॥ हरिणाख्यंचोपद्वीपंप्राप्तवान्वेगतःखगः ॥ अपांतरतमस्तत्रकरोतिविपुलंतपः ॥ ३७ ॥
तस्याश्रमेखगेशस्यपक्षचंद्रंपपातह ॥ तंदृष्ट्वाप्राहगरुडमपांतरतमोमुनिः ॥ ३८ ॥ पक्षंनिधायमेमूर्ध्निंगच्छपक्षिन्यथासुखम् ॥ पक्षंनी
त्वागतस्ताक्ष्योंधृत्वातन्मस्तकेचतम् ॥ ३९ ॥ तत्समानान्पक्षचन्द्राननेकान्सददर्शह ॥ प्राहातिविस्मितंताक्ष्यंमपांतरतमोमुनिः ॥
॥ ४० ॥ ॥ अपांतरतमउवाच ॥ ॥ यदायदाहिश्रीकृष्णावतारोभूत्तदातदा ॥ पक्षोपिगरुडस्यात्रपतत्येकःसदाखग ॥ ४१ ॥ कल्पे

कल्पेकृष्णचंद्रावतारःपक्षःपक्षोमूर्ध्निमेसोपिसोपि ॥ आनंत्याद्वाद्यंतवंतंवदंतिपक्षिन्मूर्ध्नानौमिकृष्णायतस्मै ॥ ४२ ॥ ॥ नारदउवाच ॥
तच्छुत्वाविस्मितस्तार्क्ष्योनत्वातंमुनिपुंगवम् ॥ द्वीपंरमणकंप्रागादुत्पतन्व्योममंडलात् ॥ ४३ ॥ सर्वेभ्योपिबलिंनीत्वाद्वीपमावर्तकंग
तः॥ तत्रदिव्येसुधाकुंडेसुधांपीत्वाविराड्बली ॥ ४४ ॥ शुक्रद्वीपंतुसंप्राप्तःपप्रच्छद्वीपचंद्रभाक् ॥ मयाप्रणोदितःपक्षीप्रययावुत्तरांदि
शम् ॥ ४५ ॥ चन्द्रद्वीपंतुसंप्राप्तःपतंगंपतगेश्वरः ॥ जलदुर्गंवह्निदुर्गंवैनतेयोददर्शह ॥ ४६ ॥ जलदुर्गंचंचुपुटेसर्वंपीत्वाविराड्बली ॥
वह्निदुर्गंचतेनापिसांत्वयामासमैथिल ॥ ४७ ॥ दरीमुखेशयानायेदैत्यालक्षंसमुत्थिताः ॥ तैःसार्धंसमभूद्युद्धंतार्क्ष्यस्यघटिकाद्वयम् ॥४८॥
कांश्चित्पादनखैर्युद्धेविददारखगेश्वरः ॥ कांश्चिद्दैत्यान्स्वपक्षाभ्यांपातयामासभूले ॥ ४९ ॥ कांश्चिच्चंचुपुटेनापिगृहीत्वापक्षिराड्बली ॥
पातयित्वागिरेःपृष्ठेचिक्षेपगगनेबलात् ॥ ५० ॥ केचिन्मृतास्तथाशेषादुद्द्रुवुस्तेदिशोदश ॥ इत्थंदैत्यवधंकृत्वादरीमध्येगतःखगः ॥५१॥ च
कारपादविक्षेपंशंखचूडोपरिस्फुरन् ॥ शंखचूडोपिगरुडंदृष्ट्वासोतिप्रधर्षितः ॥ ५२ ॥ शुकंजलेपंजरस्थंशीघ्रंत्यक्त्वापलायितः ॥ चंचुदेशे
नतंनीत्वाशुकंसद्यःसपंजरम् ॥ ५३ ॥ प्रोत्पतन्नंबरेराजन्युद्धेगन्तुंमनोदधे ॥ पलायितानांदैत्यानांतावत्कोलाहलोमहान् ॥ ५४ ॥
शुकोनीतःशुकोनीतोवदतामंबरेनृप ॥ तच्छब्दोदिक्षुसैन्यानांगतःशब्दस्तुशृण्वताम् ॥ ५५ ॥ दिविभूमौसर्वतोपिब्रह्मांडेपिप्रपूरितः ॥
शुकोनीतइतिश्रुत्वाशकुनिःशंकितोसुरः ॥ ५६ ॥ शूलंधृत्वाततःसद्यश्चंद्रावत्यांसमुत्थितः ॥ गरुडेनशुकोनीतःश्रुत्वाक्रुद्धःसमन्वया
त् ॥ ५७ ॥ तच्छूलताडितस्तार्क्ष्योनजहौमुखतःशुकम् ॥ सप्तद्वीपान्सप्तसिंधून्निरीक्षन्सगतःखगः ॥ ५८ ॥ तमन्वधावद्दैत्येंद्रोदिक्षु
दिक्षुदिशान्तरे ॥ भ्रमन्नागान्तकोराजन्नाकाशेकोटियोजनम् ॥ ५९ ॥ दैत्यत्रिशूलक्षतभृन्नजहौमुखतःशुकम् ॥ सपञ्जरःशुकोराजन्ना
काशाल्लक्षयोजनम् ॥ ६० ॥ पपातोपलवद्वेगात्सुमेरोर्गिरिमूर्द्धनि ॥ पंजरोंगारवत्तत्रशीर्णोभूद्व्यसुःशुकः ॥ ६१ ॥ गरुडोथम
हायुद्धेकृष्णपार्श्वंसमागतः ॥ दैत्यःखिन्नमनाराजन्पुरींचन्द्रावतींययौ ॥ ६२ ॥ ॥ इतिश्रीगर्गाचार्यसंहितायांविश्वजित्खण्डे
नारदबहुलाश्वसंवादे भद्राश्वगमने चन्द्रावतीयुद्धोपाख्यानेगरुडागमोनामचत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ ॥ ६३ ॥

... चन्द्रावतीयुद्धोपाख्यानेगरुडागमनोनामचत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ ॥ ६३ ॥

॥ श्रीनारदउवाच ॥ ॥ दैत्यान्छेषान्समानीयनानायुद्धधरोबली ॥ उच्चैःश्रवसमारुह्यहयंदिव्यंमनोहरम् ॥ १ ॥ धनुष्टंकारयन्वीरः
शकुनिःक्रोधमूर्च्छितः ॥ आययौसंमुखेयोद्धुंश्रीकृष्णस्यापिसंमुखे ॥ २ ॥ पुनःप्राप्तंदैत्यसैन्यैःशकुनिंयुद्धदुर्मदम् ॥ तंवीक्ष्यवृष्णयःस
वेंजगृहुःस्वायुधानिच ॥ ३ ॥ दैत्यानांयदुभिःसार्द्धंघोरंयुद्धंबभूवह ॥ वीरैःसंयुयुधुर्वीराःसिंहाःसिंहैरिवाहवे ॥ ४ ॥ सर्वेषामग्रतःप्राप्तः
कोदण्डंनादयन्मुहुः ॥ शकुनिर्मेघवद्राजंश्चक्रेनाराचदुर्दिनम् ॥ ५ ॥ बाणान्धकारेसंजातेभगवान्गरुडध्वजः ॥ शार्ङ्गीशार्ङ्गेणधनु
षायथैन्द्रेणघनोबभौ ॥ ६ ॥ श्रीकृष्णोभगवान्साक्षाच्छकुनेरसुरस्यच ॥ चिच्छेदबाणपटलंबाणेनैकेनलीलया ॥ ७ ॥ आकृष्यकर्ण
पर्यंतंकोदंडंशकुनिर्मृधे॥तताडदशभिर्बाणैःश्रीकृष्णंहृदिमैथिल ॥८॥ प्रलयाब्धिमहावर्तभीमसंघर्षनादिनीम्॥धनुर्ज्यांशकुनेःशौरिश्चिच्छे
ददशभिःशरैः ॥ ९ ॥ मायावीशकुनिर्दैत्यःशतरूपीबभूवह ॥ युयोधहरिणायुद्धेसर्वेषांपश्यतांनृप ॥ १० ॥ सहस्राणिस्वरूपाणिधृत्वा
साक्षाद्धरिःस्वयम् ॥ युयुधेतेनदैत्येनतदद्भुतमिवाभवत् ॥ ११ ॥ मयदैत्येनरचितंत्रिशूलंज्वलनप्रभम् ॥ भ्रामयित्वाथहरयेप्राहिणोद्दैत्य
राड्बली ॥ १२ ॥ ततःक्रुद्धोमहाबाहुःपरिपूर्णतमोहरिः ॥ चिच्छेदतत्तीक्ष्णतुण्डःपन्नगंगरुडोयथा ॥ १३ ॥ ततःक्रुद्धोमहाबाहुर्गदांचि
क्षेपमूर्द्धनि ॥ हयात्तम्पातयामसगदयावज्रकल्पया ॥ १४ ॥ गदाप्रहारव्यथितःक्षणंमूर्च्छाङ्कतोसुरः ॥ गृहीत्वास्वाङ्गदांयुद्धेयुयुधेमाध
वेनवै ॥ १५ ॥ तयोर्युद्धमभूद्धोरंगदाभ्यांरणमण्डले ॥ अभूच्चटचटारावोवज्रनिष्पेषवत्किल ॥ १६ ॥ श्रीकृष्णगदयातस्यचूर्णीभूताग
दाभुवि ॥ विरेजेंगारवत्तत्रसर्वेषांपश्यतांमृधे ॥ १७ ॥ त्यक्त्वाशस्त्राणिसर्वाणिबाहुभ्यांयुयुधेमृधे ॥ गिरिदर्यांयथासिंहौवनेमत्तौगजावु
भौ ॥ १८ ॥ रणमध्येतथातौद्वौयुयुधातेपरस्परम् ॥ श्रीकृष्णंनोदयामासशकुनिःशतयोजनम् ॥ १९ ॥ हरिस्तंप्रेषयामाससहस्रंयोजनं
भुवि ॥ गृहीत्वाभुजयोस्तंवैभुजाभ्यांभुवनेश्वरः ॥ २० ॥ पातयामासभूपृष्ठेकमण्डलुमिवार्भकः ॥ किञ्चिद्व्यथांगतोदैत्योगृहीत्वाजारुधिं
गिरिम् ॥ २१ ॥ प्राहिणोच्चदुराचारःशकुनिर्युद्धदुर्मदः ॥ समागतंगिरिंवीक्ष्यभगवान्कमलेक्षणः ॥ २२ ॥ हंसर्षभंगिरिंनीत्वाप्राहिणोद्भु
वनेश्वरः ॥ जयशब्दंप्रकुर्वंतावन्योन्यंताडयन्गिरिम् ॥ २३ ॥ चूर्णयामासतूराजंस्तथाचंद्रावतींपुरीम् ॥ तदादैत्योतिसंक्रुद्धोगृहीत्वाखड्गच

मणी ॥ २४ ॥ आययौसंमुखेराजञ्च्छ्रीकृष्णस्यमहात्मनः ॥ शार्ङ्गीशार्ङ्गंसंगृहीत्वाथार्द्धचंद्रमुखंशरम् ॥ २५ ॥ संदधेसहसायुद्धेग्रीष्ममार्त
ण्डसन्निभम् ॥ शार्ङ्गमुक्तोदिव्यबाणोद्योतयन्मंडलंदिशाम् ॥ २६ ॥ शकुनेर्मस्तकंछित्त्वाभूमिंभित्त्वातलंगतः ॥ व्यसुर्भूत्वातदादैत्यःपति
तोरणमंडले ॥ २७ ॥ भूमिस्पर्शात्सजीवोभूत्क्षणमात्रेणमैथिल ॥ करेणादायमुंडंस्वंस्वकबंधेनिधायसः ॥ २८ ॥ युद्धंकर्तुंसमुत्तस्थौ
तदद्भुतमिवाभवत् ॥ इत्थंकृष्णेननिहतःसप्तवारंमहासुरः ॥ २९ ॥ भूमिस्पर्शात्सजीवोभूद्राहुवत्पुनरुत्थितः ॥ एकाकीयादवकुलसंहारं
कर्तुमुद्यतः ॥ ३० ॥ विवेशाशुमहादैत्योवनेवह्निरिवप्रभुः ॥ सतुरंगान्महावीरान्सशस्त्रानुत्कटान्गजान् ॥ ३१ ॥ संगृहीत्वाभुजाभ्यां
खेप्राक्षिपल्लक्षयोजने ॥ कांश्चिद्गजान्मुखेधृत्वास्कंधयोरुभयोरपि ॥३२॥ कक्षयोरुभयोर्दैत्योबभौकालाग्निरुद्रवत् ॥ पद्भ्यांकराभ्यांदैत्यस्य
नाशंयातेबलेमृधे ॥ ३३ ॥ हाहाकारोमहानासीच्छ्रीकृष्णस्यमहात्मनः ॥ तदैवभगवान्साक्षाच्छ्रीकृष्णोविश्वरक्षकः ॥ सुदर्शनास्त्रंप्रायुंक्त
साधूनांरक्षणायवै ॥ ३४ ॥ तद्धस्तमुक्तंनिशितंसुदर्शनंलयार्ककोटिद्युतिमज्ज्वलत्प्रभम् ॥ जहारसद्यःशकुनेर्दृढंशिरोयथाचवृत्रस्यपवि
र्महामृधे ॥ ३५ ॥ तावद्गृहीत्वाशकुनिंमृधेहरिश्चिक्षेपसद्योमृतमंबरेबलात् ॥ उत्क्षेपणंभोःकुरुतेषुभिर्दिवियदून्गिराश्रीपतिरित्युवाच ॥
॥ ३६ ॥ ॥ नारदउवाच ॥ ॥ इत्थंहरेर्वचःश्रुत्वासर्वेयादवपुंगवाः ॥ अंबरात्प्रपतंतंतंतेऽहुर्बाणैःस्फुरत्प्रभैः ॥ ३७ ॥ दैत्योदीप्तिमतो
बाणैरंबरेशतयोजनम् ॥ गतःकंदुकवद्राजन्नूर्ध्वंलोकस्यपश्यतः ॥ ३८ ॥ सांबस्यापिसबाणेनसहस्रंयोजनंगतः ॥ पुनस्तमापतंतंखाज्ज
घानत्विषुणार्जुनः ॥ ३९ ॥ तेनबाणेनदैत्येंद्रोयोजनंचायुतंगतः ॥ अनिरुद्धस्यबाणेनलक्षयोजनमास्थितः ॥ ४० ॥ प्रद्युम्नस्यापिबाणेन
नियुतंयोजनंगतः ॥ पुनस्तमापतंतंखाद्वीक्ष्ययोगेश्वरेश्वरः ॥ ४१ ॥ बाणंसमादधेतेनगतःखेकोटियोजनम् ॥ एवंखेसंस्थितेदैत्येऽप्यतीते
प्रहरद्वये ॥ ४२ ॥ द्वितीयेनापिबाणेनतंजघानहरिःस्वयम् ॥ सबाणस्तंभ्रामयित्वादिक्षुवैकोटियोजनम् ॥ ४३ ॥ समुद्रेपातयामास
वातःपद्ममिवप्रभुः ॥ एवंमृतेतदादैत्येतज्ज्योतिर्निर्गतंस्फुरत् ॥ ४४ ॥ सर्वतोपिप्रमदंजच्छ्रीकृष्णेलीनतांगतम् ॥ तदाजयजयारावो
दिविभूमौबभूवह ॥ ४५ ॥ विद्याधर्यश्चगंधर्व्योननृतुःखेसुखान्विताः ॥ जगुःकिन्नरगंधर्वास्तुष्टुवुःसिद्धचारणाः ॥ ४६ ॥ ऋषयोमुनयः

सर्वेप्रशशंसुर्हरिंपरम् ॥ ब्रह्मरुद्रेन्द्रसूर्याद्याः सर्वेतत्रसमागताः ॥ ४७ ॥ श्रीकृष्णस्योपरिसुराः पुष्पवर्षंप्रचक्रिरे ॥४८॥ इ॰ग॰सं॰वि॰ना॰
ब॰सं॰ भद्राश्वखंडगमनेचंद्रावतीयुद्धोपाख्यानेशकुनिदैत्यवधोनामैकचत्त्वारिंशोऽध्यायः ॥ ४१ ॥ नारदउवाच ॥ पलायितेषुशेषेषुदैत्ये
षुरणमंडलात् ॥ वीणावेणुमृदंगादीन्नादयन्दुंदुभीन्हरिः ॥ १ ॥ गीयमानोयादवेन्द्रैः सूतमागधबंदिभिः ॥ स्वपुत्रैर्यादवैः सार्द्धंस्वसैन्यपरि
वारितः ॥ २ ॥ शङ्खचक्रगदापद्मशार्ङ्गेषुधिविराजितः ॥ प्रविवेशसुरैः सार्द्धंपुरींचंद्रावतींप्रभुः ॥ ३ ॥ दुःखार्ताभर्तरिमृतेरुदंतीकरुणंबहु ॥
अंकेगृहीत्वाशकुनेः सुतंराज्ञीमदालसा ॥ ४ ॥ श्रीकृष्णचरणेबालंनिधायाशुकृतांजलिः ॥ अश्रुपूर्णमुखीदीनाहरिंनत्वाजगादह ॥ ५ ॥
॥ मदालसोवाच ॥ भारावतारायभुविप्रभोत्वंजातोयदूनांकुलआदिदेवः ॥ असिष्यसेपासिभवंनिधायगुणैर्नलिप्तोसिनमामि तुभ्यम् ॥ ६॥
मदात्मजंपालयभीतभीतमसुष्यहस्तंकुरुशीर्ष्णिदेव ॥ भर्त्राकृतंमेकिलतेपराधंक्षमस्वदेवेशजगन्निवास ॥७ ॥ नारदउवाच ॥ इत्युक्तोभगवां
स्तस्यमूर्ध्निकृत्वाकरद्वयम् ॥ सर्वंचंद्रावतीराज्यंददौतस्मैमहामनाः ॥ ८ ॥ दत्त्वाकल्पांतमायुष्यंभक्तिज्ञानंविरक्तिमत् ॥ शकुनेःशिशवे
कृष्णः स्वमालांप्रददौशुभाम् ॥ ९ ॥ उच्चैःश्रवोहयोरत्नंकामधेनुःसुरद्रुमः ॥ आहृतायेशकुनिनापुरायुद्धेपुरंदरात् ॥ १० ॥ पुरंदरायतान्प्रादा
त्प्रयत्नाच्छ्रीजनार्दनः ॥ गोविप्रसुरसाधूनांछंदसांपालकः स्वयम् ॥ ११ ॥ ॥ बहुलाश्वउवाच ॥ ॥ केऽमीदैत्याःपूर्वकालेशकुन्याद्यामा
हाबलाः ॥ देवर्षेमेपरंचित्रंकस्मान्मोक्षमुपागताः ॥ १२ ॥ ॥ नारदउवाच ॥ ॥ ब्रह्मकल्पेपुराराजन्गन्धर्वेशःपुरावसुः ॥ आसी
त्तस्यशुभाःपुत्राबभूवुर्नवचौरसाः ॥ १३ ॥ कन्दर्पसमलावण्यादिव्यभूषणभूषिताः ॥ नित्यंजगुर्ब्रह्मलोकेगीतवाद्यविशारदाः ॥ १४ ॥
मन्दारोमन्दरोमन्दोमन्दहासोमहाबलः ॥ सुदेवःसुधनःसौधःश्रीभानुरितिविश्रुताः ॥ १५ ॥ एकदामोहितेपुत्रींवाग्देवींवीक्ष्यवेधसि ॥ जह
सुस्तेस्वमनसिपुरावसुसुताश्चये ॥१६॥ सुरज्येष्ठापराधेनगतायोनिंचतामसीम् ॥ वाराहेथहिरण्याक्षपत्न्यांतेजज्ञिरेनव ॥ १७ ॥ शकुनिः
शम्बरोहृष्टोभूतसन्तापनोवृकः ॥ कालनाभोमहानाभोहरिश्मश्रुस्तथोत्कचः ॥ १८ ॥ एकदागृहमायान्तमपांतरतमंमुनिम् ॥ नत्वा
सम्पूज्यविधिवत्पप्रच्छुरिदमादरात् ॥ १९ ॥ ॥ दैत्याऊचुः ॥ ॥ श्रुतंशुकमुखाद्ब्रह्मन्कैवल्येशोहरिःस्वयम् ॥ ददातिमोक्षंभगवा

न्भक्तानांभक्तवत्सलः ॥ २० ॥ अस्माभिर्नकृताभक्तिरासुरींयोनिमास्थितैः ॥ दुःसङ्गनिरतैर्दुष्टैःकथंमोक्षोभवेदिह ॥ २१ ॥ उपायंवद
नोब्रह्मन्कल्याणस्यपरस्यच ॥ कल्याणार्थंविचरसिदीनानांजगतिप्रभो ॥ २२ ॥ ॥ अपान्तरतमउवाच ॥ ॥ गुणानांभोपृथग्भा
वैर्येभजन्तिहरिंपरम् ॥ तैस्तैःप्रापुःपरंदैत्यानिर्गुणंमोक्षनायकम् ॥ २२ ॥ ऐक्यंचसौहृदंस्नेहंभयंक्रोधंस्मरंतथा ॥ विधायपूर्वंसततंश्रीकृ
ष्णेलीनतांगताः ॥२४॥ पृश्निगर्भस्यसंबंधात्प्रजानांपतयोयथा ॥ कायाधवःसौहृदाच्चस्नेहाच्चसुतपामुनिः ॥ २५ ॥ भयाद्धिरण्यकशिपुः
क्रोधाद्दश्वपितासुरः ॥ स्मराच्चश्रुतयःप्रापुर्योगिनांदुर्लभंपरम् ॥ २६ ॥ येनकेनापिभावेनश्रीकृष्णेधारयेन्मनः ॥ भक्तियोगेनतद्धामयदे
भिःप्राप्यतेसुराः ॥ २७ ॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्त्वांतर्हितेराजन्नपान्तरतमेमुनौ ॥ चक्रुर्वैरंशकुन्याद्याःपरिपूर्णतमेहरौ ॥२८॥
तेप्रापुर्वैरभावेनश्रीकृष्णंपरमेश्वरम् ॥ नचित्रंविद्धिराजेंद्रकीटःपेशस्कृतंयथा ॥२९॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायां श्रीविश्वजित्खण्डे
नारदबहुलाश्वसंवादेचन्द्रा०शकुन्यादिपूर्वजन्मकथने भद्राश्वखण्डविजयोनामद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ श्रीनारदउवाच ॥
॥ इत्थंखण्डंतुभद्राश्वंजित्वाश्रीयादवेश्वरः ॥ यदुभिःसैनिकैःसार्द्धमिलावृतमथाययौ ॥ १ ॥ विभातियत्रैवगिरींद्रराजोभूपद्मगोलस्यचक
र्णिकेव ॥ स्फुरद्द्युतिःस्वर्णमयःसुमेरुःसुरालयोमैथिलरत्नसानुः ॥२॥ तंसर्वतोमन्दरमेरुमन्दरौसुपार्श्वएवंकुमुदश्चतुर्थकः ॥ विभातिसैको
गिरिभिर्नगेश्वरश्चतुष्पदार्थैश्चमनोरथाइव ॥ ३ ॥ जांबूनदंजंबुभवंहियत्रयतःस्वतःसिद्धिभवंसुवर्णम् ॥ यत्रारुणोदाख्यनदीचजातायद्वारि
पानाद्द्युतिरामयोन ॥ ४ ॥ कदम्बजातामधुपंचधारायासान्तुपानेननृणांकदापि ॥ शीतोष्णवैवर्ण्यपरिश्रमाद्यादौर्गन्ध्यभावानभवंति
राजन् ॥५॥ यदुद्भवाःकामदुघानदाश्चरत्नान्नवासःशुभभूषणानि॥शय्यासनादीनिफलानियानिदिव्यानितानित्वथचार्पयन्ति॥६॥एवंचत
त्रोर्ध्ववनंप्रसिद्धंसंकर्षणोयत्रविराजतेथ॥शिवःसदासौरमतेप्रियाभिःस्त्रीभावतांयांतिजनास्तुतत्र ॥७॥ हेमांबुजापीतवसंतवायुभिरेजल्लतैला
विलवंगजालैः ॥ देवद्रुमामोदमदांधषट्पदैः [illegible] मयीमिमां हीरांवैडूर्यरत्नांकुरुवृंदचित्रिताम् ॥ इलावृतं
पूर्णमलंकृतंसुरैर्विजित्यखण्डंजगृहेबलिंहरिः ॥ ९॥ श्रीशोभनोनामपुराकृतेयुगेजामातृकोभून्मुचकुंदभूभृतः ॥ एकादशींयःसमुपोष्यभारते

प्राप्तःसदेवैःकिलमंदराचले॥१०॥ अद्यापिराज्यंकुरुतेकुबेरवद्राड्यायुतोसौकिलचन्द्रभागया ॥ नीत्वाबलिंदेववरस्यसंमुखेसमाययौमैथिल
सुन्दरःपरः ॥ ११ ॥ प्रदक्षिणीकृत्यहरिंयदूत्तमंपादारविंदेपतितोथशोभनः ॥ भक्त्याप्रणम्याशुबलिंमहात्मनेदत्त्वाययौमैथिलमंदराचलम्॥
॥ १२ ॥ ॥ बहुलाश्वउवाच ॥ ॥ शोभनेचनृपेयातेभगवान्मधुसूदनः ॥ अग्रेचकारकिंदेवोवददेवर्षिसत्तम ॥ १३ ॥ ॥ नारद
उवाच ॥ ॥ सरोवरंपरंदिव्यंतस्मिन्मंदरसानुनि ॥ सौवर्णपंकजंवीक्ष्यकिरीटीप्राहमाधवम् ॥ १४ ॥ ॥ अर्जुनउवाच ॥ ॥ कांचनी
भिर्लताभिश्चसौवर्णैःपंकजैर्वृतम् ॥ वदमांदेवकीपुत्रकस्येदंकुंडमद्भुतम् ॥ १५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ पृथुःपूर्वोराजराजःस्वा
यंभुवकुलोद्भवः ॥ ततापसतपोदिव्यंतस्येदंकुंडमद्भुतम् ॥ १६ ॥ अस्यपीत्वाजलंसद्यःसर्वपापैःप्रमुच्यते ॥ स्नात्वासद्धामपरमंयाति
पार्थनरेतरः ॥ १७ ॥ ॥ नारदउवाच ॥ ॥ इत्युक्त्वाभगवान्साक्षात्तपोभूमिंजगामह ॥ सरूपास्तत्रनृत्यंतिसर्वास्ताह्यष्टसिद्धयः ॥
तांवीक्ष्यचोद्धवःप्राहभगवंतंसनातनम् ॥ १८ ॥ ॥ उद्धवउवाच ॥ ॥ कस्येयंसुतपोभूमिर्मंदराचलसन्निधौ ॥ मूर्तिमत्योविराजंत्यः
काःस्त्रियोवदहेप्रभो ॥ १९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ स्वायंभुवेनमनुनातपश्चात्रकृतंपुरा ॥ तस्येयंसुतपोभूमिरद्यापिश्रेयसीबहु
॥ २० ॥ सदात्रैवहिवर्ततेनार्योयास्त्वष्टसिद्धयः ॥ अत्रप्राप्तस्यकस्यापिस्वतस्ताश्चभवंतिहि ॥ २१ ॥ अत्रक्षणेनतपसादेवत्वंयातिमान
वः ॥ तपोभूमेश्चमाहात्म्यंवक्तुंनालंचतुर्मुखः ॥२२॥ ॥ श्रीनारदउवाच ॥ ॥ इत्युक्त्वाभगवान्कृष्णःस्वसैन्यपरिवारितः ॥ जगामप्रोत्कटा
न्देशान्दुंदुभीन्नादयन्मुहुः ॥२३॥हिरण्यकशिपुर्दैत्योयत्रतेपेतपःपुरा ॥ यत्रलीलावतीनामवर्ततेकांचनीपुरी॥२४॥ लीलावतीश्वरःसाक्षाद्वी
तिहोत्रोहुताशनः ॥ नित्यंराज्यंप्रकुरुतेमूर्तिमान्भुविसुव्रतः ॥ २५ ॥ सोपिश्रीकृष्णचंद्रायपुरुषायमहात्मने ॥ बलिंदत्त्वापरांशश्वत्स्तु
तिंचक्रेधनंजयः॥ २६ ॥ इत्थंपश्यन्देवदेवःसर्ववर्षमिलावृतम् ॥ जगामवेदनगरंजंबूद्वीपंमनोरमम् ॥ २७ ॥ मूर्तिमान्यत्रनिगमोदृश्यतेस
र्वदैवहि ॥ तत्सभायांसदावाणीवीणापुस्तकधारिणी ॥ २८ ॥ गायंतीकृष्णचरितंसुभगंमंगलायनम् ॥ उर्वशीपूर्वचित्त्याद्यानृत्यंत्यप्स
रसोनृप ॥ २९ ॥ हावभावकटाक्षैश्चतोषयंत्यःश्रुतीश्वरम् ॥ अहंविश्वावसुश्चैवतुंबुरुश्चसुदर्शनः ॥ ३० ॥ तथाचित्ररथोह्येतेवादित्रा

णिमुहुर्मुहुः ॥ वेणुवीणामृदंगानिमुरुयष्टियुतानिच ॥ ३१ ॥ तालदुंदुभिभिःसार्द्धंवादयंतियथाविधि ॥ ह्रस्वदीर्घप्लुतोदात्तानुदात्तस्व
रितानृप ॥ ३२ ॥ सानुनासिकभेदश्चतथानिरनुनासिकः ॥ एतैरष्टादशैर्भेदैर्गीयंतेश्रुतयःपरैः ॥ ३३ ॥ मूर्तिमंतोविराजंतेतत्रवेदपुरेनृप ॥
अष्टौतालाःस्वराःसप्ततथाग्रामत्रयंनृप ॥ ३४ ॥ वसंतिवेदनगरेमूर्तिमंतःसदैवहि ॥ भैरवोमेघमल्लारोदीपकोमालकंसकः ॥
॥ ३५ ॥ श्रीरागश्चापिहिंडोलोरागाःषट्संप्रकीर्तिताः ॥ पंचभिश्चप्रियाभिश्चतनुजैरष्टभिःपृथक् ॥ ३६ ॥ मूर्तिमंतस्तुतेतत्रविचरंतिन
रेश्वर ॥ भैरवोबभ्रुवर्णश्चमालकंसःशुकद्युतिः ॥ ३७ ॥ मयूरद्युतिसंयुक्तोमेघमल्लारएवहि ॥ सुवर्णाभोदीपकश्चश्रीरागोरुणवर्णभृत् ॥
हिंडोलोदिव्यहंसाभोराजतेमिथिलेश्वर ॥ ३८ ॥ ॥ बहुलाश्वउवाच ॥ तालानांचस्वराणांचग्रामाणांमुनिसत्तम ॥ नृत्यानांकतिभेदाये
नामभिःसहितान्वद ॥ ३९ ॥ ॥ श्रीनारदउवाच ॥ ॥ रूपकश्चंचरीकश्चतालःपरमठःस्मृतः ॥ विराटःकमठश्चैवकच्छीकश्चझटि
ज्जटा ॥ ४० ॥ निषादर्षभगांधारषड्जमध्यमधैवताः ॥ पंचमश्चेत्यमीराजन्स्वराःसप्तप्रकीर्तिताः ॥ ४१ ॥ माधुर्यमथगांधार्यंध्रौव्यं
ग्रामत्रयंस्मृतम् ॥ रासंचतांडवंनाट्यंगांधर्वंकैन्नरंतथा ॥ ४२ ॥ वैद्याधरंगौह्यकंचनृत्यमाप्सरसंनृप ॥ हावभावानुभावैश्चदशभिश्चाष्टभेद
वत् ॥ ४३ ॥ सारंगममथान्यानिस्वरगर्भ्यंपदंस्मृतम् ॥ एतत्तेकथितंराजन्किंभूयःश्रोतुमिच्छसि ॥ ४४ ॥ इति श्रीमद्गर्गाचार्यसंहितायां
विश्वजित्खंडेनारदबहुलाश्वसंवादेइलावृतखंडगमनेसुन्दरतपोदेशविजयेवेदनगरवर्णनंनामत्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥ ॥ छ ॥
॥ बहुलाश्वउवाच ॥ रागिणीनांचनामानिवददेवऋषेमम ॥ तथावैरागपुत्राणांत्वंपरावरवित्तमः ॥ १ ॥ ॥ नारदउवाच ॥ ॥ काले
नदेशभेदेनक्रिययास्वरमिश्रया ॥ भेदाश्चषष्टिपंचाशत्कोट्योगीतस्यकीर्तिताः ॥ २ ॥ अंतर्भेदाअनन्ताहितेषांसंतिनृपेश्वर ॥ विद्धचेनं
रागमानंदंशब्दब्रह्ममयंहरिम् ॥ ३ ॥ तस्मान्मुख्याश्चभेदाःकौवदिष्यामितवाग्रतः ॥ भैरवीपिंगलाशंकीलीलावत्यागरीतथा ॥ ४ ॥ भैर
वस्याऽपिरागस्यरागिण्यःपंचकीर्तिताः ॥ महापंचश्चसमृद्धिश्चपिंगलीमागधस्तथा ॥ ५ ॥ बिलावरश्चवैशाखोललितःपंचमस्तथा ॥ भैरव
स्याष्टपुत्राश्चगीयंतेचपृथक्पृथक् ॥ ६ ॥ चित्राजयजयावंतीविचित्राकथितापुनः ॥ वृजमल्लार्यंधकारीरागिण्योपिमनोहराः ॥ ७ ॥ मेघमल्लार

रागस्यकथिताःपंचमैथिल ॥ श्यामाकारःसोरटश्चनटोडायनएवच ॥ ८ ॥ केदारोत्रजरंहस्योजलधारस्तथैवच ॥ विहागश्चेत्यष्टपुत्राःकथिताःपूर्वसूरिभिः ॥ ९ ॥ मेघमल्लाररागस्यमैथिलेन्द्रमनोहराः ॥ कंचुकीमंजरीटोडीगुर्जरीशाबरीतथा ॥ १० ॥ दीपकस्यापिरागस्यरागिण्यःपंचविश्रुताः ॥ कल्याणःशुभकामश्चगौडकल्याणएवच ॥ ११ ॥ कामरूपःकान्हरेतिरामसंजीवनस्तथा ॥ सुखनामामन्दहासःपुत्राश्चाष्टौविदेहराट् ॥ १२ ॥ रागस्यदीपकस्यापिकथितारागपंडितैः ॥ गांधारीवेदगांधारीधनाश्रीस्वर्गमणिस्तथा ॥ १३ ॥ गुणागरीतिरागिण्यःपंचैतामैथिलेश्वर ॥ मालकोशस्यरागस्यकथितारागमंडले ॥ १४ ॥ मेघश्चमचलोमारुमाचारःकौशिकस्तथा ॥ चंद्रहारोघूंघुटुश्चविहारोनंदएवच ॥ १५ ॥ मालकोशस्यरागस्यचाष्टपुत्राःप्रकीर्तिताः ॥ वैराटीचैवकर्णाटीगौरीगौरावटीतथा ॥ १६ ॥ चतुश्चंद्रकलाचैवरागिण्यःपञ्चविश्रुताः ॥ श्रीरागस्यापिराजेंद्रकथिताःपूर्वसूरिभिः ॥ १७ ॥ सारंगःसागरोगौरोमरुत्पंचशरस्तथा ॥ गोविंदश्चहमीरश्चभांगीरश्चतथैवच ॥ १८ ॥ श्रीरागस्यापिराजेंद्रअष्टौपुत्रामनोहराः ॥ वसंतीपरजीहेरीतैलंगीसुंदरीतथा ॥ १९ ॥ हिंडोलस्यापिरागस्यरागिण्यःपंचविश्रुताः ॥ मंगलश्चवसंतश्चविनोदःकुमुदस्तथा ॥ २० ॥ एवं च विहितोनामविभासःस्वरमंडलः ॥ पुत्राश्चाष्टौसमाख्यातामैथिलेंद्रपृथक्पृथक् ॥२१॥ बहुलाश्वउवाच ॥ शब्दब्रह्महरेःसाक्षान्निगमस्यमहात्मनः॥रागमण्डलमित्येवंहिंडोलस्यपृथक्पृथक् ॥ अंगानिवददेवर्षेकानिकानिमहीतले ॥ २२ ॥ ॥ नारदउवाच ॥ ॥ मुखंव्याकरणंप्रोक्तंपिंगलःपादउच्यते ॥ मीमांसशास्त्रंहस्तौचज्योतिर्नेत्रंप्रकीर्तितम् ॥ २३ ॥ आयुर्वेदःपृष्ठदेशोधनुर्वेदउरःस्थलम् ॥ गांधर्वंरसनांविद्धिमनोवैशेषिकंस्मृतम् ॥ २४ ॥ सांख्यंबुद्धिरहंकारोन्यायवादःप्रकीर्तितः ॥ वेदांततस्यचित्तंहिवेदस्यापिमहात्मनः ॥ २५ ॥ रागरूपमिदंराजन्विहारंविद्धिमैथिल ॥ एतत्तेकथितंराजन्किंभूयःश्रोतुमिच्छसि ॥ २६ ॥ ॥ बहुलाश्वउवाच ॥ ॥ तस्मिन्वेदपुरेरम्येकिंचकारहरिःस्वयम् ॥ एतन्मेवददेवर्षेत्वंसाक्षाद्दिव्यदर्शनः ॥ २७ ॥ ॥ नारदउवाच ॥ ॥ आयांतंवेदनगरंश्रीकृष्णंयादवेश्वरम् ॥ निगमोपिबालिंनीत्वासरस्वत्यातयासह ॥ २८ ॥ गंधर्वैरप्सरोभिश्चग्रामतालैःस्वरैःसह ॥ रागैःसभेदैःसहितःप्रणनामकृतांजलिः ॥ २९ ॥ प्रसन्नोभगवान्साक्षाद्देवदेवोजनार्दनः ॥ वेदंप्राहयदूनांचसर्वेषांशृण्वतांस

ताम् ॥ ३० ॥ ॥ श्रीभगवानुवाच ॥ ॥ निगमत्वंवरंब्रूहियत्तेमनसिवर्तते ॥ दुर्लभंकिंत्रिलोकेषुभक्तानांहर्षितेमयि ॥ ३१ ॥ वेद
उवाच ॥ यदिदेवप्रसन्नोसिसर्वेयेमेसुपार्षदाः ॥ तेषांदेवनिजंरूपंदर्शयात्रपरेश्वर ॥ ३२ ॥ यद्रूपंतेचगोलोकेस्वधाम्निप्रस्फुरद्द्युतौ ॥ वृंदावने
चतद्रासेतस्यदर्शनकांक्षिणः ॥ ३३ ॥ ॥ नारदउवाच ॥ ॥ श्रुत्वावेदवचःकृष्णःपरिपूर्णतमःस्वयम् ॥ स्वरूपंदर्शयामासराधयासहि
तंपरम् ॥ ३४ ॥ तद्रूपंसुंदरंदृष्ट्वासर्वेवैमूर्च्छनांगताः ॥ पूरिताःसात्विकैर्भावैर्विस्मृत्यस्वतनुंसुखम् ॥ ३५ ॥ तदातिहर्षिताःसर्वेवादित्रै
र्मधुरस्वनैः ॥ जगुस्तत्पुरतोराजन्ननृतुःपश्यतांसताम् ॥ ३६ ॥ यथाश्रुतंतथादृष्टंमाधुर्यंरूपमद्भुतम् ॥ तथैवचक्रुर्वेदाद्यावर्णनंमैथिलेश्व
र ॥ ३७ ॥ ॥ वेदउवाच ॥ ॥ संज्ञानमात्रंसदसत्परंबृहच्छश्वत्प्रशांतंविभवंसमंमहत् ॥ त्वांब्रह्मवंदेवसुदुर्गमंपरंसदास्वधाम्नापरिभू
तकैतवम् ॥ ३८ ॥ ॥ सरस्वत्युवाच ॥ ॥ महत्परंत्वांकिलयोगिनोविदुःसविग्रहंतत्रवदंतिसात्वताः ॥ दृष्टंतुयत्तेपदयोर्द्वयंमेक्षेमस्य
भूयान्महसामधीश्वरम् ॥ ३९ ॥ ॥ गन्धर्वाऊचुः ॥ ॥ श्यामंचगौरंविदितंस्वधाम्निकृतंत्वयाधामनिजेच्छयाहि ॥ विराजसेनि
त्यमलंचताभ्यांघनोयथामेचकदामनीभ्याम् ॥ ४० ॥ अप्सरसऊचुः ॥ यथातमालःकलधौतवल्ल्याघनोयथाचंचलयाचकास्ति ॥ नीलो
द्रिराजोनिकषाश्मखन्याश्रीराधयात्वंस्तुतथारमण्या ॥ ४१ ॥ ॥ ग्रामाऊचुः ॥ ॥ यस्यपदस्यपरागंशंभुरमाकविदेवैः ॥ इच्छतिचेतसि
राधातंभजेमाधवपादम् ॥ ४२ ॥ ॥ तालाऊचुः ॥ येनबलिःसद्भिहरेत्तद्बलिमेवहरेत् ॥ तंभजेपादंतुहरेश्वेतसिसुतेकुहरे ॥ ४३ ॥ माना
ऊचुः ॥ उत्क्षिपंतिबहिर्दुःखंसंतोयच्छरणंगताः ॥ राधामाधवयोर्दिव्यंदधामःपादपंकजम् ॥ ४४ ॥ स्वराऊचुः ॥ शरद्विकचपंकजश्रियमती
वविद्वेषकंमिलिंदमुनिलीढितंकुलिशकंजचिह्नावृतम् ॥ स्फुरत्कनकनूपुरंदलितभक्ततापत्रयंचलद्द्युतिपदद्वयंहृदिदधामिराधापते ॥ ४५ ॥
॥इति श्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेइलावृतखंडगमनेवेदादिस्तुतिवर्णनंनामचतुश्चत्वारिंशत्तमोऽध्यायः॥४४॥
॥ नारदउवाच ॥ ॥ भैरवाद्यारागगणाः [illegible] ॥ [illegible]तिहर्षिताः ॥ १ ॥ यत्रयत्रचतेषांवैदृष्टिःप्राप्ता



हरेस्तनौ ॥ तत्रस्थिताचनिर्गंतुंलावण्यात्रशशाकह ॥ २ ॥ अहोश्रीकृष्णचन्द्रस्यरूपमत्यद्भुतंहरेः ॥ दृष्ट्वोपवर्णनंतस्यचक्रुस्तेपिपृथ ॥१७६

कपृथक् ॥ ३ ॥ ॥ भैरवउवाच ॥ ॥ भजहरिजानुद्वयमितिलक्ष्मीः ॥ भजतिसदांकेकमलकराभ्याम् ॥ ४ ॥ ॥ मेघमल्लारउवा
च ॥ ॥ ऊरूविष्णोरंभाखंडौहेमस्तंभौध्यायेवंद्यौ ॥ ओजःपूर्णौशोभायुक्तौवस्त्रापीतौकृष्णस्योभौ ॥ ५ ॥ दीपकउवाच ॥ ॥ सक
लसुखकरंकनकरुचिधरम् ॥ प्रथितहरिपदंभजतकटितटे ॥ ६ ॥ ॥ मालकंसउवाच ॥ ॥ कटीकेशवस्यहरेरस्तितत्रनृणांनेत्रयोर्दृ
ष्टिमानंहरंती ॥ परंकंपितामंदगच्छत्समीरैःसुनम्रेणसासर्वचेतोहरेत्थम् ॥ ७ ॥ ॥ श्रीरागउवाच ॥ ॥ नाभेःसरःपुष्करकुंडवच्चतल्ल
सत्त्रिवल्ल्यूर्मिमनोहरंपदम् ॥ रोमावलिप्रोज्झितकामकाननंभजामिनित्यंहृदिराधिकापतेः ॥ ८ ॥ हिंडोलउवाच ॥ अक्षरपंक्तिःकिंत्वलिपं
क्तिःपिप्पलपत्रेमोहनमाला ॥ किंकमलेयच्छचामलरेखाकिंह्युदरेरोमावलिरेखा ॥ ९ ॥ भैरवरागिण्यऊचुः ॥ पीतपटंयत्कृष्णहरेरिंद्रध
नुर्वद्दीप्तियुतम् ॥ कांचनशिल्पैश्चारुरुचिन्तद्भजनृणांदुःखहरम् ॥ १० ॥ ॥ भैरवपुत्राऊचुः ॥ ॥ चतुःसमुद्राइवविश्वपूरकाआनंददादेव
चतुःपदार्थवत् ॥ तेबाहवोलोकवितानदण्डवज्जयन्तिभूधारणदिग्गजाइव ॥ ११ ॥ ॥ मेघमल्लाररागिण्यऊचुः ॥ ॥ अरुणबिंबफल
द्युतिमण्डितंभजहरेरधरंमधुरंमनः ॥ नवजपादलमञ्जुविग्रहंसकलवल्लभभूमिपतेःप्रभोः ॥ १२ ॥ ॥ मेघमल्लारपुत्राऊचुः ॥ ॥ कर्पूर
केतकसुमौक्तिकहीरकाणांश्रीखंडचंद्रचपलामृतमल्लिकानाम् ॥ तेषांरुचेश्चपरिभावमकारिपूर्वंयादंतपंक्तिरमलास्मरतांपरस्य ॥ १३ ॥
॥ दीपकरागिण्यऊचुः ॥ ॥ नयनयुगलजातंपातुनोहर्निशंतेमदनशरपरीक्षंसर्वलावण्यदीक्षम् ॥ परिहृतसुरवृक्षंकोटिशोलक्ष्यलक्षंनि
जजनकृतरक्षंदानदक्षंकटाक्षम् ॥ १४ ॥ ॥ दीपकपुत्राऊचुः ॥ ॥ किंवाकुलिंगयुगलंनवपद्ममध्येदुःखक्षयायवसतांनिशितासियुग्मम् ॥
जैत्रंधनुर्जयतिकिंमकरध्वजस्यभ्रूमंडलंकिमथचंद्रमुखेपरस्य ॥ १५ ॥ ॥ मालकोशरागिण्यऊचुः ॥ ॥ परिनृत्यतइंदुमंडलेफणि
पत्न्याविवलोलकुंडले ॥ कमलेमकरंदनिर्भरेभ्रमरालीवसुगंडमंडले ॥ १६ ॥ ॥ मालकंसपुत्राऊचुः ॥ ॥ रविरेवखमंडलेकिमुयदुभ
र्तुस्त्वथवाद्यतेतडित् ॥ अधितिष्ठतिगंडमंडलंद्युतिखण्डंकलधौतकुंडलम् ॥ १७ ॥ ॥ श्रीरागिण्यऊचुः ॥ ॥ कुलिंगयोःखञ्जनयोःकिलारा
दापत्यतांयुद्धमभूदलीनाम् ॥ तेषांगतःकीरउषःप्रफुल्लेचकास्तिपद्मेरुणबिंबलिप्सुः ॥ १८ ॥ ॥ श्रीरागपुत्राऊचुः ॥ ॥ परिकरीकृत

पीतपटंहरिंशिखिकिरीटनतीकृतकंधरम् ॥ लगुडवेणुकरंचलकुंडलंपटुतरंनटवेषधरंभजे ॥ १९ ॥ ॥ हिंडोलरागिण्यऊचुः ॥ ॥ अ
तसीकुसुमोपमेयकांतिर्यमुनाकूलकदम्बमध्यवर्ती ॥ नवगोपवधूविलासशालीवनमालीवितनोतुमंगलानि ॥ २० ॥ ॥ हिंडोलपुत्राऊ
चुः ॥ ॥ हरेमत्समःपातकीनास्तिभूमौतथात्वत्समोनास्तिपापापहारी ॥ इतित्वांचमत्वाजगन्नाथदेवंयथेच्छाभवेत्तेतथामांकुरुत्वम् ॥
॥ २१ ॥ नारदउवाच ॥ इतिरागकृतंध्यानंयःशृणोतिपठेत्सदा ॥ तन्नेत्रगोचरोयातिभगवान्भक्तवत्सलः ॥ २२ ॥ इत्थंस्वंदर्शनंदत्त्वावे
दादिभ्योहरिःस्वयम् ॥ बभूवपश्यतांतेषांशार्ङ्गपाणिश्चतुर्भुजः ॥ २३ ॥ कृत्वातुदर्शनंविष्णोर्गतेदेवेगणैःसह ॥ सैन्येसुतंशंबरारिंस्थाप
यित्वायदूत्तमम् ॥ २४ ॥ द्वारकांस्वांपुरींगंतुंमनश्चक्रेपरात्परः ॥ २५ ॥ मंजीरघंटाकलकिंकिणीकलंसुकांस्यपात्रध्वनिनारथेन ॥ सुग्रीव
मुख्यैरतिचंचलाश्वैर्नियोजितैर्मैथिलदारुकेण ॥२६॥ युतेनसद्रत्नमताश्रुतिस्वनैःप्रभञ्जनैर्जद्गरुडध्वजेन ॥ विहायसावेदपुरीम्परात्माययौ
पुरींयादववृंदमंडिताम्॥२७॥इति श्रीमद्गर्गा०सं० वि०ना० बहुलाश्वसंवादेरागकृतकृष्णध्यानवर्णनंनामपञ्चचत्वारिंशत्तमोऽध्यायः॥४५॥
॥ नारदउवाच ॥ अथकृष्णेभगवतिपुरींद्वारावतींगते ॥ प्रद्युम्नःसैनिकैःसार्द्धंनदान्कामदुघान्ययौ ॥ १ ॥ शतयोजनविस्तीर्णागं
धर्वाणांमहापुरी ॥ वसंतमालतीनाम्नाहेमरत्नमयीशुभा ॥ २ ॥ लवंगलतिकाजालैरेलाकाश्मीरवृंदकैः ॥ जातीफलादिजावित्रीश्रीखण्डैः
पारिजातकैः ॥३ ॥ मन्दारवनगन्धाढ्यैःसर्वतःसुरभीकृताः ॥ सहस्रदलराजीवकेतकीपुष्पगन्धिभिः ॥४॥ मत्तालिनादिताभृंगैःशब्दिता
चित्रपक्षिभिः ॥ गन्धर्वैराजिताभव्यैर्नागैर्भोगवतीयथा ॥ ५ ॥ पतङ्गोनामतत्रैवगन्धर्वेशोमहाबलः ॥ करोतिराज्यंसुकृतीशक्रवद्बलपौरु
षः ॥ ६ ॥ श्रुत्वाप्रद्युम्नमायांतंदिग्जयार्थंविनिर्गतम् ॥ गंधर्वैरुद्भटैर्युक्तोयुद्धंकर्तुंमनोदधे ॥ ७ ॥ रथाश्वगजवीरैश्चगंधर्वैर्दशकोटिभिः ॥
पतंगआगतोयोद्धुंप्रद्युम्नस्यापिसंमुखे ॥ ८ ॥ गंधर्वैर्यदुभिःसार्द्धंघोरंयुद्धंबभूवह ॥ मल्लैर्गदाभिःपरिघैर्मुद्गरैस्तोमरर्ष्टिभिः ॥ ९ ॥ बाणांध
कारेसंजातेपतंगोतिरथोबली ॥धनुष्टंकारयन्प्राप्तोजगजघनवन्मृधे ॥१०॥ गदांगदोसमादायबलदेवानुजोबली ॥ तद्बलंपोथयामासवज्रेणें
द्रोयथागिरीन् ॥ ११ ॥ गदस्यगदयाकेचिद्गंधर्वाःपतितारणे ॥ रथाश्चूर्णीकृताःसर्वेमातंगाभिन्नमस्तकाः ॥ १२ ॥ अश्वारूढाःकेपिवी



वि०
अ०

राःपतितारणमूर्धनि ॥ अधोमुखाऊर्ध्वमुखागंधर्वाश्छिन्नबाहवः ॥ १३ ॥ क्षणमात्रेणतत्सैन्येरुधिराणांनदीह्यभूत ॥ प्रमथाहरमालार्थंशि
रांसिजगृहुर्मृधे ॥ १४ ॥ सिंहारूढाभद्रकालीडाकिनीशतसंवृता ॥ कपालेनापिरुधिरंपिबंतीदृश्यतेमृधे ॥ १५ ॥ एवंयुद्धेगदकृतेगन्ध
र्वाणांपलायताम् ॥ गंधर्वेशस्तदाप्राप्तोहस्तिलक्षबलान्वितः ॥ १६ ॥ गदंतताडगदयापतंगोहृदिमैथिल ॥ गदोपितंस्वगदयापतंगंहृदि
चौजसा ॥ १७ ॥ तयोश्चगदयायुद्धंबभूवघटिकाद्वयम् ॥ विस्फुलिंगान्क्षरंत्यौद्वेगदेचूर्णीबभूवतुः ॥ १८ ॥ लक्षभारमयींगुर्वींगदामादा
यसत्वरम् ॥ गदंतताडशिरसिपतंगोरणदुर्मदः ॥ १९ ॥ गदाप्रहारेणगदःक्षणंमूर्च्छामवापह ॥ एवंकृतेघोरमृधेपतंगेनमहात्मना ॥ २० ॥
तदैवद्वारकापुर्य्यास्तेजःसंघट्टमागतम् ॥ ददृशुर्यादवाःसर्वेकोटिमार्तंडसन्निभम् ॥ २१ ॥ तस्मिंस्तेजसिगौरांगोबलदेवोमहाबलः ॥ आ
विर्बभूवसहसाभगवान्भक्तवत्सलः ॥ २२ ॥ गंधर्वाणांबलंसर्वंसमाकृष्यहलेनवै ॥ तताडमुसलंक्रुद्धोबलोनीलांबरोबली ॥ २३ ॥ रथाग
जास्तुरंगाश्चवीराःशस्त्रभृतांवराः ॥ निपेतुर्युगपत्सर्वेचूर्णिताश्चोपलाइव॥२४॥पतंगोविरथस्तस्माद्भयभीतःपुरींययौ ॥ पुनर्योद्धुंयादवैश्चसे
नाव्यूहंचकारह ॥ २५ ॥ शतयोजनविस्तीर्णांगंधर्वाणांमहापुरीम् ॥ वसंतमालतींसर्वांमुद्विदार्यहलेनवै ॥ २६ ॥ विचकर्षबलःक्रुद्धोनदे
कामदुघेनृप ॥ हाहाकारस्तदैवासीन्नगर्यांपतितैर्गृहैः ॥ २७ ॥ तिर्यक्पोतमिवाघूर्णंनगरंवीक्ष्यसत्वरम् ॥ पतंगःसर्वगंधर्वैर्धर्षितःसन्कृतां
जलिः ॥ २८ ॥ खचिद्धेमसुवर्णानांमुक्तातोरणशालिनाम् ॥ दशयोजनदीर्घाणांकृतानांविश्वकर्मणाम् ॥ २९ ॥ कामगानांपताकाभिर्युता
नांकुंभकोटिभिः ॥ सहस्रार्कप्रकाशानांविमानानांद्विलक्षकम् ॥३०॥ चतुर्लक्षंगजानांचतुरंगाणांदशार्बुदम् ॥ दिव्यानांनवरत्नानांभारंदश
दशार्बुदम् ॥३१॥ एलालवंगकाश्मीरजातीफलदलैःसह ॥ सुधाफलानांदिव्यानांकोटिशोभाजनानिच ॥३२॥ नीत्वाबलिंसरामायदत्त्वान
त्वाप्रधर्षितः ॥ कृतांजलिःप्राहबलंबलभद्रप्रभाववित्॥३३॥ ॥ पतंगउवाच ॥ ॥ रामराममहावीर्यनजानेतवविक्रमम् ॥ यस्यैकमूर्ध्नितिं
लवद्दृश्यतेभूमिमंडलम् ॥३४॥ देवाधिदेवभगवन्कामपालनमोस्तुते ॥ नमोनंतायशेषायसाक्षाद्रामायतेनमः ॥३५॥ जयजयाच्युतदेवपरा
त्परस्वयमनंतदिगंतगतश्रुते ॥ सुरमुनींद्रफणींद्रवरायतेमुसलिनेबलिनेहलिनेनमः ॥ ३६ ॥ नारदउवाच ॥ एवंस्तुतःपतंगेनबलभद्रो

महाबलः ॥ प्रसन्नचेतागंधर्वंमाभैरित्यभयंददौ ॥ ३७ ॥ स्थापयित्वाबलेकार्ष्णिंप्रणतंयादवेश्वरः ॥ यादवैःप्रस्तुतःशीघ्रंपुरींद्वाराव
तींययौ ॥ ३८ ॥ ॥ इतिश्रीमद्गर्गाचार्यसंहितायां विश्वजित्खण्डेनारदबहुलाश्वसंवादे इलावृतखण्डगमनेगंधर्वदेशविजयेवसंत
मालतीकर्षणंनामषट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥ ॥ नारदउवाच ॥ ॥ प्रद्युम्नोथमहावीरोनादयञ्जयदुंदुभीन् ॥ यदुभिः
सैनिकैःसार्द्धंमधुधारातटंययौ ॥ १ ॥ सुवर्णाद्रितटीभूतेवनेवैश्रंभकेशुभे ॥ सुवर्णवर्णहंसाढ्येकांचनीलतिकावृते ॥ २ ॥ हेमा
वतीषुद्रोणीषुदेवदुर्गासुमैथिल ॥ दानवानामगम्यासुगङ्गावेत्रवतीषुच ॥ ३ ॥ दानवेभ्यःप्रभीतानांकचित्स्वर्गात्पलायिनाम् ॥ अष्टानांलो
कपालानांनिधयोयत्रसंतिहि ॥ ४ ॥ तत्रशक्रसखोदेवआधिपत्याभिरक्षकः ॥ श्रुत्वागतश्चप्रद्युम्नंयुद्धंकर्तुंमनोदधे ॥ ५ ॥ प्रद्युम्नप्रेषितः
साक्षादुद्धवोबुद्धिसत्तमः ॥ पप्रच्छदृष्टमार्गैश्चजनैस्तस्यपुरंययौ ॥ ६ ॥ नत्वादेवंशक्रसखंसभायामुद्धवःप्रभुः ॥ प्रद्युम्नकथितंप्राहविस्तरा
न्मंत्रिणांवरः ॥ ७ ॥ ॥ उद्धवउवाच ॥ ॥ उग्रसेनोयादवेन्द्रोद्वारकेशोनृपेश्वरः ॥ जंबूद्वीपनृपाञ्जित्वाराजसूयंकरिष्यति ॥ ८ ॥
तेनप्रणोदितोजेतुंरुक्मिणीनंदनोबली ॥ जित्वासभारतादीनिखंडानिस्वस्यतेजसा ॥ ९ ॥ अद्यैवेलावृतंप्राप्तोजेतुंकार्ष्णिर्महाबलः ॥ त
स्मैयच्छबलिंशीघ्रंकुलकौशल्यहेतवे ॥ नचेद्युद्धंहिभवताराजन्सर्वविदांवर ॥ १० ॥ ॥ शक्रसखउवाच ॥ ॥ शृणुदूतसदादेवैःपूजि
तोहंनरैःकिमु ॥ सिद्धोहंवैमहावीरोनागलक्षसमोबले ॥ ११ ॥ अष्टानांलोकपालानामाधिपत्याभिरक्षकः ॥ कुबेरइवकोशाढ्यःपुरंदरइ
वोद्भटः ॥ १२ ॥ उग्रसेनेनदातव्यंमह्यंचोपायनंपरम् ॥ परात्कस्मैनदास्यामियदुराजायभूभृते ॥ १३ ॥ ॥ उद्धवउवाच ॥ ॥
यथातिरस्कृतांप्राप्तःकुबेरोयदुतेजसा ॥ यथाशृंगारतिलकश्चैत्रदेशाधिपोबली ॥ १४ ॥ शुभांगोहरिवर्षेशउत्तरेशोगुणाकरः ॥ यथादैत्यस
खोराजालंकेशोराक्षसेश्वरः ॥ १५ ॥ संवत्सरःकेतुमालःशकुन्याद्यामहासुराः ॥ तथाभूतस्त्वंहिराजन्बलिंतस्मैप्रदास्यसि ॥ १६ ॥
॥ नारदउवाच ॥ ॥ इत्युद्धववचःश्रुत्वा[illegible]बली ॥ [illegible]तम ॥ १७ ॥ यावद्बलिंप्रदास्यामिताव ॥१७८॥
त्वंसंस्थितोभव ॥ अन्यथातेगतिर्नास्तिसत्यंसत्यंमहामते ॥ १८ ॥ ॥ उद्धवउवाच ॥ ॥ वयंतुमंत्रिप्रवराःपूर्णज्ञानप्रदावराः ॥ म

च्छिक्षणंनमन्यंतेतेपादंडभवंफलम् ॥ १९ ॥ ॥ नारदउवाच ॥ ॥ एवंसदृष्ट्वरोधेनरोधयामासचोद्धवम् ॥ बद्धापाशैरोपगात्रिंकारागा
रेरुरोधह ॥ उद्धवोनागतोराजन्यदूनामनुशोचताम् ॥ २० ॥ दिनानिकतिचित्तत्रव्यतीयुस्तमपश्यताम् ॥ मन्मुखात्तदुपाकर्ण्यप्रद्युम्नो
भगवान्हरिः ॥ २१ ॥ जेतुंशक्रसखंप्रागात्रिपुरंत्र्यंबकोयथा ॥ यदुभिर्भ्रातृभिःसार्द्धंससैन्यपरिवारितः ॥ २२ ॥ सुवर्णाद्रिगुहास्वारात्सं
प्राप्तोमकरध्वजः ॥ वीरकोदंडटंकारैर्दुंदुभिध्वनिमिश्रितैः ॥ २३ ॥ अश्वहेषैर्हस्तिनादैर्विनेदुश्चदिशोदश ॥ सैन्यपादरजोभिश्चयुयुधे
यादवैःसह ॥२४॥ बभूवतुमुलंयुद्धंछादितंव्योममण्डलम् ॥ वीक्ष्यसर्वेमरुदेवाभयंप्रापुर्नृपेश्वर ॥२५॥ अथशक्रसखःक्रुद्धोरथारूढोमहाब
लः ॥ अक्षौहिणीभिर्दशभिर्युयुधेयादवैःसह ॥ २६ ॥ बभूवतुमुलंयुद्धंदेवानांयदुभिःसह ॥ प्राकृतप्रलयेराजन्नब्धीनामब्धिभिर्यथा ॥२७॥
शस्त्रांधकारेसंजातेसारणोरोहिणीसुतः ॥ बलदेवानुजोवीरोदंशितोगजसंस्थितः ॥ २८ ॥ सर्वेषामग्रतःप्राप्तोधनुष्टंकारयन्मुहुः ॥ तद्बलं
पोथयामासबाणैःकोदंडनिर्गतैः ॥ २९ ॥ श्रीसारणस्यबाणौघैःकेचिद्वीराद्विधाकृताः ॥ तिर्यग्भूतारथायुद्धेनिपेतुःपादपाइव ॥ ३० ॥
गजानांभिन्नकुंभानांमौक्तिकान्यपतंस्तदा ॥ बाणांधकारेसंजातेरात्रौताराग्णाइव ॥३१॥ संछिद्यमानैरश्वैश्चवीरैर्नागैरणांगणम् ॥ बभौभू
तगणैर्युक्तंयथाक्रीडसुमापतेः ॥ ३२ ॥ सारणस्यबलंदृष्ट्वासर्वेदेवाःपलायिताः ॥ संछिन्नभिन्नकोदंडाअभितःशीर्णकंचुकाः ॥ ३३ ॥
पलायमानंस्वबलंदृष्ट्वाशक्रसखोबली ॥ धनुष्टंकारयन्प्राप्तोजगर्जवनदद्बली ॥ ३४ ॥ अर्जुनंदशभिर्बाणैर्विंशत्याभानुमेवच ॥ सांबबाण
शतैर्युद्धेनिरुद्धंचशतैःशरैः ॥ ३५ ॥ द्विशतैश्चगदंवीरंसहस्रैःसारणंतथा ॥ तताडसमरेवीरोधन्वीशक्रसखोबली ॥ ३६ ॥ तद्बाणैःसरथावी
राबभ्रमुर्घटिकाद्वयम् ॥ चक्रवत्कुंभकारस्यतदद्भुतमिवाभवत् ॥ ३७ ॥ हयाश्वपंचतांप्राप्ताःश्लथद्बंधारथाभ्रमात् ॥ रथिनःखिन्नमनसःसूतामू
र्च्छांगतामृधे ॥३८॥ सांबोन्यंरथमारुह्यधनुष्टंकारयन्बलात् ॥ धनुःशक्रसखस्यापिचिच्छेददशभिःशरैः ॥३९॥ द्वाभ्यांसूतंशतैरश्वान्सहस्रै
स्तद्रथंशरैः ॥ चूर्णयामासराजेंद्रसांबोजांबवतीसुतः ॥ ४० ॥ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ नागेंद्रमत्तमारुह्यशूलंजग्राहरोषतः
॥४१॥ विन्याधसांबंशूलेनहृदिशक्रसखोबली॥तेनघातेनसांबोपिकिंचिद्व्याकुलमानसः ॥४२॥ योजनेपादविक्षेपंकज्जलाद्रिसमप्रभम् ॥

चतुर्योजनमुच्चांगंयोजनार्धंरदद्वयम् ॥ ४३ ॥ महच्चीत्कारंकुर्वंतंत्रिशुंडादंडमंडलैः ॥ शृंखलैःपातयंतंतंचतुर्योजनविस्तृतैः ॥ ४४ ॥ गजा
न्वीरान्मर्दयंतंरथानश्वानितस्ततः ॥ दंतैःपादैर्घातयंतंकालांतकयमोपमम् ॥ ४५ ॥ आगतंवीक्ष्यनागेंद्रंशत्रुणानोदितंपरम् ॥ विचरंतं
मृधाद्भीतायदुसेनाविदुद्रुवुः ॥ ४६ ॥ गदोगदांसमादायबलदेवानुजोबली ॥ जघानतद्गजंकुंभेगदयावज्रकल्पया ॥ ४७ ॥ गदासंभिन्न
कुम्भोथिगजोयुद्धेपपातह ॥ छिन्नपक्षोयथाशैलस्तदद्भुतमिवाभवत् ॥ ४८ ॥ अथशक्रसखोयावद्गदांजग्राहरोषतः ॥ तावत्तताडगदया
गदःशक्रसखंहृदि ॥ ४९ ॥ तेनघातेनसगजात्पतितोमूर्च्छितोभवत् ॥ पुनरुत्थायसगदंभुजाभ्यांजगृहेमृधे ॥ ५० ॥ गदशक्रसखौयुद्धेयु
युधातेपरस्परम् ॥ रंगेमल्लाविववनेवन्यौतौवारणाविव ॥ ५१ ॥ भुजाभ्यांतंसमुत्थाप्यबलदेवानुजोबली ॥ चिक्षेपतत्पुरोवीरंबलात्तं
शतयोजनम् ॥ ५२ ॥ तदाजयजयारावोयदुसैन्येबभूवह ॥ जयदुंदुभयोनेदुःप्रशशंसुर्मुहुर्जनाः ॥ ५३ ॥ ॥ इति श्रीमद्गर्गाचार्यसं
हितायांविश्वजित्खण्डेनारदबहुलाश्वसंवादेइलावृतखण्डगमनेदेवदेशविजयेशक्रसखयुद्धंनामसप्तचत्वारिंशत्तमोऽध्यायः ॥४७॥ ॥ छ ॥
॥ नारदउवाच ॥ ॥ स्वपुरेपतितोमूर्च्छांगतःशक्रसखोभृशम् ॥ उत्तस्थौचक्षणंतत्रकिंचिद्व्याकुलमानसः ॥ १ ॥ अथकार्ष्णिपरंब्रह्म
ज्ञात्वाशक्रसखस्त्वरम् ॥ स्वसकाशाद्बलिंनीत्वायदूनांचबलंययौ ॥ २ ॥ ऐरावतकुलेभाश्चत्रिशुंडादंडशालिनः ॥ चतुर्दंताःश्वेतवर्णाः
सहस्राणिमदच्युतः ॥ ३ ॥ हेमाद्रिप्रभवानागायोजनद्वयविग्रहाः ॥ कोटिशःपर्वताकाराउन्मत्तादिग्गजाइव ॥ ४ ॥ दिव्याश्वादिव्यगत
यःकोटिशःकोटिशोनृप ॥ शतार्बुदारथादिव्याःशातकुंभमयाःपराः ॥ ५ ॥ अयुतानिविमानानांयोजनद्वयशालिनाम् ॥ नियुतंकामधे
नूनांपारिजातसहस्रकम् ॥ ६ ॥ करिदंतखचिदण्डाहेमरत्नखचितपदाः ॥ मुक्तास्तबकसंबद्धगुणयंत्रस्फुरत्प्रभाः ॥ ७ ॥ मल्लिकामकरं
दार्द्राःशिरीषकुसुमाकुलाः ॥ पयःफेननिभाःशय्याःकोटिशःसोपबर्हणाः ॥ ८ ॥ वितानानिविचित्राणिभित्तिवस्त्राणिकोटिशः ॥ आस
नानिमृदुस्पर्शचित्रवर्णानिसर्वशः ॥ ९ ॥ दीर्घाणिचोपबर्हाणिविश्वकर्मकृतानिच ॥ मुक्तास्तबकहेमाद्यैःखचितानिसहस्रशः ॥ १० ॥ सह
स्रशोजवनिकाःशिबिकाश्चैवकोटिशः ॥ छत्राणांचामराणांचदिव्यसिंहासनैःसह ॥ ११ ॥ व्यजनानांतथाकोटीराज्यश्रीभूषणानिच ॥

पीयूषाणांद्रोणकोटिःसुधर्माचसभातथा ॥ १२ ॥ एवंचसर्वतोभद्रपद्मानीतिसहस्रशः ॥ हीरकाणांचहरितांमुक्तानांचतथैवहि ॥१३॥ गोमे
दानांकोटिभारानीलकानांतथैवच ॥ आदित्यचंद्रकांतीनांवैडूर्याणांसहस्रशः ॥ १४ ॥ स्यमंतकमणीनांचकोटिभाराःसमागताः ॥
तथावैपद्मरागाणांभारान्विद्ध्यर्बुदंनृप ॥ १५ ॥ जांबूनदसुवर्णानांहाटकानांतथैवच ॥ सुवर्णाद्रिसुवर्णानांकोटिभाराश्चकोटिशः ॥ १६ ॥
इत्थंनवनिधीन्सर्वान्दैवानांमैथिलेश्वर ॥ अष्टानांलोकपालानामाधिपत्याधिरक्षकः ॥ १७ ॥ नीत्वोद्धवंशक्रसखोदत्वैवंबलिमद्भुतम् ॥
कौशल्यहेतवेकार्ष्णिप्रणनामकृतांजलिः ॥ १८ ॥ तस्मैतुष्टःशंबरारिःप्रददौरत्नमालिकाम् ॥ संस्थाप्यराज्येतंराजन्नेषाहिप्रकृतिःसताम् ॥
॥ १९ ॥ इत्थंशक्रसखंजित्वाप्रद्युम्नोभगवान्हरिः ॥ विकर्षन्महतींसेनामरुणोदातटान्ययौ ॥ २० ॥ श्रुत्वाजितंशक्रसखंसिद्धेशाःकि
न्नरास्तथा ॥ नकेपियुयुधुस्तेनप्रद्युम्नायबलिंददुः ॥ २१ ॥ शिबिराणांसमूहोभूदरुणोदानदीमनु ॥ महाधनखचिद्भिश्चवितानैःशतयोज
नम् ॥ २२ ॥ पतत्पताकैर्दिव्याभैर्भून्यस्तविजयध्वजैः ॥ विरेजेशिबिरव्यूहोलहरीभिर्यथोदधिः ॥ २३ ॥ आकाशादागतंतत्रगजारूढं
पुरंदरम् ॥ ससैन्यंसहसाराजन्दुंदुभिध्वनिसंयुतम् ॥ २४ ॥ संवीक्ष्यवेगतोवीराजगृहुःशस्त्रसंहतिम् ॥ पुनरिंद्रंचतंज्ञात्वाबभूवुर्हर्षिता
नृपाः ॥ २५ ॥ श्रीप्रद्युम्नंसभामध्येसंप्राप्तोथपुरंदरः ॥ दत्तासनोयदुवरैःप्रद्युम्नंप्राहदेवराट् ॥ २६ ॥ ॥ श्रीपुरंदरउवाच ॥ शृणुकार्ष्णेमहाबा
हो त्वंपरावरवित्तमः ॥ लीलावतीनामपुरीशुभाहेमाद्रिसानुषु ॥ २७ ॥ विद्याधरेशःसुकृतीतत्रराज्यंकरोतिहि ॥ तत्कन्यासुंदरीनामश
तचन्द्रनिभाशुभा ॥ २८ ॥ आगतादेवताःसर्वास्तस्याराजन्स्वयंवरे ॥ लोकपालास्तथासर्वेसंप्राप्तादिव्यविग्रहाः ॥ २९ ॥ यंदृ
ष्ट्वामूर्च्छिताहंस्यांसमेभर्ताभवत्विति ॥ गिरेत्येवंप्रजल्पंतीसुंदरंवरमिच्छती ॥ ३० ॥ तत्रापिगच्छसहसाभ्रातृभिःसहकौतुकम् ॥
स्वयंवरंपश्यपरंदेवलोकैश्चमंडितम् ॥ ३१ ॥ ॥ नारदउवाच ॥ ॥ तच्छ्रुत्वाभगवान्कार्ष्णिर्यादवैर्भ्रातृभिःसह ॥ पुरंदरेणसहसापुरीं
लीलावतींययौ ॥ ३२ ॥ विशालाजिरसंयुक्तेखचिद्रत्नमनोहरे ॥ चंदनागुरुकस्तूरीकुंकुमद्रवचर्चिते ॥ ३३ ॥ मुक्तायुक्तैस्तोरणै
श्चवितानैःसुमहाधनैः ॥ जांबूनदासनैःसाक्षादिंद्रलोकइवामले ॥ ३४ ॥ तस्मिन्स्वयंवरेतस्थौप्रद्युम्नोदिव्यआसने ॥ गिरिशृंगेयथा

सिंहःसर्वेषांपश्यतांनृप ॥ ३५ ॥ प्रजेशामुनयस्तत्रदेवारुद्रगणास्तथा ॥ मरुतोरवयश्चैववसवोह्यग्नयोश्विनौ ॥ ३६ ॥ यमोथवरुणः
सोमोधनदःशक्रएवहि ॥ सिद्धाविद्याधराश्चैवगंधर्वाःकिन्नरास्तथा ॥ ३७ ॥ अन्येसमागताःसर्वेरत्नाभरणभूषिताः ॥ जहुर्वैवाहिकी
माशांप्रद्युम्नंवीक्ष्यमैथिल ॥ ३८ ॥ सासुन्दरीतत्रसुरत्नमालयारतिंचरंभांक्षिपतीवनिर्गता ॥ वाणींरमांरूपवतींपुलोमजांविडंबयंतीवब
भौवरांगना ॥ ३९ ॥ यांवीक्ष्यसर्वेषुसदःसुसर्वतोमोहंप्रयातेषुतथैवमैथिल ॥ श्रीःसर्वलोकस्यचपश्यतोवरंविचिन्वतीसाचपलेवचांबुदम्
॥ ४० ॥ दिव्यांबरंपद्मदलायतेक्षणंप्रद्युम्नवीरंनरलोकसुन्दरम् ॥ समेत्यमूर्च्छांसमवापसुन्दरीविद्याधरीसापुनरापसंज्ञाम् ॥ ४१ ॥
समुत्थितासात्वतिहर्षविह्वलातस्थौसुमालांविनिधायतद्गले ॥ विद्याधरेशःसुकृतींचसुन्दरींसुतांददौमैथिलशंबरारये ॥ ४२ ॥ नदत्सूतूर्ये
षुतदैवनिर्जरानसेहिरेवीक्ष्यविवाहमंगलम् ॥ तंसर्वतःसंरुरुधुःस्वयंवरंप्रचंडमेघाइवभास्करंपरम् ॥ ४३ ॥ क्रोधावृतांस्तानमरान्धनुर्धरा
न्मदोद्धतान्वीक्ष्यहरेःसुतोबली ॥ श्रीकृष्णदत्तंसशरंधनुःस्वयंत्वरंगृहीत्वायदुभिर्जगर्जह ॥ ४४ ॥ तच्चापमुक्तैर्विशिखैःस्फुरत्प्रभैश्छिन्ना
युधामैथिलशीर्णकंचुकाः ॥ विदुद्रुवुस्तेचदिशोदशामरानीहारमेघाइवसूर्यरश्मिभिः ॥ ४५ ॥ प्रद्युम्नोभगवान्साक्षादित्थंजित्वास्वयंव
रम् ॥ विजित्येलावृतंखण्डंभारतंगंतुमुद्यतः ॥ ४६ ॥ भ्रातृभिर्यदुभिःसैन्यैःसर्वमंत्रिजनैःसह ॥ आययौभारतंखण्डंनादयञ्जयदुंदुभीन् ॥
॥ ४७ ॥ पश्यन्देशाननेकांश्चजंबूद्वीपंययौबली ॥ आनर्तान्द्वारकादेशान्प्राप्तोभूच्छ्रीहरेःसुतः ॥ ४८ ॥ प्रद्युम्नप्रेषितःसाक्षादुद्धवोबुद्धिस
त्तमः ॥ प्रणनामोग्रसेनंतंसभायांश्रीहरिंबलम् ॥४९॥ वर्षेवर्षेपियज्जातंजम्बूद्वीपजयोयथा ॥ तत्सर्वंहियथायोग्यंकथयामासचोद्धवः॥५०॥
श्रीकृष्णबलदेवाभ्यांसर्वैर्वृद्धजनैःसह ॥ प्रद्युम्नंतंसमानेतुमुग्रसेनोविनिर्गतः ॥ ५१ ॥ गीतवादित्रघोषेनब्रह्मघोषेणभूयसा ॥ मुक्तावर्षैर्लाज
पुष्पैःपाठारावैःसुमंगलैः ॥ ५२ ॥ वारणेंद्रंपुरस्कृत्यसौवर्णैःकलशैर्नृप ॥ गंधर्वैर्वारमुख्याभिःशंखदुंदुभिवेणुभिः ॥ ५३ ॥ गंधाक्षतैर्हेमपा
त्रैःपुष्पैर्धूपैर्यवांकुरैः ॥ उग्रसेनःशंबरारेः [illegible] ॥ ५४ ॥ [illegible]स्थितोग्रसेनस्यपुरोधृत्वाकृतांजलिः ॥ ननामकार्ष्णिर्यदुभिर्भ्रा
तृभिःसहमैथिल ॥ ५५ ॥ श्रीकृष्णंसबलंनत्वासर्वान्वृद्धान्प्रणम्यच ॥ गर्गाचार्यंननामाशुप्रद्युम्नोमीनकेतनः ॥ ५६ ॥ संश्लाघ्याभ्यर्च्य

विधिवद्ब्राह्मणैर्वेदसूक्तिभिः ॥ आरोप्यवारणेकार्ष्णिमुग्रसेनःपुरींययौ ॥ ५७ ॥ द्वारकायांमंगलोभूद्यदूनांचगृहेगृहे ॥ इत्थंजयस्तेकथितःकिंभूयःश्रोतुमिच्छसि ॥ ५८ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडे नारदबहुलाश्वसंवादेइलावृतखंडविजयेस्वयंवरविजये प्रद्युम्नद्वारकागमनंनामाष्टचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥ ॥ छ ॥ श्रीबहुलाश्वउवाच ॥ ॥ कथंचकारविधिवद्राजसूयाध्वरंनृपः ॥ एतन्मेब्रूहिविप्रेंद्रत्वंपरावरवित्तमः ॥ १ ॥ ॥ नारदउवाच ॥ ॥ अथोग्रसेनोनृपतिःसर्वधर्मभृतांवरः ॥ श्रीकृष्णेनसहायेनक्रतुराजंचकारह ॥ २ ॥ गर्गाद्यदुकुलाचार्यान्मुहूर्तंबोध्ययत्नतः ॥ बंधुभ्यःप्रददौराजन्सुहृद्भ्योपिनिमंत्रणम् ॥३॥ भक्त्यापरमयाहूताऋषयोमुनयोद्विजाः ॥ आजग्मुर्द्वारकांसर्वेपुत्रशिष्यैःसमावृताः॥४॥वेदव्यासःशुकःसाक्षान्मैत्रेयोथपराशरः ॥ पैलःसुमंतुर्दुर्वासावैशंपायनइत्यहम् ॥५॥ जैमिनिर्भार्गवोरामोदत्तात्रेयोसितोमुनिः ॥ अंगिरावामदेवोत्रिर्वसिष्ठःकण्वएवच ॥६॥ विश्वामित्रःशतानंदोभारद्वाजोथगौतमः ॥ कपिलःसनकाद्याश्चविभांडश्चपतंजलिः ॥७॥ द्रोणःकृपःप्राड्विपकःशांडिल्योमुनिसत्तमः ॥ अन्येचमुनयोराजन्सशिष्यास्तुसमागताः ॥८॥ ब्रह्माशिवोजंभभेदीदेवारुद्रगणास्तथा ॥आदित्यामरुतःसर्वेवसवोह्यग्नयोश्विनौ॥९॥यमोथवरुणःसोमोधनदोगणनायकः ॥ सिद्धाविद्याधराश्चैवगंधर्वाःकिन्नरादयः ॥ १० ॥ गंधर्व्यप्सरसःसर्वाविद्याधर्य्यःसमागताः ॥ वितलाद्दानवादैत्याःप्रह्लादोबलिनासह ॥११॥ रक्षोभिर्भीषणैस्सार्द्धंलंकाधीशोविभीषणः ॥ सर्वैश्चवानरैःसार्द्धंहनूमान्वायुनंदनः ॥१२॥ ऋक्षैश्चदंष्ट्रिभिःसार्द्धंजांबवानृक्षराड्बली ॥ सर्वैश्चपक्षिभिःसार्द्धंगरुडःपक्षिराड्बली ॥१३॥ सर्वैःसरीसृपैः सार्द्धंवासुकिर्नागराण्महान् ॥ गोरूपधारिणीपृथ्वीसर्वाभिःकामधेनुभिः॥ १४॥ सर्वैःशैलैर्मूर्त्तिमद्भिःसुमेरुश्चहिमाचलः ॥ गुल्मवृक्षलताभिश्चवटःसाक्षात्प्रयागतः ॥१५॥ महानदीभिःसहिताश्रीगंगायमुनानदी ॥ पारावाराःसप्ततथारत्नोपायनसंयुताः ॥ १६ ॥ आजग्मुरुग्रसेनस्यराजसूयेमहाध्वरे ॥ सप्तपुर्यस्त्रयोग्रामानवारण्यानवोषराः ॥ १७ ॥ चतुर्दशैवगुह्यानिविख्यातानिमहीतले ॥ तीर्थराजःप्रयागश्चपुष्करंबद्रिकाश्रमः ॥ १८ ॥ सिद्धाश्रमोविनशनःकुंडैःसर्वैःसरोवरैः ॥ वनानिदंडकादीनिसर्वैश्चोपवनैःसह ॥ १९ ॥ क्षेत्रैःसमग्रैर्विमलैस्तेतत्रसमाययुः ॥ श्रीमद्गोवर्द्धनोनामगिरिराजोव्रजाद्गिरिः ॥ २० ॥ वृन्दावनंव्रजवनैःसरःकुंडैःसमाय

यौ ॥ नंदोपनंदानंदश्चतथाषड्वृषभानवः ॥ २१ ॥ वृषभानुवरःसाक्षात्सुचंद्रोनाममैथिल ॥ सर्वगोपगणैर्गोभिर्नंदराजःसमाययौ ॥२२॥
कीर्तिर्यशोमतिःसाक्षाद्गोपीभिर्गोपिकेश्वरी ॥ श्रीराधाशिबिकारूढासखीसंघैश्चकोटिभिः ॥ २३ ॥ शतयूथैश्चगोपीनांद्वारकांप्रययौसु
दा ॥ तासांवासोयत्रयत्रगोपीभूमिश्चसाभवत् ॥ २४ ॥ तदंगरागसंजातंगोपीचंदनमेवहि ॥ गोपीचंदनलिप्तांगोनरोनारायणोभवेत् ॥
॥ २५ ॥ चतुर्वर्णास्तथासर्वेआजग्मुस्तस्यचाध्वरे ॥ धृतराष्ट्रोबुद्धिचक्षुःसाक्षाद्दुर्योधनःकलिः ॥ २६ ॥ शल्योभीष्मश्चकर्णश्चकुंतीपुत्रो
युधिष्ठिरः ॥ भीमोर्जुनोथनकुलःसहदेवस्तथापरे ॥ २७ ॥ दमघोषोवृद्धशर्माजयसेनोमहानृपः ॥ धृष्टकेतुर्भीष्मकश्चनग्नजित्कोसलेश्वरः
॥२८॥बृहत्सेनोधृतिःसाक्षान्मैथिलेशःपितातव ॥ अन्येपितत्रराजानः सुहृत्संबंधिबांधवाः ॥ सहस्त्रीभिस्तथापौत्रैःपुत्रैराजग्मुरध्वरम्
॥ २९ ॥ ॥ इति श्रीमद्गर्गाचार्यसं० वि० खं० ना० ब० सं० यज्ञारंभेस्वजननिमंत्रणंनामैकोनपंचाशत्तमोऽध्यायः ॥४९॥ नारदउवाच ॥
अर्थसिद्धयोरिवद्वारेरेवताद्रिसमुद्रयोः ॥ मध्येपिंडारकेक्षेत्रेयज्ञारंभोबभूवह ॥ १ ॥ पंचयोजनविस्तीर्णःकुंडोभूद्यस्यचाध्वरे ॥ योजने
ब्रह्मकुंडस्तुगव्यूतिःपंचकुंडकाः ॥ २ ॥ मेखलागर्तविस्तारवेदीभिर्निर्मितादश ॥ सहस्रहस्तमुच्चांगोयज्ञस्तंभोबभौमहान् ॥ ३ ॥
पंचयोजनविस्तीर्णः सौवर्णोयज्ञमंडपः ॥ वितानतोरणैरेजेकदलीखंडमंडितः ॥ ४ ॥ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकैः ॥ देवैश्चस
हितोराजाबभौशक्रइवाध्वरे ॥ ५ ॥ यज्ञावतारःश्रीकृष्णःपरिपूर्णतमोध्वरे ॥ बभौपुत्रैश्चपौत्रैश्चपरमात्मेवभूतिभिः ॥ ६ ॥ महासं
भृतसंभारेराजसूयेध्वरेवरे ॥ गर्गाचार्यंगुरुंकृत्वायदुराजोह्यदीक्षत ॥ ७ ॥ होतारोदशलक्षाणिदशलक्षाणिदीक्षिताः ॥ अध्वर्यवः
पंचलक्षमुद्गातारस्तथापरे ॥ ८ ॥ हस्तिशुंडासमाधाराभुक्ताज्यस्यहुताशनः ॥ अजीर्णंप्रापतद्यज्ञेनचित्रंविद्धिमैथिल ॥ ९ ॥ केपिजीवा
स्त्रिलोक्यांतुनबभूवुर्बुभुक्षिताः ॥ सर्वेदेवास्तुसोमेनह्यजीर्णत्वमुपागताः ॥ १० ॥ रुचिमत्याधर्मपत्न्योग्रसेनोयदुराड्बली ॥ अध्वरावभृ
थस्नानंतीर्थेपिंडारकेकरोत् ॥ ११ ॥ व्यासाद्यैर्मुनिभिःस्नातोविधिवद्वेदसूक्तिभिः ॥ यथादक्षिणयायज्ञोरुचिमत्याबभौनृपः ॥ १२ ॥
देवदुंदुभयोनेदुर्नरदुंदुभयस्तदा ॥ उग्रसेनोपरिसुराःपुष्पवर्षप्रचक्रिरे ॥ १३ ॥ गजानांदेवभाराणांनियुतानिचतुर्दश ॥ शतार्बुदंहयानांतु

भक्त्याप्राड्विपाकंपूजयामास ॥ तमनुज्ञाप्याशिषंदत्त्वाप्राड्विपाकोमुनींद्रोगजाह्वयात्स्वाश्रमंजगाम ॥ ४२ ॥ भगवतोनंतस्यबलभद्र
स्यपरब्रह्मणःकथांयःशृणुतेश्रावयतेयआनन्दप्रेमातुरोगायतिहसतिसकृतार्थोब्रह्मानंदमयोभवति ॥ ४३ ॥ इदंमयातेकथितंनृपेंद्रसर्वार्थ
दंश्रीबलभद्रखण्डम् ॥ शृणोतियोधामहरेःसयातिविशोकमानंदमखण्डरूपम् ॥ १४४ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायांश्रीबलभद्रखण्डे
प्राड्विपाकदुर्योधनसंवादे बलभद्रसहस्रनामवर्णनंनामद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥ ॥



## इति श्रीमद्गर्गसंहितायां बलभद्रखंडं समाप्तम् ।



इदं श्रीमद्गर्गाचार्यसंहितायां बलभद्रखंडं श्रीकृष्णदासा-
त्मज-खेमराजेन स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये
मुद्रितम् । सं० १९६६, शके १८३१.

इति श्रीमद्गर्गाचार्यसंहितायां बलभद्रखंडः समाप्तः।

श्रीगणेशाय नमः ॥ ॥ बहुलाश्वउवाच ॥ ॥ हरेःश्रीकृष्णचंद्रस्यभक्तिमार्गस्तुयःपरः ॥ तंवदाशुमुनेमह्यंयेनभक्तोभवाम्यहम् ॥ १ ॥ ना
रदउवाच ॥ भक्तिमार्गंवदिष्यामिवेदव्यासमुखाच्छ्रुतम् ॥ येनप्रसन्नोभवतिभगवान्भक्तवत्सलः ॥ २ ॥ शक्रंविजित्यकृष्णेनभुजदंडबलाद्धृ
ता ॥ द्वारावत्यांसभादिव्यासुधर्मानाममैथिल ॥ ३ ॥ यत्रमंडपदेशस्यवैडूर्यस्तंभपंक्तयः ॥ राजंतेकोटिशोराजन्विश्वकर्मविनिर्मिताः ॥
॥ ४ ॥ पद्मरागखचिद्भूमौश्रेण्यांवैविद्रुमाचिताः ॥ यत्रचित्रवितानानिभ्राजंतेमौक्तिकालिभिः ॥५॥ सिंहासनानिकुड्यानिकालमेघतडि
द्द्युभिः ॥ जांबूनदसुवर्णानांप्रस्फुरत्कुंभकोटिभिः ॥ ६ ॥ बालार्करत्नकेयूरकांचीकंकणनूपुरैः ॥ शतचंद्रप्रतीकाशाःस्फुरत्कुंडलमंडि
ताः ॥ ७ ॥ गायन्तियत्रगंधर्व्योविद्याधर्योमुदान्विताः ॥ नृत्यंत्यःकलवादित्रैःस्पर्द्धयंत्यःपरस्परम् ॥ ८ ॥ यस्याश्चतुर्षुकोणेषुदेववृक्षैर्मनोर
मैः ॥ नंदनंसर्वतोभद्रंध्रौव्यंचैत्ररथंवनम् ॥९ ॥ लक्षाणियत्रराजेंद्रसरांसिविमलानिच ॥ सहस्रदलपद्मानिभ्रमरैःसंकुलानिच ॥ १० ॥ दश
योजनविस्तीर्णापंचयोजनमूर्द्धगा ॥ एतादृशीसुधर्माऽऽस्तेपताकाध्वजमंडिता ॥११॥ यत्रप्रविष्टःपुरुषआत्मानंमन्यतेऽमरम् ॥ यत्सिंहा
सनमासाद्यशक्रोहमितिमन्यते ॥ १२ ॥ सद्यस्त्रैलोक्यचातुर्यंतस्यदेहेप्रवर्तते ॥ यस्तिष्ठतेयत्रयावत्तावद्वूर्मिषडार्तिहा ॥ १३ ॥ यावंतश्च
जनास्तत्रप्रविशंतिनरोत्तम ॥ स्वप्रभावेनसहसातावतीसाप्रकाशते ॥ १४ ॥ षट्पञ्चाशत्कोटिसंख्यायादवायत्रसानुगाः ॥ तद्यत्वरस्यैक
देशेदृश्यंतेतेचमैथिल ॥ १५ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् ॥ यत्रास्तेतस्यराजेंद्रवर्णनंकःकरोतिहि ॥ १६ ॥ अथतस्यांसु
धर्मायांयदुकोटिसमावृतः ॥ उग्रसेनोगीयमानः सूतमागधबंदिभिः ॥ १७ ॥ आकाशादागतःसाक्षाद्वेदव्यासोमहामुनिः ॥ पाराशर्योघन
श्यामस्तडित्पिंगजटाधरः ॥ १८ ॥ तंदृष्ट्वासहसोत्थाययदुराजःकृतांजलिः ॥ नत्वासनंसोपचारंदत्त्वातत्संमुखोभवत् ॥ १९ ॥ उग्रसेन
उवाच ॥ ॥ अद्यमेसफलंजन्मसफलंगेहमद्यमे ॥ अद्यमेसफलोधर्मोब्रह्मंस्त्वय्यागतेसति ॥२०॥ सदानंदेषुकुशलंकृष्णोन्वेष्योभवत्सुहि ॥

वदमेकुशलंदेवयेनस्वस्थोभवाम्यहम् ॥ २१ ॥ यत्रयत्रव्रजतस्तेत्वादृशाःसाधवःप्रभो ॥ तत्रतत्रभवेत्सिद्धिर्लौकिकीपारलौकिकी ॥ २२ ॥
यत्रक्षणंस्थिताःसंतस्तत्रसाक्षात्स्वयंहरिः ॥ किमुलोकगणात्रह्मन्पाराशर्यमहामुने ॥ २३ ॥ मयातुपुण्यंयज्ञोवाकिंकृतंपूर्वजन्मनि ॥ येनवै

यत्रक्षणंस्थिताःसतस्तत्रसाक्षात्स्वयंहरिः ॥ किमुलोकगणाब्रह्मन्पाराशर्यमहामुने ॥ २३ ॥ मयातुपुण्यंयज्ञोवाकिंकृतंपूर्वजन्मनि ॥ येनवै
द्वारकाराज्यंप्राप्तोहंमुनिपुंगव ॥ २४ ॥ भवादृशाविप्रमुख्याग्रहमायांतिनित्यशः ॥ तस्मात्परंहिसुकृतंजानेस्वस्यनसंशयः ॥ २५ ॥ व्या
सउवाच ॥ ॥ धन्योसिराजशार्दूलधन्यातेविमलामतिः ॥ परंकृतंत्वयाराजन्सुकृतंपूर्वजन्मनि ॥ २६ ॥ पुरात्वंमरुतोराजाकृत्वायज्ञंजग
ज्जितम् ॥ निष्कारणोभूर्मनसाप्रसन्नोभूद्धरिस्तदा ॥ २७ ॥ अनीप्सितेनभावेनप्राप्तंचेदंपरंतप ॥ परिपूर्णमतःसाक्षाच्छ्रीकृष्णोभगवान्हरिः॥
॥ २८ ॥ असंख्यब्रह्मांडपतिर्गोलोकेशःपरात्परः ॥ सोयंभक्त्यावशीभूतःस्ववशस्तवमंदिरे ॥ २९ ॥ अहोभोजपतेर्मुक्तिंददातिभजतांह
रिः ॥ नकर्हिंचिद्भक्तियोगंदुर्लभंविद्धितंनृप ॥ ३० ॥ इति श्रीमद्गर्गाचार्यसंहितायांविज्ञानखण्डेनारदबहुलाश्वसंवादेव्यासागमनंनामप्रथमो
ऽध्यायः ॥ १ ॥ ॥ उग्रसेनउवाच ॥ ॥ धन्योस्म्यनुगृहीतोस्मितववर्णननिर्वृतः ॥ हृद्युद्गतंचसंदेहंदूरीकर्तुंभवान्क्षमः ॥ १ ॥ कर्म
णांसनिमित्तानांकागतिःकिंचलक्षणम् ॥ कतिभेदाहितेषांवैब्रूहिब्रह्मन्यथातथम् ॥ २ ॥ व्यासउवाच ॥ ॥ गुणैःसर्वाणिकर्माणिसनिमित्ता
निसंतिहि ॥ तान्येवचानिमित्तानिराजंस्त्यक्तफलानिहि ॥ ३ ॥ सनिमित्तंचयत्कर्मबंधनेविद्धियादव ॥ अनिमित्तंचयत्कर्ममोक्षदंपरमंशु
भम् ॥ ४ ॥ सत्त्वंरजस्तमइतिगुणाःप्रकृतिसंभवाः ॥ तैर्व्याप्तंहिजगत्सर्वंयथार्थमिवविष्णुना ॥ ५ ॥ सत्त्वेप्रलीनाःस्वर्यांतिनरलोकंरजोल
याः ॥ तमोलयास्तुनरकंयांतिकृष्णंहिनिर्गुणाः ॥ ६ ॥ पंचाग्नितप्तकायावैसततंवनवासिनः ॥ लोकंसप्तऋषीणांतेयांतिनिर्गतकल्मषाः ॥
॥ ७ ॥ संन्यासाश्रमकर्तारस्त्रिदंडधृतपाणयः ॥ जितेंद्रियमनोधर्माःसत्यलोकंव्रजंतिहि ॥ ८ ॥ अष्टांगयोगयोगींद्रानिर्मलाऊर्ध्वरेतसः ॥
जनलोकंमहर्लोकंयांतितेनात्रसंशयः ॥९॥ यज्ञकर्ताशक्रलोकेवसतेशाश्वतीःसमाः ॥ दानीचांद्रमसंलोकंव्रतीसौरंव्रजत्यलम् ॥१०॥ तीर्थ
यायीचाग्निलोकंसत्यसंधश्चवारुणम् ॥ वैष्णवाश्चापिवैकुंठंशैवाःशैवंव्रजंतिहि ॥११॥ पितॄन्यजंतियेनित्यंसुखैश्वर्यप्रजेप्सवः॥दक्षिणेनपथा
र्यम्णापितृलोकंव्रजंतिते॥१२॥स्वर्लोकंवैतथास्मार्ताःपञ्चपूजनतत्पराः ॥ प्रजापतियजोयांतिदक्षादींश्चप्रजापतीन् ॥१३॥ भूतानियांतिभू
तेज्यायक्षान्यक्षयजस्तथा ॥ येयस्यभक्तास्तल्लोकंयांतिराजन्नसंशयः ॥ १४ ॥ तथापापरताराजन्दुःसंगवशवर्तिनः ॥ यमलोकंचतेयांति
निरयैर्दारुणैर्वृतम् ॥१५॥ पुनरावार्तिनोलोकाःसर्वेचाब्रह्मलोकतः ॥ पुनरावर्तिनोलोकान्विद्धिराजन्महामते ॥१६॥ कर्मणांसनिमित्तानां

सार्गएषगतागतः ॥ तावत्प्रमोदतेस्वर्गेयावत्पुण्यंसमाप्यते ॥१७॥ क्षीणपुण्यःपतत्यर्वागनिच्छन्कालचोदितः ॥ यादवेंद्रमहाबाहोतस्मा
त्कर्मफलंत्यज ॥ १८ ॥ भक्तोनिष्कारणोभूत्वाज्ञानवैराग्यसंयुतः ॥ प्रेमलक्षणयाभक्त्याहरिभक्तजनप्रियः ॥ १९ ॥ भजश्रीकृष्णपादा
ब्जमभयंहंससेवितम् ॥ योमृत्युःसर्वलोकानांबलात्संहारकारकः ॥ २० ॥ सयत्रभगवद्धाम्निगतःसन्मृत्युमाप्नुयात् ॥ २१ ॥ उग्रसेनउ
वाच ॥ ॥ सर्वेलोकाहिभगवन्पुनरावर्तिनःस्मृताः ॥ तेभ्योजातंचवैराग्यंमनसोमेसमंततः ॥ २२ ॥ श्रीकृष्णधामपरमंयतोनावर्ततेगतः ॥
तल्लोकंवदमेब्रह्मन्क्वचास्तेसर्वतःपरम् ॥ २३ ॥ ॥ श्रीव्यासउवाच ॥ ॥ ब्रह्माण्डेभ्योबहिर्धामश्रीकृष्णस्यमहात्मनः ॥ यद्गत्वाननिवर्तते
तद्गोलोकंविदुःपरम् ॥ २४ ॥ ॥ ब्रह्माण्डोयंजीवसंघःपञ्चाशत्कोटियोजनैः ॥ विस्तृतःपरितोद्वाभ्यांशतकोटिविलंबितः ॥ २५ ॥ यदन्तरग
तोराजँल्लक्ष्यतेपरमाणुवम् ॥ तदन्तरगताश्चान्येकोटिशोह्यण्डराशयः ॥ २६ ॥ नतद्भासयतेसूर्योनशशांकोनपावकः ॥ कामःक्रोधश्चलो
भश्चनमोहोयत्रयातिच ॥ २७ ॥ नयत्रशोकोनजरानमृत्युर्नार्तिरेवच ॥ नप्रधानंनकालश्चविशंतेचगुणाःकुतः ॥ २८ ॥ शब्दब्रह्माप्यनि
र्वाच्यंतद्वर्णयितुमक्षमम् ॥ श्रीकृष्णतेजःसंभूतास्तत्रसंतिचपार्षदाः ॥ २९ ॥ अकिञ्चनाश्चयेदान्ताःशान्तावैसमचेतसः ॥ श्रीकृष्णचन्द्र
पादाब्जमकरन्दरसालयाः ॥ ३० ॥ प्रेमलक्षणयाभक्त्यासदानिष्कारणाःपराः ॥ लोकानुल्लंघ्यतद्धामयांतिराजन्नसंशयः ॥ ३१ ॥ ॥ इति
श्रीमद्ग०सं०विज्ञा०ना०ब०सं०व्यासोग्रसेनसंवादे लोकगतिनिरूपणंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ उग्रसेनउवाच ॥ ॥ श्रुतातवमुखा
द्ब्रह्मन्गुणकर्मगतिर्मया ॥ पुनरावर्तिनोलोकास्तथासंतिविनिश्चिताः ॥ १ ॥ निष्कारणाद्धरेःसाक्षात्सेवनाद्धामदुर्लभम् ॥ लभतेपरमंदि
व्यंभक्तानांतच्छ्रुतंमया ॥ २ ॥ भक्तियोगःकतिविधोवदमेवदतांवर ॥ येनप्रसन्नोभवतिभगवान्भक्तवत्सलः ॥ ३ ॥ ॥ श्रीव्यासउवाच ॥
द्वारावतीशधन्योसिश्रीकृष्णेष्टोहरिप्रियः ॥ पृच्छसेभक्तियोगंत्वंधन्यातेविमलामतिः ॥ ४ ॥ यंश्रुत्वानिर्मलोभूयाद्विश्वघात्यपिपातकी ॥
तंभक्तियोगंविशदंतुभ्यंवक्ष्यामियादव ॥ ५ ॥ भक्तियोगोद्विधाराजन्सगुणश्चैवनिर्गुणः ॥ सगुणःस्याद्बहुविधोनिर्गुणश्चैकलक्षणः ॥ ६ ॥
भावोविभिद्यतेपुंसांगुणमार्गेणदेहिनाम् ॥ त्रैगुणैस्त्रिविधाभक्ताभवंतिशृणुतान्पृथक् ॥ ७ ॥ हिंसांदंभंचमात्सर्यमभिसंधायभिन्नदृक् ॥ कुर्या

द्रावंहरौक्रोधीतामसःपरिकीर्तितः ॥ ८ ॥ यशऐश्वर्यविपयानभिसंधाययत्नतः ॥ अर्चयेद्योहरिंराजन्राजसःपरिकीर्तितः ॥ ९ ॥ उद्दिश्य
कर्मनिर्हारमपृथग्भावएवहि ॥ मोक्षार्थंभजतेविष्णुंसभक्तःसात्त्विकःस्मृतः ॥ १० ॥ जिज्ञासुरार्तोज्ञानीचतथार्थार्थीमहामते ॥ चतुर्विधा
जनाविष्णुंभजंतिकृतमंगलाः ॥ ११ ॥ एवंबहुविधेनापिभक्तियोगेनमाधवम् ॥ भजंतिसनिमित्तास्तेजनाःसुकृतिनःपरे ॥ १२ ॥ लक्षणंभ
क्तियोगस्यनिर्गुणस्यतथाशृणु ॥ तद्गुणश्रुतिमात्रेणश्रीकृष्णेपुरुषोत्तमे ॥ १३ ॥ परिपूर्णतमेसाक्षात्सर्वकारणकारणे ॥ मनोगतिरविच्छि
न्नाखंडिताहैतुकीचया ॥ १४ ॥ यथाऽधावंभसागंगासाभक्तिर्निर्गुणास्मृता ॥ निर्गुणानांचभक्तानांलक्षणंशृणुमानद ॥ १५ ॥ सार्वभौमंपा
रमेष्ठ्यंशक्रधिष्ण्यंतथैवच ॥ रसाधिपत्यंयोगर्द्धिंनवांछंतिहरेर्जनाः ॥ १६ ॥ हरिणादीयमानंवासालोक्यंयादवेश्वर ॥ नगृह्णन्तिकदाचित्ते
तत्संगानंदनिर्वृताः ॥ १७ ॥ सामीप्यंतेनवांछंतिभगवद्विरहातुराः ॥ सन्निकृष्टेनतत्प्रेमयथादूरतरेभवेत् ॥ १८ ॥ सारूप्यंदीयमानंवासमा
नत्वाभिमानिनः ॥ नैरपेक्ष्यान्नगृह्णंतिभक्तास्तत्सेवनोत्सुकाः ॥ १९ ॥ एकत्वंचापिकैवल्यंनवांछंतिकदाचन ॥ एवंचेत्तर्हिदासत्वंक्वस्वामित्वं
परस्यच ॥ २० ॥ निरपेक्षाश्चयेशांतानिर्वैराःसमदर्शिनः ॥ आकैवल्याल्लोकपदग्रहणंकारणंविदुः ॥ २१ ॥ नैरपेक्ष्यंमहानंदोनैरपेक्ष्याजनाहरेः ॥
जानातिहियथानासापुष्पामोदंनचक्षुषी ॥ २२ ॥ सकामाश्चतदानंदंजानंतिहिकथंनच ॥ रसकर्तायथाहस्तोरसस्वादंनवेत्तिहि ॥ २३ ॥
तस्माद्राजन्भक्तियोगंविद्धिचात्यंतिकंपदम् ॥ भक्तानांनिरपेक्षाणांपद्धतिंकथयामिते ॥ २४ ॥ स्मरणंकीर्तनंविष्णोःश्रवणंपादसेवनम् ॥
अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनम् ॥ २५ ॥ कुर्वंतिसततंराजन्भक्तिंयेप्रेमलक्षणाम् ॥ तेभक्तादुर्लभाभूमौभगवद्भावभावनाः ॥ २६ ॥
कुर्वंतोमहतांमानंदयांदीनेषुसर्वतः ॥ समानेषुतथामैत्रींसर्वभूतदयापराः ॥ २७ ॥ कृष्णपादाब्जमधुपाःकृष्णदर्शनलालसाः ॥ कृष्णंस्मरं
तिप्राणेशंयथाप्रोषितभर्तृकाः ॥ २८ ॥ श्रीकृष्णस्मरणाद्येषांरोमहर्षःप्रजायते ॥ आनंदाश्रुकलाश्चैववैवर्ण्यंतुक्वचिद्भवेत् ॥ २९ ॥ श्रीकृ
ष्णगोविन्दहरेब्रुवन्तःश्लक्ष्णयागिरा ॥ अहर्निशंहरौलग्नास्तेहिभागवतोत्तमाः ॥ ३० ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायां श्रीविज्ञानख
ण्डे ना०ब०सं०श्रीवेदव्यासोग्रसेनसंवादेनिर्गुणभक्तियोगवर्णनंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ श्रीव्यासउवाच ॥ ॥ खेवायौसलिलेव

द्यौमह्यांज्योतिर्गणेषुच ॥ श्रीकृष्णदेवंपश्यंतोहर्षिताश्चपुनःपुनः ॥ १ ॥ श्रीकृष्णोराधिकानाथःकोटिकंदर्पमोहनः ॥ तन्नेत्रगोचरोयाति
ब्रुवञ्छ्रीनंदनंदनः ॥ २ ॥ सदानंदंचतेदृष्ट्वाप्रहसंतिप्रहर्षिताः ॥ क्वचिद्रुदंतिधावंतिनंदंतिचवदन्तिच ॥ ३ ॥ क्वचिद्गायंतिनृत्यंतिक्वचित्तू
ष्णींभवंतिच ॥ कृष्णचंद्रस्वरूपास्तेकृतार्थावैष्णवोत्तमाः ॥ ४ ॥ तेषांदर्शनमात्रेणनरोयातिकृतार्थताम् ॥ नकालोनयमोयेषांदंडंदातुंन
चक्षमः ॥५॥ गदाकौमोदकीवामेदक्षिणेचसुदर्शनम् ॥ अग्रेशार्ङ्गंधनुःपश्चात्पांचजन्योघनस्वनः ॥ ६ ॥ नंदकश्चमहाखङ्गःशतचंद्रेषवःशि
ताः ॥ एतान्यायुधमुख्यानितांश्चरक्षंत्यहर्निशम् ॥ ७ ॥ तेषामूर्ध्वंमहापद्मंछायांकर्तुंपुनःपुनः ॥ गरुडःपक्षवातेनश्रमहर्तासतामपि ॥ ८ ॥
यत्रयत्रगताःसंतस्तत्रतत्रस्वयंहरिः ॥ तीर्थीकुर्वन्भूमिभागंश्रीमत्पादाब्जरेणुभिः ॥ ९ ॥ क्षणंयत्रस्थिताःसंतस्तत्रतीर्थानिसंतिहि ॥
तत्रकोपिमृतःपापीयातिविष्णोःपरंपदम् ॥१०॥ दूरात्संप्रेक्ष्यकृष्णेष्टान्नाधयोव्याधयस्तथा ॥ भूतप्रेतपिशाचाश्चपलायंतेदिशोदश ॥११॥
नद्योनदाःपर्वताश्चसमुद्राश्चतथापरे ॥ मार्गंददतिसाधुभ्योनिरपेक्षेभ्यएवच ॥ १२ ॥ साधूनांज्ञाननिष्ठानांविरक्तानांमहात्मनाम् ॥
अजातशत्रूणांतेषांप्रतिबंधोनकुत्रचित् ॥ १३ ॥ शतजन्मतपःपूतोभारतेयाज्ञिकःपुमान् ॥ संगंसलभतेतेषांदुर्लभंपुण्यवर्जितैः ॥ १४ ॥
यस्मिन्कुलेकृष्णभक्तोजायतेब्रह्मलक्षणः ॥ तत्कुलंविमलंविद्धिमलीमसमपिस्वतः ॥ १५ ॥ राजञ्छ्रीकृष्णभक्तस्तुपितॄन्दशकुलोद्भवान् ॥
प्रियापक्षेपिदशचमातृपक्षेतथादश ॥ १६ ॥ पुरुषानुद्धरेद्राजन्निरयात्पापबंधनात् ॥ साधुसंबंधिनश्चान्येभृत्याद्याश्चसुहृज्जनाः ॥ १७ ॥
शत्रवोभारवाहाश्चतद्गृहेपक्षिणस्तथा ॥ पिपीलिकाश्चमशकास्तथाकीटपतंगकाः ॥ १८ ॥ सांख्ययोगंविनाराजंस्तीर्थधर्ममखैर्विना ॥
साधुसंसर्गतस्तेपिप्रयांतिहरिमंदिरम् ॥१९॥ अब्रह्मण्येकृष्णसारेसौवीरेकीटकेतथा ॥ देशेऽपिम्लेच्छेदेवेशभक्तोलोकान्पुनातिहि ॥ २० ॥
इत्थंश्रीकृष्णभक्तानांमाहात्म्यंकथितंमया ॥ चतुःपदार्थदानृणांकिंभूयःश्रोतुमिच्छसि ॥ २१ ॥ ॥ उग्रसेनउवाच ॥ ॥ परिपूर्णतमेसा
क्षाच्छ्रीकृष्णेपरमात्मनि ॥ दंतवक्रस्यदुष्टस्यज्योतिर्लीनंबभूवह ॥ २२ ॥ अहोमहदिदंचित्रंसायुज्यंमहतामपि ॥ योग्यंस्याद्द्विप्रमुख्येंद्र
कथंचानेनशत्रुणा ॥ २३ ॥ ॥ श्रीव्यासउवाच ॥ ॥ ममाहमितिवैषम्यंभूतानांत्रिगुणात्मनाम् ॥ क्रोधाद्यैर्वर्ततेराजन्नहरौपरमात्मनि ॥२४॥

[illegible] ॥ २३ ॥ ॥ श्रीव्यासउवाच ॥ ॥ ममाहिमातिवैषम्यभूतानांत्रिगुणात्मनाम् ॥ क्रोधाद्यैवतेतेराजन्नहरौपरमात्मनि ॥२४॥

हरौकेनापिभावेमनोलग्नंकरोतियः ॥ यातितद्रूपतांसोपिभृंगिणःकीटकोयथा ॥ २५ ॥ स्नेहंकामंभयंक्रोधमैक्यंसौहृदमेवच ॥
कृत्वातन्मयतांयांतिसांख्ययोगंविनाजनाः ॥ २६ ॥ स्नेहान्नंदयशोदाद्यावसुदेवादयोऽपरे ॥ कामाद्गोप्योहरिंप्राप्तानतुब्रह्मतयानृप ॥२७॥
तद्रूपगुणमाधुर्यभावसंलग्नमानसाः ॥ भयात्कंसस्तवसुतस्तत्सायुज्यंजगामह॥२८॥क्रोधादयंदंतवक्रःशिशुपालादयोऽपरे ॥ ऐक्याच्चयाद
वायूयंसौहृदाच्चवयंयथा ॥२९॥ तस्मात्केनाप्युपायेनमनःकृष्णेनिवेशयेत् ॥ अहानशंहिस्मरणंभवेच्छत्रोर्नकस्यचित् ॥ शत्रुभावंहरौतस्मा
त्कुर्वंतिदनुजादयः ॥ ३० ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायांविज्ञानखण्डे श्रीव्यासोग्रसेनसंवादेभक्तमाहात्म्यंनामचतुर्थोऽध्यायः ॥४॥
॥ श्रीवेदव्यासउवाच ॥ ॥ वत्साघधेनुकबकीबककेशिकालारिष्टप्रलंबकपिबल्वलशंखशाल्वाः ॥ वैरेणयंकिमुतभक्तियुतानरेंद्रप्रापुःपरं
प्रकृतिपूरुषयोःपुमांसम् ॥ १ ॥ पूर्वासुरावतिबलौमधुकैटभाख्यौस्वर्णाक्षहेमकशिपूचतथापरौच ॥ वैरंविधायनृपरावणकुंभकर्णौविष्णोःकि
लापतुरलंपरमंपदंहि ॥ २ ॥ केकेनविष्णुपदमागतवंतआदौप्रह्लादबाणबलियक्षविभीषणाद्याः ॥ तत्संगिसंगनिरताबहुमानपात्राःश्रीमत्प
दाब्जमकरंदरजोधिलुब्धाः ॥ ३ ॥ देवर्षिगीष्पतिवसिष्ठपराशराद्याःसांख्यायनासितशुकाःसनकादयश्च ॥ निष्कारणाभुविचरंत्यरविंदने
त्रपादारविंदमकरंदमिलिंदमुख्याः ॥ ४ ॥ यत्युत्कलांगभरतार्जुनमैथिलाश्वगाधिप्रियव्रतयदुप्रमुखांबरीषाः ॥ निष्कारणाःपरमहंसवराश्च
रंतिश्रीकृष्णचंद्रचरितामृतपानमत्ताः ॥ ५ ॥ मंदोदरीचशबरीचमतंगशिष्यातारातथाऽत्रिवनितानिपुणात्वहल्या ॥ कुंतीतथाद्रुपदराज
सुतासुभक्ताएताःपरंपरमहंससमाःप्रसिद्धाः ॥ ६ ॥ सुग्रीववालिसुतवातसुतर्क्षराजनागारिगृध्रवरकाकभुशुंडिमुख्याः ॥ कुब्जादिवायकसु
दामगुहादयोन्येतत्संगमेत्यहरिभक्तवराबभूवुः ॥ ७ ॥ कृष्णंनरोधयतिधर्मतपोनयोगःसांख्यंनयज्ञउततीर्थयमव्रतानि ॥ छंदांसिपूर्तनिय
मौचनदक्षिणाचनेष्टंनदानमथभक्तिमृतेनकश्चित् ॥ ८ ॥ यज्ञव्रताध्ययनतीर्थतपोनियोगैरिष्टस्वधर्मनियमादिकसांख्ययोगैः ॥ यत्प्राप्यते
तदखिलंभवतीहभक्त्याभक्तेःपदंहिकर्हिचिन्नभवेत्किलैभिः ॥ ९ ॥ उद्धारिणीयमधमस्यचविश्वपापादुत्तारिणीभवमहार्णववारिवेगात् ॥
संहारिणीविषयसंचितकर्मणांचसत्कारिणीहरिपदस्यपरात्परस्य ॥ १० ॥ श्रीकृष्णदर्शनरसोत्सुकभावराजदुद्यद्वसंतपरमोत्सवपंचमीयम्॥

दिव्यालतातिफलपल्लवभारनम्रासंराजतेहिसततंकुसुमाकरस्य॥ ११॥ संमोहकालघनमध्यतडित्स्फुरंतीशास्त्रार्थदर्शवचसांपददीपिकेयम् ॥ दीपावलिर्विजयतेजयकार्तिकस्यजेतुंगुणान्विजयिनोदशमीजयस्य ॥ १२ ॥ सांख्यंचयोगइइतिपार्श्वगतेहिदंडेकीलानिचात्रशतशोगुण भावभेदाः ॥ अस्याःक्रमान्नवकथाश्रवणादयश्चश्रेणीयमस्तिसरलाभगवत्पदस्य ॥ १३ ॥ इ०ग०सं०श्रीविज्ञा०व्यासोग्रसेनसंवादेभक्त्यु त्कर्षवर्णनंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ उग्रसेनउवाच ॥ ॥ कर्मग्रहोगृहस्थोयंश्रीकृष्णस्यमहात्मनः ॥ सेवांवैकेनविधिनाकुर्यात्तद्ब्रूहि मेमुने ॥ १ ॥ भक्त्यंकुरोयस्यनास्तिवास्तितस्यनवर्द्धते ॥ तस्यकेनप्रकारेणप्रसन्नःस्याद्धरिःस्वयम् ॥ २ ॥ श्रीव्यासउवाच ॥ ॥ य दिभक्त्यंकुरोनस्यात्सत्संगेनप्रजायते ॥ बलाद्विवर्द्धतेतस्मात्सतांसंगंसमाचरेत् ॥ ३ ॥ कृष्णसेवाविधिंतुभ्यंवक्ष्यामिसुलभंपरम् ॥ यथागृ हस्थोयंशीघ्रंश्रीकृष्णंप्राप्नुयान्नृप ॥ ४ ॥ आचार्य्यंकुलसम्भूतंश्रीकृष्णध्यानतत्परम् ॥ एतादृशंगुरुंकृत्वासिद्धोभवतिमानवः ॥ ५ ॥ वि ष्णुदीक्षाविहीनस्यश्राद्धसंकल्पएवच ॥ यज्ञोदानंतपस्तीर्थंसर्वंभवतिनिष्फलम् ॥ ६ ॥ विष्णुसेवाधिकारोस्यकथंभवतिपार्थिव ॥ निर्गु रोर्दर्शनंकृत्वाहतपुण्योभवेन्नरः ॥ गुरोःसेवाविधिंशिक्षेच्छ्रीकृष्णस्यमहात्मनः ॥ ७ ॥ उत्तराभिमुखंशश्वत्कारयेद्धारिमंदिरम् ॥ तत्रसिंहा सनंप्रोच्चंसपीठंकुम्भमण्डितम् ॥ ८ ॥ सच्चिदानन्दनामस्यात्सोपानत्रयभूषितम् ॥ महार्हवस्त्रैराच्छन्नंतत्रतूल्यासनंमृदु ॥ ९ ॥ पार्श्वोपबर्ह णावीतंस्फुरद्धेमांबरावृतम् ॥ नानाचित्रयुतैःकुडचैरन्तःपटसमन्वितैः ॥ १० ॥ सर्वतोमण्डलैस्तद्वत्तोरणैःसमलंकृतम् ॥ गवाक्षवारियन्त्रा ढ्यंचतुःशालसुजालकैः ॥ ११ ॥ राजतेप्राङ्गणोद्देशःसभामण्डपमण्डलैः ॥ तत्रप्राङ्गणमध्येतुतुलसीमन्दिरंशुभम् ॥ १२ ॥ मन्दिरस्यब हिर्द्वारिकारयेच्चद्विपद्वयम् ॥ तथावैकृत्रिमंराजन्सिंहद्वयमधिष्ठितम् ॥१३॥ सुवर्णशिखरस्याधश्चक्रंचशिखरोपरि ॥ द्वारेपिहरिनामानिप्रा लेख्यानिशुभानिच ॥ १४ ॥ शंखंपद्मंगदांशार्ङ्गंमालेख्यंभित्तिपार्श्वयोः ॥ इषुधीचतथाबाणाःसव्येदक्षिणएवच ॥ १५ ॥ तथामंदिरपृष्ठे वैशतचंद्रंचनंदकम् ॥ हलंचमुसलंचैवलेखनीयंप्रयत्नतः ॥१६॥ सिंहासनस्यपृष्ठेतुगोप्योगावस्तथैवच ॥ गोपालास्तत्रसोपानेकपाटेविज योजयः॥१७॥ देहल्यांकल्पवृक्षश्चस्तंभेषुचलताःशुभाः॥ यत्रतत्रचकुडचेषुश्रीगंगापापहारिणी॥ १८॥ वृंदावनंगोवर्द्धनंयमुनापुलिनानिच ॥

यत्रतत्रचकुंडेषुश्रीगंगापापहारिणी॥१८॥ वृंदावनंगोवर्द्धनंयमुनापुलिनानिच॥

तथावेचीरहरणमालेख्यंरासमण्डलम्॥१९॥ चित्रकूटःपंचवटीलेखनीयंप्रयत्नतः॥ रामरावणयोर्युद्धंजानकीहरणंविना॥२०॥ दशावतारचि
त्राणिनरनारायणाश्रमः॥ सप्तपुर्य्यस्त्रयोग्रामानवारण्यंनवोषराः॥२१॥ एवंलिखित्वाचित्राणिमंदिरंकारयेद्बुधः॥ वंशीभावोद्यतकरंवक्रीभूतां
घ्रिदक्षिणम्॥२२॥ किशोराकृतिकृष्णस्यरूपंसेव्यतमंस्मृतम्॥ तत्प्रतिष्ठांविधायाशुगुरुहस्तेनमंदिरे॥२३॥भक्तःपरमयाभक्त्यास्थापयेत्तत्प
रोभवेत्॥ तत्प्रसादेचरसनांघ्राणंतत्तुलसीदले॥ न्यसेत्कर्णौतच्छ्रवणएवंसेवापरोभवेत्॥२४॥ अहर्निशंकृष्णसेवांयःकरोतिचभाववित्॥ तंप्रे
मलक्षणंभक्तंविदुर्भागवतोत्तमम्॥२५॥अश्वमेधसहस्राणिराजसूयशतानिच॥ राजञ्छ्रीकृष्णसेवायाःकलांनार्हंतिषोडशीम्॥२६॥ श्रीकृष्ण
देशिकस्यापियःकुर्याद्दर्शनंनरः॥ कोटिजन्मकृतैःपापैर्मुच्यतेनात्रसंशयः॥२७॥ देहांतेतंसमानेतुंश्यामसुन्दरविग्रहाः॥ रथंनीत्वाप्रधावंतिगो
लोकात्कृष्णपार्षदाः॥२८॥ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीविज्ञानखण्डेनारदबहुलाश्वव्यासोग्रसेनसंवादेहरिमंदिरप्रतिष्ठावर्णनंनामषष्ठोऽ
ध्यायः॥६॥ श्रीवेदव्यासउवाच॥ ॥ब्राह्मेमुहूर्तेचोत्थायकशिपोश्चमुदानृप॥ गुरोर्नामचगोविंदनामानिप्रवदन्मुहुः॥१॥ भूमिंनत्वान्यसेत्पादं
जलंस्पृष्ट्वाहरेर्जनः॥ उपविश्यासनेशीघ्रंसकामोयोयथासुखम्॥२॥ हस्तावुत्संगआधायश्वासजिद्ध्यानमास्थितः॥ ज्ञानमुद्राधरंशां
तंश्रीगुरुंस्वस्तिकासनम्॥३॥ ध्यात्वाकृष्णंपरंध्यायेद्भक्तएकाग्रमानसः॥ किशोरंश्यामलंहृद्यंवंशीवेत्रविभूषितम्॥४॥ एवंकृत्वाहरे
र्ध्यानंपुनर्गच्छेद्बहिःस्थलम्॥ तच्छौचंशृणुराजेंद्रगृहस्थस्ययथातथम्॥५॥ अश्वक्रांतेतिमंत्रेणमृत्स्नयाचजलेनच॥ एकालिंगेगुदेतिस्र
स्तथावामकरेदश॥६॥ उभयोर्हस्तयोःसप्ततिस्रस्तिस्रःपदेपदे॥ एतद्धिद्विगुणंप्रोक्तंब्रह्मचारिवनस्थयोः॥७॥ यतेश्चतुर्गुणंरात्रौतदर्धं
शौचमाचरेत्॥ तदर्धंरोगिपांथानांस्त्रीशूद्राणांतदर्धकम्॥८॥ शौचकर्मविहीनस्यसकलानिष्फलाःक्रियाः॥ मुखशुद्धिविहीनस्यमंत्रा
नफलदाःस्मृताः॥९॥ आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच॥ ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते॥१०॥ इतिमंत्रंसमुच्चार्यकुर्य्या
द्दंतधावनम्॥ कण्टकीक्षीरिकार्पासनिर्गुण्डीब्रह्मवृक्षकान्॥११॥ वटैरण्डविगन्धाढ्यान्वर्जयेद्दन्तधावने॥ हरितहयमंत्रेणसूर्यंनत्वा
कृतांजलिः॥१२॥ प्रणमेद्धरिभक्तांश्चप्रह्लादादीन्समाहितः॥ तुलसीमृत्तिकांनीत्वाततःस्नानंसमाचरेत्॥१३॥ पठितव्यंप्रयत्नेन

श्रीगंगायमुनाष्टकम् ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिका ॥ पुरीद्वारावतीचैवसप्तैतामोक्षदायिकाः ॥ १४ ॥ शालिग्रामोमहायोगे
शंभलोहरिमंदिरे ॥ नंदिग्रामःकोसलेतुत्रयोग्रामाःप्रकीर्तिताः ॥ १५ ॥ दंडकंसैंधवारण्यंजंबूमागचपुष्करम् ॥ उत्पलावर्तमारण्यंनैमिषंकु
रुजांगलम् ॥ १६ ॥ अर्बुदंहेमवंतंचनवारण्यानिवैविदुः ॥ एतानितीर्थनामानिसमुच्चार्यपुनःपुनः ॥१७॥ इत्थंस्नात्वाततोबिभ्रदंबरंक्षौममु
त्तमम् ॥ द्वादशान्तिलकान्बिभ्रदष्टमुद्राधरःपरः ॥ १८॥ कृतसंध्यःशुचिर्मौनीगत्वाश्रीकृष्णमंदिरम् ॥ घंटानादंजयारावंतलशब्दंविधाय
च ॥ १९ ॥ उत्तिष्ठोत्तिष्ठगोविंदयोगनिद्रांविहायच ॥ उक्त्वापीमांस्मृतिंराजन्भक्तउत्थापयेद्धरिम् ॥२० ॥ मङ्गलार्तिक्यमादायभ्रामयंस्त
न्मुखोपरि ॥ निवेद्यबहुपक्वान्नंनत्वानत्वापुनःपुनः ॥ २१ ॥ ततःस्नानंकारयित्वादेशकालप्रभाववित् ॥ शृंगारंभाववित्कृत्वावस्त्रभूषण
मंगलैः ॥ २२ ॥ आर्तिक्यंतुततःकृत्वाभोगान्पश्चविधायच ॥ ततोधृत्वामहाभोगंनानारसमयंपरम् ॥ २३ ॥ राजभोगार्तिकंकृत्वाकारये
च्छयनंहरेः ॥ ततःप्रसादंपरमंतुलसीगंधमिश्रितम् ॥ २४ ॥ भुंजीतयोहरेर्नित्यंसकृतार्थोनसंशयः ॥ राजभोगार्तिकंकृत्वाकारयेच्छयनंह
रेः ॥ २५ ॥ चतुर्घटयवशेषेतुदिनउत्थापयेद्धरिम् ॥ शंखनादेनविधिवद्भोगंधृत्वायथातथम् ॥ २६ ॥ ततःसंध्यार्तिकंकृत्वादुग्धादीनि
निवेद्यच ॥ ततःप्रदोषसमयेपुनरार्तिक्यमाचरेत् ॥ २७ ॥ धृत्वाभोगंपरंमिष्टंकारयेच्छयनंहरेः ॥ राजसेचैवराजेंद्रराजसेवेयमस्तिवै
॥ २८ ॥ एवंश्रीकृष्णचंद्रस्यसेवासंलग्नमानसः ॥ तारयित्वाकुलशतंयातिचात्यंतिकंपदम् ॥ २९ ॥ कृष्णजन्माष्टमीचैवश्रीरामनवमीत
था ॥ राधाष्टम्यन्नकूटश्चद्वादशीवामनस्यच ॥ ३० ॥ चतुर्दशीनृसिंहस्यतथानंतचतुर्दशी ॥ एषुकालेषुकृष्णस्यमहापूजांसमाचरेत् ॥
॥ ३१ ॥ इति श्रीमद्गर्गाचार्यसंहितायांविज्ञानखण्डेव्यासोग्रसेनसंवादेराजसेवावर्णनंनामसप्तमोऽध्यायः ॥७॥ ॥ व्यासउवाच ॥ ॥ अ
थस्नात्वाचकृत्वाथनित्यनैमित्तिकींक्रियाम् ॥ पञ्चवर्णसमायुक्तेशुद्धेस्थंडिलमंडले ॥१॥ द्वात्रिंशद्दलसंयुक्तंकर्णिकाकेसरोज्ज्वलम् ॥ विधा
यकमलंदिव्यंविधिवद्वेदसूक्तिभिः ॥ २ ॥ कर्णिकायांन्यसेद्राजन्हरेःसिंहासनंशुभम् ॥ तत्राधारंमांस्थाप्यभूदेवींविरजांतथा ॥ ३ ॥ तन्म
ध्येस्थापयेत्साक्षाच्छ्रीकृष्णंपुरुषोत्तमम् ॥ तथाष्टदलमध्येतुराधिकाष्टसखीःशुभाः ॥ ४ ॥ ततोष्टदलमध्येतुश्रीकृष्णस्यतथासखीन् ॥

तथाषोडशपर्णेषुसखीनांचद्वयंद्वयम् ॥५॥ कमलस्यचपार्श्वेषुशंखंचक्रंगदांतथा ॥ पद्मंचनंदकंशार्ङ्गंबाणांश्चमुसलंहलम् ॥६॥ कौस्तुभंवनमालांचश्रीवत्सनीलमंबरम् ॥ पीतांबरंतथावंशींवेत्रंचस्थापयेद्बुधः ॥ ७ ॥ ततःपार्श्वेषुतालांकंगरुडांकंरथंतथा ॥ सुमतिंदारुकंसूतंगरुडंकुमुदंतथा ॥ ८ ॥ नंदंसुनंदंचंडंचप्रचंडंचमहाबलम् ॥ कुमुदाक्षंबलंचैवस्थापयेद्यत्नतःसुधीः ॥ ९ ॥ तथादिक्षुचदिक्पालान्संस्थाप्यचपृथक्पृथक् ॥ विष्वक्सेनंशिवंमांचविधिंदुर्गांविनायकम् ॥ १० ॥ नवग्रहांश्चवरुणंतथाषोडशमातृकाः ॥ तत्पद्माग्रेवीतिहोत्रंस्थंडिलेस्थापयेद्बुधः ॥ ११ ॥ आवाहनमासनंचपाद्यमर्घ्यंविशेषतः ॥ स्नानंचमधुपर्कंचधूपंदीपंतथैवच ॥ १२ ॥ यज्ञोपवीतंवस्त्रंचभूषणंगंधमेवच ॥ पुष्पंतथाक्षतांश्चैवनैवेद्यंचमनोहरम् ॥ १३ ॥ जलमाचमनंचैवतांबूलंदक्षिणांतथा ॥ प्रदक्षिणांप्रार्थनांचतथानीराजनंस्मृतम् ॥ १४ ॥ नमस्कारंततःकुर्यात्क्रमेणचपृथक्पृथक् ॥ आवाहनेतुपुष्पाणिआसनेतुकुशद्वयम् ॥ १५ ॥ पाद्येश्यामाचदूर्वाचविष्णुक्रांतातथैवच ॥ सौगंधिकानिपुष्पाणिह्यर्घ्येयोग्यानियादव ॥ १६ ॥ चंदनोशीरकर्पूरकुंकुमागुरुमिश्रितम् ॥ एतादृशंजलंयोग्यंस्नानेराजन्महामते ॥ १७ ॥ मधुपर्कंह्यामलकमरविंदंतथामतम् ॥ धूपेगंधाष्टकंदेयंदीपेकर्पूरमेवच ॥ १८ ॥ यज्ञोपवीतंपीतंचवस्त्रेपीतांबरंमतम् ॥ भूषणेचैवसौवर्णंगंधेकुंकुमचंदने ॥ १९ ॥ तुलसीमंजरीपुष्पेऽक्षतेषुशालितंडुलाः ॥ नैवेद्येतुरसाःषट्चभोगानानाविधामताः ॥ २० ॥ जलेगंगाजलंयोग्यंयमुनाजलमेवच ॥ जातीफलंचकंकोलंमतमाचमनेनृप ॥ २१ ॥ तांबूलेचोषणंत्वेलादक्षिणायांतुहाटकम् ॥ प्रदक्षिणायांभ्रमणंघृतंनीराजनेगवाम् ॥ २२ ॥ प्रार्थनायांहरेर्भक्तिःप्रेमलक्षणसंयुता ॥ नमस्कारेमहाराजसाष्टांगनतविग्रहः ॥ २३ ॥ द्वादशाक्षरमंत्रेणशिखांबद्ध्वाशुचिःपुमान् ॥ उपचारान्पुरस्कृत्यश्रीमुखेसंमुखोभवेत् ॥ २४ ॥ इति श्रीमद्ग० सं० वि० खंडे व्यासोग्रसेनसंवादेमहापूजाविधिवर्णनंनामाष्टमोऽध्यायः॥८॥ श्रीव्यासउवाच ॥ उपचारस्यमन्त्राणिवेदोक्तानिशुभानिच ॥ तुभ्यंवक्ष्यामिराजेंद्रशृणुष्वैकाग्रमानसः ॥१॥ अथावाहनम् ॥ श्रीगोलोकधामाधिपतेरमापतेगोविंददामोदरदीनवत्सल ॥ राधापतेमाधवसात्वतांपतेसिंहासनेस्मिन्ममसंमुखोभव ॥२॥ अथासनम् ॥ श्रीपद्मरागस्फुरदूर्ध्वपृष्ठंमहार्हवैडूर्यखचितपदाब्जम् ॥ वैकुण्ठवैकुण्ठपतेगृहाणपीठंतडिद्धाटककुम्भखण्डम् ॥ ३ ॥ ॥ अथपाद्यम् ॥ परं

स्थितंनिर्मलरौक्मपात्रेसमाहृतंबिंदुसरोवराद्धि ॥ योगेशदेवेशजगन्निवासगृहाणपाद्यंप्रणमामिपादौ ॥ ४ ॥ अथार्घ्यम् ॥ जलजचम्प कपुष्पसमन्वितंविमलमर्घ्यमनर्घ्यंदरस्थितम् ॥ प्रतिगृहाणरमारमणप्रभोयदुपतेयदुनाथयदूत्तम ॥ ५ ॥ अथस्नानम् ॥ काश्मीरपाटीर विमिश्रितेनसुमल्लिकोशीरवताजलेन ॥ स्नानंकुरुत्वंयदुनाथदेवगोविन्दगोपालकतीर्थपाद ॥ ६ ॥ ॥ अथमधुपर्कस्नानम् ॥ मध्याह्न चण्डार्कभवश्रमापहंसितांगसंपर्कमनोहरंपरम् ॥ गृहाणविष्णोमधुपर्कमाहृतंसंदृश्यपीताम्बरसात्वतांपते ॥ ७ ॥ ॥ अथवस्त्रम् ॥ ॥ विभो सर्वतःप्रस्फुरत्प्रोज्वलंचस्फुरद्रश्मिशून्यंपरंदुर्लभञ्च ॥ स्वतोनिर्मितंपद्मकिंजल्कवर्णंगृहाणांबरंदेवपीताम्बराख्यम् ॥ ८ ॥ अथयज्ञोप वीतम् ॥ सुवर्णाभमापीतवर्णंसुमन्त्रैःपरंप्रोक्षितंवेदविनिर्मितञ्च ॥ शुभम्पञ्चकार्येषुनैमित्तिकेषुप्रभोयज्ञयज्ञोपवीतंगृहाण ॥ ९ ॥ ॥ अथ भूषणम् ॥ कनकरत्नमयंमयनिर्मितंमदनरुक्कदनंसदनंरुचाम् ॥ उषसिपूषसवर्णविभूषणंसकललोकविभूषणगृह्यताम् ॥ १० ॥ ॥ अथगंधम् ॥ ॥ शंखेंदुशोभंबहुमङ्गलंश्रीकाश्मीरपाठीरकपंकपृक्तम् ॥ सुमण्डनंगन्धचयंगृहाणसमस्तभूमण्डलभारहारिन् ॥ ११ ॥ अथाक्षतान् ॥ ॥ ब्रह्मावर्तैर्ब्रह्मणापूर्वमुक्तान्ब्राह्मैस्तोयैःसिञ्चितान्विष्णुनाच ॥ रुद्रेणाराद्रक्षितान्राक्षसेभ्यःसाक्षाद्भूमन्नक्षतांस्त्वंगृहाण ॥ ॥ १२ ॥ ॥ अथपुष्पाणि ॥ मन्दारसंतानकपारिजातकल्पद्रुमश्रीहरिचंदनानाम् ॥ गृहाणपुष्पाणिहरेतुलस्यामिश्राणिसाक्षान्नवमंजरीभिः ॥ १३ ॥ अथधूपम् ॥ लवङ्गपाटीरजचूर्णमिश्रंमनुष्यदेवासुरसौख्यदञ्च ॥ सद्यःसुगन्धीकृतहर्म्यदेशंद्वारावतीभूपगृहाणधूपम् ॥ १४ ॥ अथदीपम् ॥ तमोहारिणंज्ञानमूर्तिंमनोज्ञंलसद्वर्तिकर्पूरपूरंगवाज्यम् ॥ जगन्नाथदेवप्रभोविश्वरूपस्फुरज्ज्योतिषंदीपमुख्यंगृहाण ॥ १५ ॥ अथनैवेद्यम् ॥ रसैःशरैर्भेदविधिव्यवस्थितंरसैरसाढ्यंचयशोमतीकृतम् ॥ गृहाणनैवेद्यमिदंसुरोचितंगव्यामृतंसुन्दरनन्दनन्दन ॥ १६ ॥ ॥ अथजलम् ॥ गंगोत्तरीवेगबलात्समुद्धृतंसुवर्णपात्रेणहिमांशुशीतलम् ॥ सुनिर्मलाभंह्यमृतोपमंजलंगृहाणराधावरभक्तवत्सल ॥ १७ ॥ अथाचमनम् ॥ ॥ राधापतेश्रीविरजापतेप्रभोश्रियःपतेसर्वपतेचमूपते ॥ कंकोलजातीफलपुष्पवासितंपरंगृहाणाचमनंदयानिधे ॥ १८ ॥ ॥ अथताम्बूलम् ॥ ॥ जातीफलैलासुरपुष्पयुक्तंजावित्रिपूगीफलपत्रवृन्दम् ॥ मुक्तासुधाखादिरसारयुक्तंगृहाणताम्बूलमिदंरमेश ॥ १९ ॥

...फलपत्रवृन्दम् ॥ मुक्तासुधाखादिरसारयुक्तंगृहाणताम्बूलमिदंरमेश ॥ १९ ॥

॥ अथदक्षिणा ॥ ॥ नाकपालवसुपालमौलिभिर्वंदितांघ्रियुगलप्रभोहरे ॥ दक्षिणांपरिगृहाणमाधवलोकदक्षवरदक्षिणापते ॥ २० ॥ ॥
अथप्रदक्षिणा ॥ ॥ समस्ततीर्थयज्ञदानपूर्तकादिजंफलम् ॥ लभेत्परस्यशाश्वतंकरोतियःप्रदक्षिणाम् ॥ २१ ॥ ॥ अथनीराजनम् ॥ ॥
प्रस्फुरत्परमदीप्तिमंगलंगोघृताक्तनवपञ्चवार्तिकम् ॥ आर्तिकंपरिगृहाणचार्तिहन्पुण्यकीर्तिविशदीकृतावने ॥ २२ ॥ ॥ अथप्रार्थना ॥
हरेमत्समःपातकीनास्तिभूमौतथात्वत्समोनास्तिपापापहारी ॥ इतित्वंचमत्वाजगन्नाथदेवयथेच्छाभवेत्तेतथामांकुरुत्वम् ॥ २३ ॥ ॥ नम
स्कारः ॥ ॥ नमोस्त्वनन्तायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वतेसहस्रकोटीयुगधारिणेनमः ॥ २४ ॥
॥ अथस्तुतिः ॥ संज्ञानमात्रंसदसत्परंमहच्छश्वत्प्रशांतंविभवंसमंमहत् ॥ त्वांब्रह्मवंदेहिसुदुर्गमंपरंसदास्वधाम्नापरिभूतकैतवम् ॥ २५ ॥
एवंसंपूज्यदेवेशमेभिर्मंत्रैर्महामते ॥ प्रणम्यविष्णुंसर्वांगपूजांकुर्यात्प्रयत्नतः ॥ २६ ॥ ॐनमोनारायणायपुरुषायमहात्मने ॥ विशुद्धसत्त्व
धिष्ण्यायमहाहंसायधीमहि ॥ २७ ॥ इतिमंत्रेणप्राणायामंकृत्वा ॥ ॥ ॐ विष्णवे मधुसूदनाय वामनाय त्रिविक्रमाय श्रीधराय हृषीके
शाय पद्मनाभाय दामोदराय संकर्षणाय वासुदेवाय प्रद्युम्नाय अनिरुद्धाय अधोक्षजाय पुरुषोत्तमाय श्रीकृष्णाय नमः ॥ इतिपादगुल्फ
जानूरुकट्युदरपार्श्वपृष्ठभुजाकन्धरकर्णनासिकाधरनेत्रशिरस्सुपृथक्पृथक्पूजयामीतिसर्वांगपूजांकुर्यात् ॥ तथासखीसखशंखचक्रगदाप
द्मासिधनुर्बाणहलमुसलादीन् ॥ तथाकौस्तुभवनमालाश्रीवत्सपीताम्बरनीलाम्बरवंशीवेत्रादीन् ॥ तथातालांकगरुडांकरथदारुकसुम
तिसारथिगरुडकुमुदनन्दसुनन्दचण्डमहाबलकुमुदाक्षबलादीन् ॥ प्रणवपूर्वेणचतुर्थ्यंतेननमःसंयुक्तेननाम्नातथाविष्वक्सेनशिवरमावि
धिदुर्गाद्रिनायकदिक्पालवरुणनवग्रहमातृकादीन्मंत्रैःपूजयेत् ॥ पुनःपरिसमूहनादिस्थालीपाकविधानेनवैश्वानरंसंपूज्य ॥ ॐ नमोवासु
देवायनमः संकर्षणायच ॥ प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः ॥२८॥ इति मंत्रेणशतमाहुतीर्जुहुयात् ॥ देवंप्रदक्षिणीकृत्यमहाभोगंनि
धायच ॥ प्रणमेद्दंडवद्भूमौमंत्रमेतदुदीरयेत् ॥ २९ ॥ ध्येयंसदापरिभवघ्नमभीष्टदोहंतीर्थास्पदंशिवविरंचिनुतंशरण्यम् ॥ भृत्यार्तिहन्प्रण
तपालभवाब्धिपोतंवंदेमहापुरुषतेचरणारविंदम् ॥ ३० ॥ इतिनत्वाहरिंराजन्पुनर्नीराजनंहरेः ॥ कारयेद्विधिवद्भक्तोहरिभक्तजनैःसह ॥ ३१ ॥

घंटावाद्यरणद्धंटाकांस्यवीणादिकीचकैः ॥ करतालमृदंगाद्यैःकीर्तनंकारयेद्बुधः ॥ ३२ ॥ नृत्यंतिश्रीहरेरग्रेभक्तावैप्रेमविह्वलाः ॥ जयध्वनिसमायुक्ताःसत्कथागानतत्पराः ॥ ३३ ॥ पुनःप्रसुंनमस्कृत्यमंदिरेशयनोज्ज्वले ॥ शयनंकारयेत्सम्यक्छ्रीकृष्णस्यमहात्मनः ॥ ॥३४॥एवंकरोतिश्रीकृष्णसेवांयोलग्नमानसः॥प्रणमंतिचतंराजन्देवताःस्वर्गसंभवाः॥३५॥सोपिराजेंद्रनाकेपिपदंधृत्वाहरेर्जनः ॥ अंतेयाति परंधामगोलोकंयोगिदुर्लभम्॥३६॥इतिश्रीकृष्णसेवायाविधानंवर्णितंमया ॥ चतुष्पदार्थदंनृणांकिंभूयःश्रोतुमिच्छसि॥३७॥ इतिश्रीमद्गर्गसं॰ विज्ञानखंडेव्यासोग्रसेनसंवादेपूजनप्रकारवर्णनंनामनवमोऽध्यायः॥९॥उग्रसेनउवाच॥ सिद्धोस्म्यनुगृहीतोस्मित्वयाश्रीकृष्णरूपिणा॥ श्रीकृष्णपद्धतिःसाक्षाच्छ्रुतावैविधिवन्मया॥१॥अहोलोकामहामूढालोभमोहमदान्विताः॥ नाप्नुवंतिहिवैराग्यंभजंतिनहरिंक्वचित ॥२॥ भगवन्नस्यजगतोमोहकारणमद्भुतम् ॥ कथंजातंवदविभोकथमेतन्निवर्तते॥३॥व्यासउवाच॥यथांभसिप्रान्तमदोविधोःस्वतस्तत्प्रेंखतेकेवलमेव वेगतः॥तथाहिबिंबःपरमस्यमाययाममेत्यहंभावगतेःप्रवर्तते॥४॥प्रधानकालाजयदेहजैर्गुणैःकुर्वन्विकर्माणिजनोनिबद्धयते ॥ काचेर्भकंसैकतएवजीवनंगुणेचसर्पंप्रतनोतिसोक्षिभिः॥५॥राजञ्जगन्मोहमयंरजोमयंतमोमयंसत्त्वमयंतथाक्वचित् ॥ मनोविलासंविकृतंचविभ्रमंविद्धयाश्विदंलोलमलातचक्रवत् ॥ ६ ॥ इदंकरिष्यामिकरोम्यभूवंममेदमस्तीतितवेदमब्रुवन् ॥ अहंसुखीदुःखयुतःसुहृज्जनोलोकस्त्वहंकारविमोहितोमतः ॥७॥ उग्रसेनउवाच ॥ वदमेकृपयाब्रह्मँल्लक्षणंपरमात्मनः ॥ कतिधाकवयःकृष्णंवदंतिजयवर्त्मभिः ॥८॥ ॥श्रीव्यासउवाच॥ सनातनस्यात्रनमृत्युजन्मनीनशोकमोहौनजरायुवादयः ॥ अहंमदोव्याधियुतोभयंसुखंशुचःक्षुधेच्छानरतिर्नचाधयः ॥ ९ ॥ आत्मानिरीहोह्यतनुःससर्वगोनाहंकृतिःशुद्धमयोगुणाश्रयः ॥ स्वयंपरोनिष्कलआत्ममंगलोज्ञानात्मकोयोविदितोमुनीश्वरैः ॥ १० ॥ जागर्तियोस्मिन्छयनंगतेसतिनायंजनोवेदसवेदतंहितम् ॥ पश्यंतमाद्यंपुरुषंह्ययंजनोनपश्यतिस्वक्षमलंचतंभजे ॥ ११ ॥ यथानभोग्निःपवनोनसज्जते घटेनकाष्ठेनरजोभिरावृतः ॥ तथापुमान्सर्वगुणैश्चनिर्मलोवर्णैर्यथास्यात्स्फटिकोमहोज्ज्वलः ॥ १२ ॥ व्यंग्येनवालक्षणयाचवाक्पथैरर्थैःपदस्फोटपरायणैःपरम् ॥ नज्ञायतेतद्ध्वनिनोत्तमेनसद्वाच्यंततोत्रह्मकुतस्तुलौकिकैः ॥ १२ ॥ वदंतिकेचिद्बुविकर्मकर्तृयत्कालंचकेचित्प

पदस्फोटपरायणःपरम् ॥ नह्यायततद्वानिनोत्तमनसद्वाच्यंततोब्रह्मकुतस्तुलौकिकैः ॥ १२ ॥ वदंतिकेचिद्बुविकर्मकर्तृयत्कालंचकेचित्प

रियोगमेवतत् ॥ केचिद्विचारंप्रवदन्तियच्चतद्ब्रह्मेतिवेदांतविदोवदंतिहि ॥ १४ ॥ यंनस्पृशंतीहगुणानकालजामायेंद्रियंचित्तमनोनबुद्धयः ॥
महन्नवेदोवदतीतितत्परंविशंतिसर्वेनलविस्फुलिंगवत् ॥ १५ ॥ हिरण्यगर्भंपरमात्मतत्त्वंयद्वासुदेवंप्रवदंतिसंतः ॥ विचार्य्यतद्देववरस्यरू
पंविसृज्यमोहंविचरेदसंगः ॥१६ ॥ यथेंदुरेकोजलपात्रवृन्दगोयथाग्निरेकोविदितःसमिच्चये ॥ तथापरात्माभगवाननेकवदंतर्बहिःस्यात्सुकृ
तेषुदेहिषु ॥ १७॥ सूर्योदयेसर्वतमोविलीयतेप्रदृश्यतेवस्तुगृहेयथाजनैः ॥ ज्ञानोदयेऽज्ञानतमःप्रलीयतेसंप्राप्यतेब्रह्मपरंतनौतथा ॥ १८॥
यथेंद्रियाणांचपृथक्प्रवृत्तिभिर्नानेर्यतेर्थोतिगुणाश्रयःपरः ॥ एकंह्यनंतस्यपरस्यधामतत्तथामुनीनांकिलशास्त्रवर्त्मभिः ॥ १९ ॥ साक्षा
द्धरिर्यःपुरुषोत्तमोत्तमःश्रीकृष्णचंद्रोनिजभक्तवत्सलः ॥ कैवल्यनाथोनृगमुञ्जहारतंपूर्णस्वयंब्रह्मपरंनमाम्यहम् ॥ २० ॥ श्रीनारदउवाच ॥
इत्युक्त्वातमनुज्ञाप्यभगवान्बादरायणिः ॥ पश्यतांयादवानाञ्चतत्रैवांतरधीयत ॥ २१ ॥ इदंमयातेकथितंहरिभक्तिविवर्द्धन
म् ॥ विज्ञानखण्डंविशदंश्रोतृणांमोक्षदंस्मृतम् ॥ २२ ॥ गर्गाचार्येणकथितानाम्नेयंगर्गसंहिता ॥ सर्वदोषहरापुण्याचतुर्वर्गफलप्रदा ॥२३॥
गोलोकवृन्दावनयोर्गिरीश्वरमाधुर्ययोःश्रीमथुरापुरस्यच ॥ द्वारावतीविश्वजितोर्हलायुधविज्ञानयोःखण्डचयाःपृथङ्नव ॥ २४ ॥ श्रीकृ
ष्णमूर्तिःपरमैरसैर्यथायथाचभूमिर्भरतादिभिर्भृशम् ॥ तथाहिशश्वन्मुनिगर्गसंहिताविभातिखंडैर्नवभिर्नृपेश्वर ॥ २५॥ यथाहिरत्नैर्नवभि
र्विराजतेदेवांगुलौतप्तसुवर्णमुद्रिका ॥ तथाचतुर्वर्गफलप्रदेर्विधौसर्गैर्विसर्गैर्मुनिगर्गसंहिता ॥ २६ ॥ नरेंद्रशश्वन्मुनिसंहितायानवाहयज्ञे
नजनाःपुनीताः ॥ इहैवसौख्यंपरमाप्नुवन्तस्ततस्तुगोलोकपुरंप्रयांति ॥ २७ ॥ कृत्वाथपट्टाम्बरबन्धनंत्विमांशृणोतिवन्ध्याबहुलालसाभृ
शम् ॥ ह्रस्वेनकालेनगृहांगणेशिशून्सँल्लालयंतीविचरत्यहार्निशम् ॥ २८ ॥ रोगीपुमान्रोगगणात्प्रमुच्यतेभीतोभयाद्बन्धगतश्चबन्धना
त् ॥ श्रुत्वाकथांनिर्धनएतिवैभवंमूर्खोभवेत्पण्डितएवसत्वरम् ॥ २९ ॥ यःकार्तिकेमासिनृपःश्रियायुतःशृणोतिशश्वन्मुनिगर्गसंहिताम् ॥ स
चक्रवर्तीभवितानसंशयोनरेंद्रहस्तोद्धृतचारुपादुकः ॥ ३० ॥ मनोजवैःसिंधुतुरङ्गमैर्नवैर्द्विपैश्चविंध्याचलसंभवैःपरैः ॥ वैतालिकोद्गीतय
शामहीतलेनिषेवितोवारवधूजनैःसह ॥ ३१ ॥ सुवर्णशृंगाम्बरताम्रपृष्ठंसंभूषणंरौप्यखुरंसवत्सम् ॥ ददातिखण्डंप्रतिगोद्वयंयःप्राप्नोतिसर्वं

हिंमनोरथंसः ॥ ३२ ॥ निष्कारणोसौश्रृणुतेविदेहराट्सर्वामिमांवैमुनिगर्गसंहिताम् ॥ हृत्पुण्डरीकेवसतेस्यसर्वदाश्रीकृष्णचन्द्रोनिजभक्त वत्सलः ॥ ३३ ॥ ॥ श्रीगर्गउवाच ॥ ॥ इत्युक्त्वातमनुज्ञाप्यनारदोदेवदर्शनः ॥ सर्वेषांपश्यतांब्रह्मन्नम्बरङ्गतवान्मुनिः ॥ ॥ ३४ ॥ बहुलाश्वोमहाराजःश्रीकृष्णेलग्नमानसः ॥ सर्वतस्तुकृतार्थोभूच्छ्रुत्वेमांसंहितांहरेः॥ ३५॥ तवप्रश्नोपरिब्रह्मन्कथितासंहितामया॥ श्रुतावापाठिताकैश्चित्कोटियज्ञफलप्रदा ॥ ३६ ॥ ॥ शौनकउवाच ॥ ॥ धन्योहंचकृतार्थोहंत्वत्संगेनमहामुने॥ प्राप्तोस्मिपरमांभक्तिंश्री कृष्णप्रेमवर्द्धिनीम् ॥ ३७ ॥ विशदहृदिमुनीनांमानसेराजहंसःसकलसुखविराजन्नादमाधुर्य्यवंशः ॥ जगतिविचलदंशःशूरवंशावतंसःकर बलहतकंसःपातुवःसत्प्रशंसः ॥ ३८॥ इत्युक्त्वातान्मुनीन्सर्वान्गर्गाचार्योमहामुनिः ॥ अनुज्ञाप्यप्रसन्नात्मागन्तुमभ्युद्यतोभवत् ॥ ३९ ॥ नवसर्गविसर्गाढ्यांस्वर्गभृद्गर्गसंहिताम् ॥ चतुर्वर्गप्रदांमुक्त्वागर्गोगर्गाचलंययौ॥४०॥शरद्विकचपंकजश्रियमतीवविद्वेषकंमिलिन्दमुनिलेढि तंकुलिशकञ्जचिह्नावृतम् ॥ स्फुरत्कनकनूपुरंदलितभक्ततापत्रयंचलद्द्युतिपदद्वयंहृदिदधामिराधापतेः ॥ ४१ ॥ इति श्रीमद्गर्गाचार्यसंहि तायां विज्ञानखंडे नारदबहुलाश्वसंवादांतर्गतव्यासोग्रसेनसंवादे परब्रह्मनिरूपणंनामदशमोऽध्यायः ॥ १० ॥ इति श्रीविज्ञानखंडं समाप्तम् ॥ ॥ श्रीराधाकृष्णार्पणमस्तु ॥ ॥ श्रीवेङ्कटेश्वरार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



इति श्रीमद्गर्गसंहितायां विज्ञानखंडं समाप्तम् ।

इदं श्रीमद्गर्गाचार्यसंहितायां विज्ञानखंडं श्रीकृष्णदासात्मज-खेमराजेन स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये मुद्रितम् । सं० १९६६, शाके १८३१.



३५

इति श्रीमद्गर्गाचार्यसंहितायां विज्ञानखंण्डः समाप्तः।

## अथ श्रीमद्गर्गाचार्यसंहितायामश्वमेधखण्डं प्रारभ्यते ।

खण्डम् १०

श्रीकृष्णायनमः ॥ श्रीगोपीजनवल्लभायनमः॥नमःश्रीकृष्णचंद्रायनमःसंकर्षणायच ॥ नमःप्रद्युम्नदेवायानिरुद्धायनमोनमः॥१॥नारायणं 
नमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींव्यासंततोजयमुदीरयेत् ॥ २ ॥ ॥श्रीगर्गउवाच ॥ ॥ सभायामागतंवीक्ष्यरोमहर्षणनं
दनम् ॥ शौनकःप रिपप्रच्छप्रणिपत्याभिवाद्यच ॥ १ ॥ ॥ शौनकउवाच ॥ ॥ त्वन्मुखात्सर्वशास्त्राणिपुराणानिमहामते ॥ नानाह
रिचरित्राणिश्रुतानिविमलानिमे ॥ २ ॥ पुरागर्गेणकथितामममाग्रेगर्गसंहिता ॥ राधामाधवयोर्यस्यांमहिमाबहुवर्णितः ॥ ३ ॥ अ
द्याहंश्रोतुमिच्छामित्वत्तःकृष्णकथांपुनः ॥ सर्वदुःखहरांसौतेकथयस्वविचार्यच ॥ ४ ॥ ॥श्रीगर्गउवाच ॥ ॥ अष्टाशीतिसहस्रै
श्चमुनिभीरोमहर्षणिः ॥ पृष्टःप्रोवाचकृष्णस्यस्मरन्पादांबुजंकिल ॥ ५ ॥ ॥ सौतिरुवाच ॥ ॥ अहोशौनकधन्योसियस्यतेमति
रीदृशी ॥ कृष्णचंद्रपदद्वंद्वमकरंदस्पृहावती ॥ ६ ॥ संगमंवैष्णवानांचदेवाःश्रेष्ठंवदंतिहि ॥ पापक्षयकरायस्माच्छ्रीकृष्णस्यकथाभ
वेत् ॥ ७ ॥ अनंतंकृष्णचंद्रस्यचरितंकल्मषापहम् ॥ किंचिज्जानातिब्रह्माचतथाकिंचिदुमापतिः ॥ ८ ॥ मशकोमादृशःकोपिवासुदेवक
थार्णवे ॥ मोहितानवदिष्यंतियत्रब्रह्मादयःसुराः ॥ ९ ॥ श्रीगर्गोयादवेंद्रस्यह्युग्रसेनस्यभूपतेः ॥ अश्वमेधंक्रतुवरंदृष्ट्वाप्रत्याह
चैकदा ॥ १० ॥ धन्योराजायादवेंद्रोयश्चकारक्रतूत्तमम् ॥ श्रीकृष्णस्याज्ञयापुर्यांतेनाहंविस्मयंगतः ॥ ११ ॥ मयावैसंहितायांचकथाः
कृष्णस्यवर्णिताः ॥ परिपूर्णतमस्यापियथादृष्टायथाश्रुताः ॥ १२ ॥ तस्यांवैवाजिमेधस्यकथानकथितामया ॥ अद्याहंकथयिष्या
मिहयमेधकथांपुनः ॥ १३ ॥ यस्याःश्रवणमात्रेणनराणांहिकलौयुगे ॥ भुक्तिंमुक्तिंचभगवान्छीघ्रमेवप्रयच्छति ॥ १४ ॥ इत्युक्त्वाश्रीमु
निर्गर्गोकृष्णभक्त्याचशौनक ॥ उग्रसेनस्ययज्ञस्यचरितंसह्यचीक्लृपत् ॥ १५ ॥ हयमेधचरित्रस्यसुमेरुर्नामसुंदरम् ॥ धृत्वागर्गस्तुभग
वान्कृतकृत्योभवन्मुने ॥ १६ ॥ कृत्वाकथामष्टदिनेनश्रीमुनिर्यदोर्गुरुर्बुद्धिमतांवरःपरः ॥ अथाययौवैमथुरांहरेःपुरींवज्रंनृपेंद्रंचनिरीक्षितुं
खलु ॥ १७ ॥ अंबरादागतंतत्रगर्गंज्ञानवतांवरम् ॥ वीक्ष्योत्थायनमश्चक्रेवज्रनाभिर्द्विजैःसह॥ १८॥स्वर्णसिंहासनंदत्त्वावनिज्यतत्पदांबुजे॥ ॥२०
अर्चयित्वापुष्पसग्भिर्मिष्टान्नंचनिवेदयत् ॥ १९ ॥ तत्पादसलिलंपीत्वाशीर्षेधृत्वाकृतांजलिः ॥ भूत्वाश्रीवज्रनाभिस्तुश्यामःपंकजलोच

॥ १९ ॥ तत्पादसलिलंपीत्वाशीर्षेधृत्वाकृतांजलिः ॥ भूत्वाश्रीवज्रनाभिस्तुश्यामःपंकजलोच

नः ॥ २० ॥ पुष्टदेहोवृहद्बाहुर्वीरःषोडशवार्षिकः ॥ इतिहोवाचस्वगुरुंशतसिंहसमोद्भटः ॥ २१ ॥ ॥ वज्रनाभिरुवाच ॥ ॥ नमस्तु
भ्यंस्वागतंतेब्रह्मन्किंकरवामते ॥ मन्येत्वांभगवद्रूपंब्रह्मर्षीणांवरंपरम् ॥ २२ ॥ गुरुर्विधिर्गुरूरुद्रोगुरुरेवबृहस्पतिः ॥ गुरुर्नारायणःसाक्षात्त
स्मैश्रीगुरुवेनमः ॥ २३ ॥ नराणांचमुनिश्रेष्ठदर्शनंतवदुर्लभम् ॥ अस्माकंनितरांदेवविषयासक्तचेतसाम् ॥ २४ ॥ गर्गाचार्यकुलाचार्यते
जस्विन्योगभास्कर ॥ त्वद्दर्शनेनापिवयंपाविताःसकुटुम्बकाः ॥२५॥ श्रुत्वायदूनामृषभस्यवाक्यंमुनीन्द्रवर्यस्तुमहान्महात्मा ॥ स्मरन्हरेः
श्रीचरणारविंदंमुदानृपेंद्रंनिजगादसद्यः ॥ २६ ॥ युवराजमहाराजयदुवंशशिरोमणे ॥ त्वयासाधुकृतंसर्वंपालिताःपृथिवीजनाः ॥२७॥ स्था
पितंचत्वयावत्सधर्मंवैपृथिवीतले ॥ विष्णुरातश्चतेमित्रंनृपाश्चान्येवशास्मृताः ॥ २८ ॥ धन्यस्त्वंराजशार्दूलधन्यातेमथुरापुरी ॥ धन्या
श्चतेप्रजासर्वाधन्यावैव्रजभूश्चते ॥ २९ ॥ भुंक्ष्वभोगान्भजन्कृष्णंबलंप्रद्युम्नमेवच ॥ अनिरुद्धंचनिःशंकोभूत्वाराज्यंकुरुनृप ॥ ३० ॥
॥ श्रीसूतउवाच ॥ ॥ इतिवाक्यंसमाकर्ण्यगर्गस्यनृपसत्तमः ॥ संकर्षणंचश्रीकृष्णंपितरंचपितामहम् ॥ ३१ ॥ विरहेणस्मरन्राजाचाश्रुपू
र्णमुखोभवत् ॥ तंनृपंदुःखितंदृष्ट्वास्थितंभूमावधोमुखम् ॥ गर्गस्तुविस्मितःप्राहदुःखंप्रशमयन्निव ॥ ३२ ॥ ॥ गर्गउवाच ॥ ॥ कस्मा
द्रोदसिराजेंद्रभयंकिंतेमयिस्थिते ॥ कारणंस्वस्यदुःखस्यवदसर्वंममाग्रतः ॥ ३३ ॥ इतितद्वचनंश्रुत्वाराजानंप्राहदुःखितः ॥ पुनःपृष्टश्च
गुरुणाप्राहगद्गदयागिरा ॥३४॥ राजोवाच ॥ मांत्यक्त्वायादवाःसर्वेकृष्णसंकर्षणादयः ॥ गतादेवपरंलोकंतेनाहंदुःखितोऽभवम् ॥ ३५ ॥
स्वाम्यमात्यसुहृद्राष्ट्रकोशदुर्गबलानिच ॥ एकाकिनश्चमेब्रह्मन्नेतेप्रीतिकरानहि ॥ ३६ ॥ मयाचरित्रंकृष्णस्यनदृष्टंनश्रुतंवद ॥ दृष्टंयादवसं
हारंतस्माद्दुःखंनयातिमे ॥ ३७ ॥ चतुर्व्यूहेनहरिणायापुरीशोभितापुरा ॥ सापिमग्नासमुद्रेतुकृष्णोभक्तेःपरंगतः ॥३८॥ कस्यहेतोःकिमर्थंच
जीवामिशिष्यवत्सल ॥ अद्ययास्यामिगहनंराज्यंकर्तुंनमेमनः ॥ ३९ ॥ ॥ सूतउवाच ॥ ॥ ततोमुनीनामृषभोमहात्माश्रुत्वागिरंयादवस
त्तमस्य ॥ संश्लाघ्यदुःखंशमयन्हितुष्टोगर्गोऽब्रवीद्भूपतिंवज्रनाभिम् ॥४०॥ ॥ गर्गउवाच ॥ ॥ वृष्णिप्रवरमद्वाक्यंशृणुशोकविनाशनम् ॥ सर्वं
पापहरंपुण्यंसावधानतयाशुभम् ॥४१॥ योराजतेकुशस्थल्यांकृष्णचंद्रोहरिःपुरा ॥ विराजतेसमसर्वत्रभक्त्यातंपश्यभूपते ॥ ४२ ॥ अद्यतेकथ

 यिष्यामिभुक्तिमुक्तिप्रदांकथाम् ॥ शृणुत्वंवसुधानाथश्रीकृष्णबलयोःपराम् ॥४३॥ सूतउवाच ॥ इत्युक्त्वाभगवान्गर्गोवज्रायस्वांचसंहिताम् ॥ 
कथयामासविप्रेंद्रपुण्यांनवदिनैःकिल ॥ ४४ ॥ इतिश्रीमद्गर्गाचार्यसंहितायामश्वमेधखण्डेगर्गवज्रनाभिसंवादेप्रथमोऽध्यायः ॥ १ ॥
॥ सूतउवाच ॥ इतिश्रुत्वावज्रनाभिर्मुनेःश्रीगर्गसंहिताम् ॥ भृशंमुमोदाथगुरुंप्रत्युवाचप्रणम्यच ॥ १ ॥ अद्यश्रीकृष्णचंद्रस्यचरित्रंतुश्रुतं 
मया ॥ त्वन्मुखान्मुनिशार्दूलतेनदुःखाश्रमेगताः ॥२॥ मेमनस्तुकृपानाथपुनःश्रोतुंहरेर्यशः ॥ अतृप्तस्यास्तिकृष्णस्यवदस्वचरितंपरम् ॥
॥ ३ ॥ द्वार्वत्यामुग्रसेनेनहयमेधःकृतःपुरा ॥ तच्चरित्रंवदमुनेकिंचित्पूर्वंश्रुतंमया ॥ ४ ॥ अनुव्रतानांशिष्याणांसुतानांचमुनीश्वर ॥ ब्रूयुर्गु
तमनापृष्टंगुरवःकरुणामयाः ॥ ५ ॥ ॥ श्रीसूतउवाच ॥ ॥ एवंभाषितमाकर्ण्ययादवानांगुरुर्मुनिः ॥ प्रीतःप्रत्याहराजेंद्रंस्मरन्पादा
बुजंहरेः ॥ ६ ॥ श्रीगर्गउवाच ॥ ॥ धन्यस्त्वंकृष्णचंद्रस्यपादयोर्भक्तिरीदृशी ॥ जातातेयादवश्रेष्ठदिष्ट्यातुदुर्लभानृणाम् ॥७॥ कथयां
म्यत्रतेराजन्नितिहासंशृणुष्ववै ॥ यस्यश्रवणमात्रेणसर्वपापैःप्रमुच्यते ॥ ८ ॥ द्वापरेपीडिताराजन्धराभारेणपापिनाम् ॥ ब्रह्माग्रेकथयामा
ससोपिश्रुत्वाहरिंययौ ॥ ९ ॥ गत्वाचकथयामासश्रुत्वाश्रीराधिकापतिः ॥ महीमाश्वास्यदेवैश्चभारंहर्तुंमनोदधे ॥ १० ॥ विवाहोवसुदेव
स्यमधुपुर्यामभूत्ततः ॥ कंसबोधनषट्पुत्रवधःकंसभयंनृप ॥ ११ ॥ मायाज्ञामनुदेवादिस्तुतिःकृष्णसमुद्भवम् ॥ वर्णनंरूपकृष्णस्यवसु
देवस्यसंस्तुतिः ॥ १२ ॥ देवक्यादिपुराकृत्यकथनंजगदीशितुः ॥ गोकुलंनयनंकन्यापातनंतद्विभाषणम् ॥ १३॥ सांत्वनंवसुदेवस्यमोच
नंभार्ययासह ॥ कंसदुर्मंत्रदैत्येषुसाधुबालउपद्रवः ॥ १४ ॥ प्रादुर्भूतेव्रजेकृष्णेव्रजराजमहोत्सवः ॥ मथुरागमनंनंदवसुदेवसमागमः॥१५॥
पूतनासुपयःपानंनंदगोपादिविस्मयः ॥शकटव्यत्ययेदैत्यचक्रवातवधःशिशोः ॥ १६ ॥ संलालनेमुखेधात्र्याजृंभणेविश्वदर्शनम् ॥ रामके
शवयोर्नाम्नोःकारणंकेलिरेतयोः ॥ १७ ॥ धौर्त्यंगोपवधूगेहेप्रसंगान्मृदभक्षणम् ॥ दर्शनंविश्वरूपस्यनंदभाग्यपुराकथा ॥ १८ ॥ चौर्यंहैयं
गवस्याथबंधनंदामभिर्बलात् ॥ यमलार्जुनयोःशापोभंगश्चैवस्तुतिस्तयोः ॥ १९ ॥ बालक्रीडोपनंदादिमंत्रणंगमनंततः ॥ वृन्दावने 

तयोःक्रीडावयस्यैर्वत्सचारिणोः ॥ २० ॥ वत्सासुरस्यचवधोबकाद्यसुरयोरपि ॥ भोजनंसखिभिस्तीरेयमुनायाहरेर्मुदा ॥ २१ ॥ वत्सा

धाहरणंधात्राकृष्णत्वंवत्सपालयोः ॥ ब्रह्मणोगमनंपश्चात्स्तुतिःकृष्णरतिर्गतिः ॥ २२ ॥ गोचारणेमहाक्रीडाधेनुकादिवधस्तथा ॥ व्रज
आगमनंकृष्णगोपीनेत्रमहोत्सवः ॥ २३ ॥ मृतान्विषांभःपानेनगोपान्हरिरजीवयत् ॥ कालीयदमनेस्तोत्रंतद्भार्याणांप्रलापनम् ॥ २४ ॥
ह्रदेकालीयसंबंधकथनंवह्निमोचनम् ॥ क्रीडाप्रलंबनिधनंदावाग्नेर्मोचनंगवाम् ॥२५॥ वर्षाशरद्वर्णनंचगोपीनांवचनामृतम् ॥ व्रतंगोकुलक
न्यानांवस्त्राणांहरणंमुदा ॥ २६ ॥ वनभाग्यकथागोपप्रार्थनाप्रेषणंमखे ॥ विप्रभार्याप्रसादश्चपश्चात्तापोद्विजन्मनाम् ॥२७॥ यागभंगोमहें
द्रस्यधृतिर्गोवर्द्धनस्यच ॥ सुरेंद्रगर्वहरणगर्गजातस्यवर्णनम्॥२८॥ गोपशंकापगमनमिन्द्रधेन्वाभियाचितम् ॥ नंदस्यमोक्षणंगोपवैकुंठगम
नंततः ॥ २९ ॥ पंचाध्यायनिशाक्रीडासर्पान्नंदस्यमोक्षणम् ॥ शंखचूडवधःपश्चाद्गोपीगीतंवृषार्दनम् ॥ ३० ॥ कंसनारदसंवादःकंसाक्रूरक
थाततः ॥ केशिनोनिधनंकृष्णान्नारदर्षिकथाततः ॥ ३१ ॥ व्योमासुरवधोक्रूरागमनंगोकुलेषुच ॥ दर्शनान्नंदोत्थात्सारोमांचोगद्गद
द्गिरः ॥ ३२ ॥ संवादोरामकृष्णाभ्यांवर्णितंकंसचेष्टितम् ॥ रामकृष्णप्रयाणंचतथागोपीप्रलापनम् ॥ ३३ ॥ मथुरागमनंमध्येह्रदेकृष्णस्य
दर्शनम् ॥ स्तुतिःपुरागतिःपश्चाद्दर्शनंपुरसंपदः ॥३४॥ रजकस्यशिरश्छेदोवायकस्यवरादयः ॥ सुदाम्नोवरदानंचकुब्जासंदर्शनंहरेः॥३५॥
धनुर्भंगःसैन्यवधःकंसदुर्हेतुदर्शनम् ॥ रंगोत्सवःकुवलयापीडयुद्धविघातनम् ॥ ३६ ॥ दर्शनंरामकृष्णस्यपौराणांप्रेमवर्द्धनम् ॥ मल्ला
नांनिधनंरंगेकंसस्यसहबंधुभिः ॥ ३७ ॥ पित्रोश्चसांत्वनंसर्वसुहृदांचैवतोषणम् ॥ उग्रसेनाभिषेकंचनंदादिव्रजप्रेषणम् ॥ ३८ ॥ ईशद्विजा
तिसंस्कारंपठनंचगुरोर्गृहे ॥ मृतपुत्रप्रदानंचगुरोःपंचजनार्दनम् ॥ ३९ ॥ पुनरागमनंशौरेर्मधुपुर्यांमहोत्सवः ॥ उद्धवप्रेषणंगोपीविलापप
रिसांत्वनम् ॥ ४० ॥ मेलनार्थंतुकृष्णस्यागमनंनंदगोकुले ॥ पुनर्वैकोलदैत्यस्यवधःपश्चात्प्रकीर्तितः ॥ ४१ ॥ कुब्जारतिस्तथाक्रूरप्रेषणं
गजसाह्वये ॥ पांडवेषुचवैषम्यंधृतराष्ट्रस्यबोधनम् ॥ ४२ ॥ इति श्रीमद्ग॰सं॰अश्वमेधखण्डेकृष्णलीलावर्णनंनामद्वितीयोऽध्यायः॥ २ ॥
॥ गर्गउवाच ॥ जामातृवधसंतप्तजरासंधचमूवधः ॥ बहुशःसेनयोर्युद्धेद्वारिकादुर्गकारणम् ॥ १ ॥ यवनस्यवधंदृष्ट्वामुचकुंदस्यसंस्तुतिः ॥
वरंदत्वाततोम्लेच्छवधंकृत्वाधनेततः ॥२॥ नीयमानेवनेदग्धजरासंधात्पलायनम् ॥ रैवतोरेवतींकन्यांबलदेवसमर्पणम् ॥ ३ ॥ रुक्मिणीप्रि

 यसंदेशश्रवणादखिलान्नृपान् ॥ निर्जित्यनिर्गमोगेहेहृत्वाताअंबिकागृहात् ॥ ४ ॥ नृपैःसांत्वनंचैद्यस्यततोरुक्मीसमागमः ॥ युद्धापेक्षाप
 राधाद्वैमुंडनंतस्यकृष्णतः ॥ ५ ॥ रुक्मिणीदुःखशमनंरामवाक्याच्चमोक्षणम् ॥ ततोविवाहोरुक्मिण्याविधिवत्स्वपुरेमुदा ॥ ६ ॥ प्रद्युम्नोत्प 
त्तिकथनंहरणंसूतिकागृहात ॥ मायावत्योक्तवृत्तांतंशंबरस्यवधस्ततः ॥ ७ ॥ पुनरागमनंगेहेसंतोषोद्वारकौकसाम् ॥ सूर्यात्स्यमंतक 
प्राप्तिर्याचनंतस्यवैहरेः ॥ ८ ॥ तत्संबंधात्प्रसेनस्यवधोऽकीर्तिर्हरेस्तथा ॥ तन्मार्जनाच्चऋक्षस्यगृहेषुगमनंतयोः ॥ ९ ॥ युद्धंज्ञात्वालोकना
थंजांबवत्यासमर्पणम् ॥ सत्राजितायचमणिःप्राप्ताश्रीहरिणाबिलात् ॥ १० ॥ विवाहःसत्यभामायाःपारिबर्हेतथामणिः ॥ रामेणसहकृष्णस्य
गमनंहस्तिनापुरे ॥ ११ ॥ अक्रूरकृतवर्मभ्यांशतधन्वातुप्रेरितः ॥ सत्राजितंजघानाशुसोपिकृष्णेनपातितः ॥ १२ ॥ रामस्तुमिथिला
यांचगदाशिक्षासुयोधने ॥ अक्रूरेमणिदानंचशक्रप्रस्थेहरिर्गतः ॥ १३ ॥ कालिंद्यासंगतिःशौरेर्विवाहःस्वपुरेततः ॥ विवाहोमित्रविंदाया
सत्यायाश्चतथैवच ॥ १४ ॥ भद्रायालक्ष्मणायाश्चविवाहोहरिणाततः ॥ पारिजातंतुसत्यायैशक्रंजित्वाददौहरिः ॥ १५ ॥ वज्रनाभिरुवाच ॥
प्रियायैदत्तवान्कस्माच्छक्रंजित्वासुरद्रुमम् ॥ श्रीकृष्णस्तत्कथांसर्वांमुनेमेब्रूहिविस्तरात् ॥ १६ ॥ ॥ श्रीगर्गउवाच ॥ ॥
पारिजातैककुसुमेचानीतेनारदात्कदा ॥ दत्तेसतिश्रीरुक्मिण्यैसत्यातुदुःखिताभवत् ॥ १७ ॥ तांदृष्ट्वाकुपितांप्राहक्रोधागारगतांहरिः ॥
माशोचंकुरुदास्यामिपारिजातद्रुमंचते ॥ १८ ॥ ॥ गर्गउवाच ॥ ॥ तदैवकथितंसर्वंकृष्णाग्रेभौमचेष्टितम् ॥ शक्रेणश्रुत्वाभगवान्प्रा
हपश्यन्कृतांजलिम् ॥ १९ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ मत्प्रियांदुःखितांपश्यरुदंतींवृत्रसूदन ॥ पारिजातस्यवृक्षार्थेकिंकरिष्याम्यहं
वद ॥ यदास्यैपारिजातस्यवृक्षंदास्यसित्वंहरे ॥ २० ॥ तदाभौमंससैन्यंचहनिष्यामिनसंशयः ॥ कृष्णभाषितमाकर्ण्यप्रहसन्प्राहवासवः ॥
॥ २१ ॥ ॥ इंद्रउवाच ॥ ॥ पारिजातद्रुमाःसर्वेवर्ततेनंदनेचये ॥ गृहाणतान्वतःकृष्णस्त्वंहत्वानरकासुरम् ॥ २२ ॥ तथास्तुचोक्त्वा
भगवान्सत्यभामासमन्वितः ॥ गरुडस्कंधमारुह्योप्राग्ज्योतिषपुरंययौ ॥ सत्यभामांहरिःप्राहस्वर्गमिंद्रेगतेसति ॥ २३ ॥ सत्योवाच ॥ पूर्वं 
गृहाणशक्रात्त्वंद्रुमराजंजगत्पते ॥ २४ ॥ कार्येभूतेसतिहरेनकरिष्यतित्वत्प्रियम् ॥ प्रियावाक्यंसमाकर्ण्यप्रियःप्राहप्रियंवचः ॥ २५ ॥

॥ ॥ श्रीकृष्णउवाच ॥ ॥ सपारिजातंयदिनप्रदास्यतिप्रयाच्यमानस्तुमयामरेश्वरः ॥ ततःशचीव्याप्तुदितानुलेपनेगदांविमोक्ष्यामिपुरं
दरोरसि ॥ २६ ॥ इत्युक्त्वाभगवान्कृष्णोभौमासुरपुरंगतः ॥ नानादुर्गैःसप्तभिश्चवेष्टितंचमहासुरैः ॥ २७ ॥ सर्वान्बिभेददुर्गान्वैगदाचक्र
शरादिभिः ॥ जघानमुरुदैत्यंचतत्पुत्रान्छस्त्रसंयुतान् ॥ २८ ॥ शस्त्रास्त्रवर्षंमुंचंतंससैन्यंनरकंहरिः ॥ क्षिप्त्वाचक्रंद्विधाचक्रेगरुडेनजघानच
॥ २९ ॥ हत्वाभौमंजगन्नाथोवररत्नानियादवः ॥ जग्राहतत्रकन्यानांसमूहंवैददर्शह ॥३०॥ दैत्यसिद्धनृपाणांचसहस्राणिचषोडश ॥ शता
धिकानिकन्याश्चप्रेषयामासस्वांपुरीम् ॥ ३१ ॥ गृहीत्वाथमणिंछत्रंदेवमातुश्चकुंडले ॥ पारिजातद्रुमार्थेवैययाविंद्रपुरींहरिः ॥ ३२ ॥ इति
श्रीगर्गाचार्यसंहितायामश्वमेधखण्डेकृष्णकथावर्णनंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ श्रीगर्गउवाच ॥ ॥ गत्वास्वर्गंतु
शक्रायदत्वाछत्रंमणिंतथा ॥ अदित्यैकुंडलेकृष्णोदत्वाभिप्रायमब्रवीत् ॥ १ ॥ अभिप्रायंहरेर्ज्ञात्वावासवोनददौद्रुमम् ॥ देवाञ्जित्वातदा
पारिजातंजग्राहमाधवः ॥ २ ॥ ॥ सूतउवाच ॥ ॥ इतिश्रुत्वाकथांराजायादवोविस्मयान्वितः ॥ पप्रच्छस्वगुरुंभूयःश्रद्दधानोहरेर्गुणे
॥ ३ ॥ ॥ वज्रनाभिरुवाच ॥ ॥ ब्रह्मञ्छक्रस्तुदेवेन्द्रोजानन्कृष्णंहरिंपरम् ॥ अपराधंहिकृतवान्सकथंब्रूहितत्त्वतः ॥ ४ ॥ कृष्णाग्रेकथि
तंसत्यभामयाशक्रचेष्टितम् ॥ तस्मान्मेविस्तराद्ब्रुहिमिंद्रमाधवयोर्विद ॥ ५ ॥ ॥ गर्गउवाच ॥ ॥ अदित्यासंस्तुतःकृष्णोशक्रवाक्याच्च
नंदनम् ॥ वनंगत्वापारिजातान्सददर्शबहून्द्रुमान् ॥६॥ तेषांमध्येमहावृक्षंमंजिरीपुंजधारिणम् ॥ क्षीरोदमथनाज्जातंपद्मगंधसमन्वितम् ॥७॥
सुराणांसुखदंताम्रपल्लवैःपरिवेष्टितम ॥ वनेविभूषणंदिव्यंवरंस्वर्णसमत्वचम् ॥ ८ ॥ तंदृष्ट्वामाधवंप्राहसत्यभामाचमानिनी ॥ एनंगृह्णाम्यहं
कृष्णश्रेष्ठंसर्ववनेद्रुमम् ॥९॥ इत्युक्तःप्रिययोत्पाट्यपारिजातंगरुत्मति ॥ लीलयारोपयामासप्रहसञ्जगदीश्वरः ॥१०॥ तदैवकुपिताःसर्वेवनपा
लाःसमुत्थिताः ॥ धनुर्बाणधराकृष्णमूचुःप्रस्फुरिताधराः ॥११॥ इन्द्रप्रियायावृक्षश्चहृतःकस्मात्त्वयानर ॥ यदृच्छयाकिलास्माकंतृणीकृत्यक
यास्यसि ॥१२॥ इंद्राणीप्रीतयेदेवैःपुराह्युदधिमंथने ॥ उत्पादितोयंनक्षेमीगृहीत्वैनंभविष्यसि ॥१३॥ गिरीणांयेनसर्वेषांपक्षाःपूर्वंविनाशि
ताः ॥ तांकिंवृत्रहणंवीरंजित्वावृक्षंनयिष्यसि ॥१४॥ तस्माद्गच्छमहावीरपारिजातंविहायच ॥ नदास्यामोद्रुमंतुभ्यंशक्रस्यानुचरावयम् ॥१५॥

यदादास्यतितुभ्यंवैपारिजातंपुरंदरः ॥ ननिषेधंकरिष्यमःवनपालावयंतदा ॥ १६ ॥ तेषांभाषितमाकर्ण्यसत्यभामारुषान्विता ॥ तूष्णींभू
तेसतिहरावभीताप्राहतान्नृप ॥ १७ ॥ ॥ सत्यभामोवाच ॥ ॥ काशचीपारिजातश्चकःशक्रोवासुरेश्वरः ॥ सामान्यःसर्वलोकानां
यदीशोमृतमंथने ॥ १८ ॥ समुत्पन्नःसुरःकस्मादेकोगृह्णातिवासवः ॥ यथासुधायथैवेंदुर्यथाश्रीर्वनरक्षिणः ॥ १९ ॥ सामान्यःसर्वलोक
स्यपारिजातस्तथाद्रुमः ॥ भर्तृबाहुमहागर्वारुणद्ध्येनंमृषाशची ॥ २० ॥ तत्कथ्यतामलंक्षांत्यासत्याहारप्रतिद्रुमम् ॥ कथ्यतांचद्रुतंगत्वा
पौलोम्यावचनंमम ॥ २१ ॥ सत्यभामावदत्येतदतिगर्वोद्धताक्षरम् ॥ यदित्वंदयिताभर्तुर्यदिवश्यःपतिस्तव ॥ २२ ॥ मद्भर्तुर्हरतोवृक्षंतत्का
रयनिवारणम् ॥ जानामितेपतिंशक्रंयुष्माज्ञानामितत्त्वतः ॥ पारिजातंतथाप्येनंमानुषीहारयामिते ॥ २३ ॥ ॥ गर्गउवाच ॥ ॥ कृष्ण
प्रियायावचनंवनपालानिशम्यच ॥ २४ ॥ इंद्राणीनिकटंगत्वाप्रोचुःसर्वंयथोदितम् ॥ रक्षकाणांवचःश्रुत्वाशचीप्राहरुषान्विता ॥ कृष्णंनि
वारणार्थायनयास्यंतंपुरंदरम् ॥ २५ ॥ शच्युवाच ॥ मदीयंपारिजातंवैमाधवेनबलीयसा ॥ २६ ॥ गृहीतंस्वप्रियार्थेवैत्वांतृणीकृत्यवज्रिणम् ॥
तस्मान्मोचयवृक्षेशंपाकसूदनवृत्रहन् ॥ २७ ॥ सत्यभामावशंकृष्णंविनिर्जित्यमहारणे ॥ त्वयावैपूर्वमद्रीणांपक्षावज्रेणनाशिताः ॥ २८ ॥
भयंविसृज्ययुद्धायगच्छतस्मात्सुरैर्वृतः ॥ इतिश्रुत्वाशचीवाक्यंशक्रोनमुचिसूदनः ॥ २९ ॥ नचकारतुयुद्धायमनोभयसमन्वितः ॥ तत
श्चबहुशःपत्न्याप्रेरितःकोपयुक्तया ॥ तदाकोपेनश्रीकृष्णंनिंदन्प्राहमदान्वितः ॥ ३० ॥ इंद्रउवाच ॥ येनतेपारिजातंवैगृहीतंसुन्दरानने ॥
॥ ३१ ॥ मृधेतंपातयिष्यामिवज्रेणशतपर्वणा ॥ इत्युक्त्वावासवोराजन्नारुह्यैरावणंगजम् ॥ ३२ ॥ शुंडादंडैस्त्रिभिर्युक्तंरक्तकंबलमंडितम् ॥ च
तुर्भिःशोभितंदंतैर्हिमाद्रिसदृशंशुभम् ॥ ३३ ॥ स्वर्णशृंखलयाजुष्टंशुशुभेनिर्ज्जरैर्वृतः ॥ तथामरुद्गणाःसर्वेयमाग्निवरुणादयः ॥ ३४ ॥ रुद्रा
श्चद्वादशात्मानोयसवोधनदादयः ॥ विद्याधराश्चगंधर्वाःसाध्यापितृगणास्तथा ॥ ३५ ॥ त्रयस्त्रिंशत्कोटिसंख्याःशक्रस्यानुचराःसुराः ॥
एतसमागताःक्रुद्धायोद्धुंश्रीकृष्णसंमुखे ॥ ३६ ॥ आहूता[illegible] ॥ नथातुनारदेनापिकेचिद्देवाश्चप्रेषिताः ॥ ३७ ॥ ॥२०

ततःपरिघनिस्त्रिंशगदाशूलपरश्वधैः ॥ बभूवुस्त्रिदशाःसज्जाःशक्रेवज्रकरेस्थिते ॥ ३८ ॥ इतिश्री०पारिजातहरणंनामचतुर्थोऽध्यायः ॥ ४ ॥

॥ श्रीगर्गउवाच ॥ अथदृष्ट्वाकृष्णचंद्रोगजेंद्रोपरिशोभितम् ॥ इंद्रंदेवपरीवारंयुद्धायसमुपस्थितम्॥ १॥शंखंदध्मौस्वयंकृष्णःशब्देनापूरयन्दिशः ॥ मुमोचचशरव्रातंसहस्रायुधसंमितम् ॥ २ ॥ ततोदिशश्चगगनंदृष्ट्वाबाणशतान्वितम् ॥ मुमुचुर्विबुधाःसर्वेशरांश्चक्रायुधोपरि ॥ ३ ॥ एकैकमस्त्रंशस्त्रंचसुरैर्मुक्तंसहस्रधा ॥ स्वबाणैर्भगवान्कृष्णोचिच्छेदनृपलीलया ॥ ४॥ पाशिनश्चाहिपाशंचचिच्छिदत्पन्नगाशनः ॥ यमराजेनप्रहितंदंडंलोकभयंकरम् ॥ ५ ॥ गदयापातयामासभूमौकृष्णस्तुलीलया ॥ चक्रेणधनदस्यापिशिबिकांतिलशोबहु ॥ ६ ॥ चकारकृष्णःसूर्यंचकोपदृष्ट्याहतौजसम् ॥ महाग्निमागतंवीक्ष्यमुखेनचपपौहरिः॥७॥ ततोरुद्रगणैर्मुक्तान्छूलांश्चिच्छेदवैरुषा ॥ चक्रेणचहरीरुद्रान्पातयामासबाहुना ॥ ८ ॥ ततोमरुद्गणादेवाःसाध्याविद्याधरास्तथा ॥ मुमुचुर्बाणपटलान्माधवोपरिभूपते ॥ ९ ॥ शरवर्षंप्रमुंचंतींसेनांसवांसमागताम् ॥ विलोक्यसत्यभामातुभयंप्रापतदानृपे ॥ १० ॥ तांभीतांप्राहगोविंदोसत्येत्वंमाभयंकुरु ॥ आगतांशक्रसेनांवैहनिष्यामिनसंशयः ॥ ११ ॥ इत्युक्त्वाभगवान्क्रुद्धोबाणैःशार्ङ्गधनुश्च्युतैः ॥ ताडयामासविबुधान्क्रोष्टून्सिंहोनखैर्यथा ॥१२॥ ततःप्रत्याहगरुडंकंसहाकोपपूरितः ॥ वैनतेयत्वयायुद्धंनकृतंरणमंडले ॥ १३ ॥ तच्छ्रुत्वातुसभार्यंचस्कंधेसंधारयन्हरिम् ॥ कोपाद्विष्णुरथःसद्यःपक्षाभ्यांनखरांकुरैः ॥ १४ ॥ तुंडेनभक्षयन्देवाँस्ताडयन्विचचारवै ॥ ततश्चदुद्रुवुर्देवाहन्यमानागरुत्मता ॥ १५ ॥ अथबाणैर्महीपालइंद्रोपेंद्रौमहाबलौ ॥ परस्परंचवर्षंतौधाराभिरिवतोयदौ ॥ १६ ॥ ऐरावतेनराजेंद्रसुपर्णोयुयुधेतथा ॥ गजस्तार्क्ष्यंतुदशनैर्जवानगरुडस्तथा ॥ १७ ॥ गजंतुतुंडपक्षैश्चछिन्नभिन्नंचकारह ॥ सुरैःसमस्तैर्युयुधेवज्रिणाचयदूत्तमः ॥ १८ ॥ भगवान्मघवंतंवैमघवान्मधुसूदनम् ॥ बाणैर्ववृषतुःक्रुद्धावन्योन्यविजिगीषिणौ ॥ १९ ॥ छिन्नेष्वशेषबाणेषुशस्त्रेष्वस्त्रेषुचत्वरम् ॥ वज्रंजग्राहमघवाभगवांश्चक्रमेवच ॥ २० ॥ हाहाकारस्तदैवासीत्त्रैलोक्येसचराचरे ॥ वज्रचक्रधरौवीक्ष्यसुरेश्वरनरेश्वरौ ॥ २१ ॥ जग्राहवामहस्तेनक्षिप्तंवज्रंचवज्रिणा ॥ नमुमोचहरिश्चक्रंतिष्ठतिष्ठेत्युवाचच ॥ २२ ॥ लज्जितंवज्रहीनंचतार्क्ष्येणक्षतवाहनम् ॥ भीतंपलायमानंचालोक्यसत्याजहासवै ॥ २३ ॥ शचीवीक्ष्यागतंशक्रंप्राहकोपेनपूरिता ॥ एकाकिनामाधवेनप्रधनेतुविनिर्जितः ॥ २४ ॥ महासैन्ययुतस्त्वंवैतस्मात्तेधिग्बलंसुर ॥ अहंगत्वारणेकृष्णंविनिर्जित्यसुरद्रु

मम् ॥ मोचयामिनसंदेहोपश्यत्वंचसुराधम ॥ २५ ॥ ॥ श्रीगर्गउवाच ॥ ॥ इत्युक्त्वाशिबिकांशीघ्रमारुह्यकुपिताशची ॥ २६ ॥ यो
द्धुकामाययौराजन्पुनःसुरगणैर्वृता ॥ तामागतांवीक्ष्यकृष्णोयुद्धायनदधेमनः ॥ २७ ॥ ततःसत्याहरिंप्राहरुषाप्रस्फुरिताधरा ॥ अद्ययुद्धं
करिष्यामिशच्यासार्द्धमहंप्रभो ॥२८॥ तच्छ्रुत्वाप्रहसन्कृष्णोदत्वातस्यैसुदर्शनम् ॥ स्थापयित्वासुपर्णेचजगाहाद्युतरुंस्वयम् ॥२९॥ यदा
हरिंप्रियाक्रुद्धायुद्धंकर्तुंसमागता ॥ तदासर्वत्रब्रह्मांडेचासीत्कोलाहलोमहान् ॥ ३० ॥ भयंप्रापुःसुराःसर्वेविधिशक्रादयोनृप ॥ तदैवगी
ष्पतीराजन्नाययौशक्रचोदितः ॥ आगत्यवारयामासयोद्धुकामांपुलोमजाम् ॥ ३१ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ शचिशृणुमदीयंवैवच
नंबहुबुद्धिदम् ॥ ३२ ॥ कृष्णस्तुभगवान्साक्षात्सत्यभामाचश्रीसमा ॥ तयासार्द्धंकथंयुद्धंकरिष्यसिहरिप्रिये ॥ ३३ ॥ तस्मादवज्ञांसंत्य
ज्यकृमुक्षेत्वंगृहंत्रज ॥ सत्यांवैपारिजातंचदत्वारक्षसुरान्भयात् ॥ ३४ ॥ यद्भयाद्वातिश्वसनोवह्निर्दहतियद्भयात् ॥ भयाद्यन्मृत्युश्चरति
ब्रह्मोत्रजतियद्भयात ॥ ३५ ॥ यस्माद्बिभेतिब्रह्मावैकपर्दीचपुरंदरः ॥ तंनजानासिश्रीकृष्णंभौमंहत्वासमागतम् ॥ ३६ ॥ श्रीगर्गउवाच ॥
इतिश्रुत्वाशचीवाक्यंभामांकृष्णंचलज्जया ॥ नत्वाजगामसदनमात्मानंचविगर्हयन् ॥ ३७ ॥ ततःशक्रंनमंतंचक्रीडितंवीक्ष्यमाधवः ॥ उ
वाचशक्रमाक्रीडांगतेचभिदुरेकुरु ॥ ३८ ॥ द्वंद्वयुद्धेहिचैकस्यभविष्यतिपराजयः ॥ इतिश्रुत्वाचप्रोवाचवचनंपाकशासनः ॥ ३९ ॥ इंद्र
उवाच ॥ यस्मिञ्जगत्सकलमेतदनादिमध्येयस्माद्यतश्चनभविष्यतिसर्वभूतात् ॥ तेनोद्भवप्रलयपालनकारणेनक्रीडाकथंभवतिदेविनिरा
कृतस्य ॥ ४० ॥ सकलभुवनसूतेर्मूर्तिरन्यातिसूक्ष्माविदितसकलवेद्यैर्जायतेयस्यनान्यैः ॥ तमजमकृतमीशंशाश्वतंस्वेच्छयैनंजगदुप
कृतिमर्त्यंकोविजेतुंसमर्थः ॥ ४१ ॥ इत्युक्त्वासत्यभामांवैशक्रस्तूष्णींबभूवच ॥ ततःप्रहस्यभगवान्प्राहगंभीरयागिरा ॥ ४२ ॥ भवान्दे
वाधिपःशक्रवयंभूमिनिवासिनः ॥ क्षंतव्यमपराधंतद्भवताचकृतंमया ॥ ४३ ॥ भोशक्रपारिजातश्चनीयतामुचितास्पदम् ॥ गृहीतोयंमया
सत्यभामावचनकारणात् ॥ ४४ ॥ गृहाणकुलिशंचेदंप्रहितंयत्त्वयामयि ॥ तवैवास्त्रंशुनासीरतद्वैरिषुनिवारणम् ॥ ४५ ॥ ॥ इंद्रउवाच ॥
कृष्णकिंमोहयसिमांनरोहमितिकिंवद ॥ जानीमस्त्वांजगन्नाथंनतुसूक्ष्मविदोवयम् ॥ ४६ ॥ योसिसोसिजगत्त्राणप्रवृत्तोनाथसंस्थितिः ॥

